## ( अभिमन्यु वध-पर्व )

## (प्रतिज्ञापर्व)



## (जयद्रथ-वधपर्व)

—०—

अथ चतुरधिकनवतितमोऽध्यायः ॥ ९४ ॥

सञ्जय उवाच — स्वसैन्यं निहतं दृष्ट्वा राजा दुर्योधनः स्वयम् ।
अभ्यधावत संक्रुद्धो भीमसेनमरिन्दमम् ॥ १ ॥
प्रगृह्य सुमहच्चापमिन्द्राशनिसमस्वनम् ।
महता शरवर्षेण पाण्डवं समवाकिरत् ॥ २ ॥
अर्धचन्द्रं च सन्धाय सुतीक्ष्णं लोमवाहिनम् ।
भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ॥ ३ ॥
तदन्तरं च सम्प्रेक्ष्य त्वरमाणो महारथः ।
प्रसन्दधे शितं बाणं गिरीणामपि दारणम् ॥ ४ ॥
तेनोरसि महाराज भीमसेनमताडयत् ।
स गाढविद्धो व्यथितः सृक्किणीपरिसंलिहन् ॥ ५ ॥
समालम्बे तेजस्वी ध्वजं हेमपरिष्कृतम् ।
तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः ॥ ६ ॥
क्रोधेनाऽभिप्रजज्वाल दिधक्षन्निव पावकः ।
अभिमन्युमुखाश्चाऽपि पाण्डवानां महारथाः ॥ ७ ॥
समभ्यधावन्क्रोशन्तो राजानं जातसम्भ्रमाः ।
सम्प्रेक्ष्यैतान्सम्पततः संक्रुद्धाञ्जातसम्भ्रमान् ॥ ८ ॥
भारद्वाजोऽब्रवीद्वाक्यं तावकानां महारथान् ।
क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत ॥ ९ ॥
संशयं परमं प्राप्तं मज्जन्तं व्यसनार्णवे ।
एते क्रुद्धा महेष्वासाः पाण्डवानां महारथाः ॥ १० ॥

चौरानवेवाँ अध्याय ॥ ९४ ॥

सञ्जय ने कहा — हे महाराज ! इसके पश्चात् राजा दुर्योधन ने अपनी सेना को विमुख देखकर क्रोध करके भीमसेन की ओर रथ दौड़ाया। वे भीमसेन के ऊपर बाण बरसाने लगे। लोमयुक्त, सान पर तीक्ष्ण किये गये, एक अर्धचन्द्र बाण से उन्होंने भीमसेन का धनुष काट डाला और एक पर्वतभेदी तीक्ष्ण बाण उनके वक्ष:स्थल में मारा ॥१।४॥ दुर्योधन का बाण इस वेग से लगा कि भीमसेन को होंठ दबाकर ध्वजा का आश्रय लेना पड़ा। उनको व्यथित और शिथिल देखकर राक्षस घटोत्कच प्रज्वलित अग्नि के समान क्रोध से उत्तेजित हो उठा। अभिमन्यु आदि श्रेष्ठ वीर भी गरजते और ललकारते हुए दुर्योधन के पास पहुँचे ॥४।८॥ उन्हें क्रोध करके दुर्योधन की ओर बढ़ते देखकर द्रोणाचार्य ने अपने महारथियों से कहा — तुम लोग शीघ्र राजा दुर्योधन के पास जाकर उनकी सहायता और रक्षा करो। वे इस समय विपत्ति के सागर में पड़ गये हैं। देखो पाण्डवसेना के महारथी लोग भीमसेन के अनुगामी होकर, जय

भीमसेनं पुरस्कृत्य दुर्योधनमुपाद्रवन् ।
नानाविधानि शस्त्राणि विसृजन्तो जये धृताः ॥ ११ ॥
नदन्तो भैरवान्नादांस्त्रासयन्तश्च भूमिपान् ।
तदाचार्यवचः श्रुत्वा सौमदत्तिपुरोगमाः ॥ १२ ॥
तावकाः समवर्तन्त पाण्डवानामनीकिनीम् ।
कृपो भूरिश्रवाः शल्यो द्रोणपुत्रो विविंशतिः ॥ १३ ॥
चित्रसेनो विकर्णश्च सैन्धवोऽथ बृहद्बलः ।
आवन्त्यौ च महेष्वासौ कौरवं पर्यवारयन् ॥ १४ ॥
ते विंशतिपदं गत्वा सम्प्रहारं प्रचक्रिरे ।
पाण्डवा धार्तराष्ट्राश्च परस्परजिघांसवः ॥ १५ ॥
एवमुक्त्वा महाबाहुर्महद्विस्फार्य कार्मुकम् ।
भारद्वाजस्ततो भीमं षड्विंशत्या समार्पयत् ॥ १६ ॥
भूयश्चैनं महाबाहुः शरैः शीघ्रमवाकिरत् ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ १७ ॥
तं प्रत्यविध्यद्दशभिर्भीमसेनः शिलीमुखैः ।
त्वरमाणो महेष्वासः सव्ये पार्श्वे महाबलः ॥ १८ ॥
स गाढविद्धो व्यथितो वयोवृद्धश्च भारत ।
प्रनष्टसंज्ञः सहसा रथोपस्थ उपाविशत् ॥ १९ ॥
गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्योधनः स्वयम् ।
द्रौणायनिश्च संक्रुद्धौ भीमसेनमभिद्रुतौ ॥ २० ॥
तावापतन्तौ सम्प्रेक्ष्य कालान्तकयमोपमौ ।
भीमसेनो महाबाहुर्गदामादाय सत्वरम् ॥ २१ ॥

की इच्छा से, अस्त्र शस्त्र बरसाकर, सिंहनाद से राजाओं को उद्विग्न करते हुए, दुर्योधन के समीप आ रहे हैं ॥९।१२॥ द्रोण के ये वचन सुनकर महावीर कृप, भूरिश्रवा, अश्वत्थामा, विविंशति, चित्रसेन, विकर्ण, जयद्रथ बृहद्बल और अवन्तिदेश के विन्द अनुविन्द आदि योद्धा बड़ी स्फूर्ति के साथ महाराज दुर्योधन को अपने मध्य में करके उनकी रक्षा करने लगे। पाण्डव पक्ष और कौरवपक्ष के वे वीर बीस पग आगे बढ़कर परस्पर प्रहार करने लगे ॥१२।१५॥ महात्मा द्रोणाचार्य ने धनुष चढ़ाकर भीमसेन को छब्बीस बाण मारे। जल की धारा जैसे पर्वत को ढक लेती है वैसे ही द्रोणाचार्य ने बाणों से भीमसेन को ढक दिया। भीमसेन ने बड़ी स्फूर्ति से द्रोणाचार्य के वाम पार्श्व में दस बाण मारे। उन बाणों से द्रोणाचार्य बहुत व्यथित और अचेत होकर रथ के ऊपर बैठ गये ॥१६।२०॥ यह देखकर महाराज दुर्योधन और अश्वत्थामा दोनों भीमसेन की ओर चले। काल की तरह उन दोनों वीरों को आते देखकर वीर भीमसेन रथ से

अवप्लुत्य रथात्तूर्णं तस्थौ गिरिरिवाऽचलः ।
समुद्यम्य गदां गुर्वीं यमदण्डोपमां रणे ॥ २२ ॥
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
कौरवो द्रोणपुत्रश्च सहितावभ्यधावताम् ॥ २३ ॥
तावापतन्तौ सहितौ त्वरितौ बलिनां वरौ ।
अभ्यधावत वेगेन त्वरमाणो वृकोदरः ॥ २४ ॥
तमापतन्तं सम्प्रेक्ष्य संक्रुद्धं भीमदर्शनम् ।
समभ्यधावंस्त्वरिताः कौरवाणां महारथाः ॥ २५ ॥
भारद्वाजमुखाः सर्वे भीमसेनजिघांसया ।
नानाविधानि शस्त्राणि भीमस्योरस्यपातयन् ॥ २६ ॥
सहिताः पाण्डवं सर्वे पीडयन्तः समन्ततः ।
तं दृष्ट्वा संशयं प्राप्तं पीड्यमानं महारथम् ॥ २७ ॥
अभिमन्युप्रभृतयः पाण्डवानां महारथाः ।
अभ्यधावन्परीप्सन्तः प्राणांस्त्यक्त्वा सुदुस्त्यजान् २८ ॥
अनूपाधिपतिः शूरो भीमस्य दयितः सखा ।
नीलो नीलाम्बुदप्रख्यः संक्रुद्धो द्रौणिमभ्ययात् ॥ २९ ॥
स्पर्धते हि महेष्वासो नित्यं द्रोणसुतेन सः ।
स विस्फार्य महच्चापं द्रौणिं विव्याध पत्रिणा ॥ ३० ॥
यथा शक्रो महाराज पुरा विव्याध दानवम् ।
विप्रचित्तिं दुराधर्षं देवतानां भयङ्करम् ॥ ३१ ॥
येन लोकत्रयं क्रोधात्त्रासितं स्वेन तेजसा ।
तथा नीलेन निर्भिन्नः सुमुक्तेन पतत्रिणा ॥ ३२ ॥

उतर पड़े । वे एक भारी गदा लेकर पर्वत की तरह अचल भाव से खड़े हो गये ॥२०।२२॥ गदा हाथ में लिये भीमसेन ऊँचे शिखरवाले कैलास पर्वत के समान शोभायमान थे । दुर्योधन और अश्वत्थामा भीमसेन की ओर झपटे, और उधर से भीमसेन भी उनकी ओर झपटे । उस समय द्रोणाचार्य आदि कौरवपक्ष के वीर, श्रेष्ठ रथी भीमसेन को मार डालने के लिए, उनके पास पहुँचकर हृदय में विविध शस्त्र मारकर उन्हें पीडा पहुँचाने लगे ॥२३।२७॥ महाबली भीमसेन जब कौरवपक्ष के वीरों के बाणों से अत्यन्त व्यथित होकर प्राणसङ्कट की अवस्था में पड़ गये तब पाण्डवपक्ष के अभिमन्यु आदि महारथी, प्राणों की ममता छोड़कर, उनकी सहायता के लिए दौड़ पड़े। भीमसेन के प्रिय मित्र अनूपेश्वर राजा नील क्रुद्ध होकर अश्वत्थामा के सन्मुख आये । महाराज नील सदा ही अश्वत्थामा से स्पर्धा रखते थे ॥२७।३०॥ इन्द्र ने जैसे दुर्धर्ष, तेजस्वी, त्रिभुवन को त्रास पहुँचानेवाले विप्रचित्ति को मारा था वैसे ही महावीर नील धनुष

सञ्जातरुधिरोत्पीडो द्रौणिः क्रोधसमन्वितः ।
स विस्फार्य धनुश्चित्रमिन्द्राशनिसमस्वनम् ॥ ३३ ॥
दध्रे नीलविनाशाय मतिं मतिमतां वरः ।
ततः सन्धाय विमलान्भल्लान्कर्मारमार्जितान् ॥ ३४ ॥
जघान चतुरो वाहान्पातयामास च ध्वजम् ।
सप्तमेन च भल्लेन नीलं विव्याध वक्षसि ॥ ३५ ॥
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
मोहितं वीक्ष्य राजानं नीलमभ्रचयोपमम् ॥ ३६ ॥
घटोत्कचोऽभिसंक्रुद्धो ज्ञातिभिः परिवारितः ।
अभिदुद्राव वेगेन द्रौणिमाहवशोभिनम् ॥ ३७ ॥
तथेतरे चाऽभ्यधावन्राक्षसा युद्धदुर्मदाः ।
तमापतन्तं सम्प्रेक्ष्य राक्षसं घोरदर्शनम् ॥ ३८ ॥
अभ्यधावत तेजस्वी भारद्वाजात्मजस्त्वरन् ।
निजघान च संक्रुद्धो राक्षसान्भीमदर्शनान् ॥ ३९ ॥
येऽभवन्नग्रतः क्रुद्धा राक्षसस्य पुरःसराः ।
विमुखांश्चैव तान्दृष्ट्वा द्रौणिचापच्युतैः शरैः ॥ ४० ॥
अक्रुध्यत महाकायो भैमसेनिर्घटोत्कचः ।
प्रादुश्चक्रे ततो मायां घोररूपां सुदारुणाम् ॥ ४१ ॥
मोहयन्समरे द्रौणिं मायावी राक्षसाधिपः ।
ततस्ते तावकाः सर्वे मायया विमुखीकृताः ॥ ४२ ॥
अन्योन्यं समपश्यन्त निकृत्ता मेदिनीतले ।
विचेष्टमानाः कृपणाः शोणितेन परिप्लुताः ॥ ४३ ॥

चढ़ाकर बाण बरसाकर अश्वत्थामा को पीड़ा पहुँचाने लगे। नील के बाणों से अश्वत्थामा का शरीर रुधिर से युक्त हो गया। वे क्रुद्ध होकर नील को मार डालने का यत्न करने लगे। अश्वत्थामा ने वज्रसदृश शब्द से पूर्ण धनुष पर विचित्र सात भल्ल बाण चढ़ाये। उन्होंने छः भल्ल बाणों से नील के चारों घोड़े मार डाले और ध्वजा काट डाली। सातवाँ बाण नील की छाती में मारा। उस प्रहार से अचेत-से होकर नील रथ पर बैठ गये ॥३१।३५॥ राजा नील को अचेत देख क्रोध से विह्वल राक्षस घटोत्कच, अपने साथी राक्षसों को लेकर, बड़े वेग से अश्वत्थामा का सामना करने आया। और राक्षस भी आक्रमण करने चले। महाबली अश्वत्थामा ने घटोत्कच को देखते मात्र ही झपटकर बाणों से भयानक राक्षसों को मारना और गिराना आरम्भ किया। घटोत्कच ने अपने आगे के राक्षसों को अश्वत्थामा के बाणों से भागते हुए देखकर क्रुद्ध हो, अश्वत्थामा को मोहित करने के लिए, अपनी भयङ्कर माया प्रकट की। ॥३६।४१॥ राक्षस की माया से मोहित

द्रोणं दुर्योधनं शल्यमश्वत्थामानमेव च ।
प्रायशश्च महेष्वासा ये प्रधानाः स्म कौरवाः ॥ ४४ ॥
विध्वस्ता रथिनः सर्वे राजानश्च निपातिताः ।
हयाश्चैव हयारोहाः सन्निकृत्ताः सहस्रशः ॥ ४५ ॥
तद्‌ दृष्ट्वा तावकं सैन्यं विद्रुतं शिबिरं प्रति ।
मम प्राक्रोशतो राजंस्तथा देवव्रतस्य च ॥ ४६ ॥
युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे ।
घटोत्कचप्रयुक्तेति नाऽतिष्ठन्त विमोहिताः ॥ ४७ ॥
नैव ते श्रद्दधुर्भीता वदतोरावयोर्वचः ।
तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्ताश्च पाण्डवाः ॥ ४८ ॥
घटोत्कचेन सहिताः सिंहनादान्प्रचक्रिरे ।
शङ्खदुन्दुभिनिर्घोषैः समन्तान्नेदिरे भृशम् ॥ ४९ ॥
एवं तव बलं सर्वं हैडिम्बेन दुरात्मना ।
सूर्यास्तमनवेलायां प्रभग्नं विद्रुतं दिशः ॥ ५० ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि अष्टमयुद्धदिवसे चतुरधिकनवतितमोऽध्यायः ॥ ९४ ॥

होकर कौरवपक्ष के वीर पुरुष युद्ध से हट गये। राक्षस के बाणों ने उनके अङ्ग छिन्न भिन्न कर दिये। असंख्य सैनिक लोग रुधिर से युक्त होकर, पृथ्वी पर गिरकर, कातर दृष्टि से एक दूसरे को देख रहे थे। द्रोण, दुर्योधन, शल्य, अश्वत्थामा आदि कौरव-पक्ष के वीर युद्ध छोड़-छोड़कर हट गये। रथीगण मरने और राजा लोग मर-मरकर गिरने लगे। सैकड़ों-हजारों घोड़ों और सवारों के शरीर छिन्न-भिन्न हो गये। मरे और अधमरे लोगों से वहाँ की पृथ्वी भर गई ॥४१।४६॥ आपकी सेना को शिबिर की ओर भागते देखकर मैं और भीष्म दोनों पुकार-पुकारकर उनसे कहने लगे—"हे सैनिक लोगो! तुम भागो नहीं, युद्ध करो। यह सब मायावी घटोत्कच की माया है। इससे तुम मत भयभीत होओ।" परन्तु राक्षस की माया के प्रभाव से अत्यन्त मोहित होने के कारण वे लोग नहीं ठहरे। हमारी बातों पर निश्चय न करके वे लोग फिर भागने लगे। हे महाराज! इस प्रकार जय प्राप्त करके घटोत्कच और पाण्डवगण सिंहनाद करने लगे। पाण्डव-सेना में शङ्ख और निगाड़े बजने लगे। उनका शब्द सब ओर छा गया। सूर्यास्त का समय हो आया। घटोत्कच के बाणों से छिन्न-भिन्न होकर आपकी सेना इधर-उधर भागने लगी ॥४६।५०॥

भीष्मपर्व का चौरानवेवाँ अध्याय समाप्त हुआ ॥ ९४ ॥

अथ पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

सञ्जय उवाच — तस्मिन्महति संक्रन्दे राजा दुर्योधनस्तदा ।
गाङ्गेयमुपसङ्गम्य विनयेनाऽभिवाद्य च ॥ १ ॥
तस्य सर्वं यथावृत्तमाख्यातुमुपचक्रमे ।
घटोत्कचस्य विजयमात्मनश्च पराजयम् ॥ २ ॥

कथयामास दुर्धर्षो विनिःश्वस्य पुनः पुनः ।
अब्रवीच्च तदा राजन्भीष्मं कुरुपितामहम् ॥ ३ ॥
भवन्तं समुपाश्रित्य वासुदेवं यथा परैः ।
पाण्डवैर्विग्रहो घोरः समारब्धो मया प्रभो ॥ ४ ॥
एकादश समाख्याता अक्षौहिण्यश्च या मम ।
निदेशे तव तिष्ठन्ति मया सार्धं परन्तप ॥ ५ ॥
सोऽहं भरतशार्दूल भीमसेनपुरोगमैः ।
घटोत्कचं समाश्रित्य पाण्डवैर्युधि निर्जितः ॥ ६ ॥
तन्मे दहति गात्राणि शुष्कवृक्षमिवाऽनलः ।
तदिच्छामि महाभाग त्वत्प्रसादात्परन्तप ॥ ७ ॥
राक्षसापसदं हन्तुं स्वयमेव पितामह ।
त्वां समाश्रित्य दुर्धर्षं तन्मे कर्तुं त्वमर्हसि ॥ ८ ॥
एतच्छ्रुत्वा तु वचनं राज्ञो भरतसत्तम ।
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥ ९ ॥
शृणु राजन्मम वचो यत्त्वां वक्ष्यामि कौरव ।
यथा त्वया महाराज वर्तितव्यं परन्तप ॥ १० ॥
आत्मा रक्ष्यो रणे तात सर्वावस्थास्वरिन्दम ।
धर्मराजेन संग्रामस्त्वया कार्यः सदाऽनघ ॥ ११ ॥
अर्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः ।
राजधर्मं पुरस्कृत्य राजा राजानमार्छति ॥ १२ ॥

पञ्चानवेवाँ अध्याय ॥ ९५ ॥

सञ्जय ने कहा—हे राजेन्द्र! महाराज दुर्योधन ने पितामह भीष्म के पास जाकर विनीत भाव से प्रणाम किया। फिर लम्बी-लम्बी साँसें ले-लेकर अपनी पराजय और घटोत्कच की विजय का वर्णन विस्तार के साथ कहा कि हे पितामह! पाण्डवगण जैसे कृष्ण का आश्रय पाकर उन्हीं के विश्वास से युद्ध कर रहे हैं वैसे ही मैंने आपके और गुरु के विश्वास पर पाण्डवों से युद्ध ठाना है। हे शत्रुदमन! मैं और मेरी ग्यारह अक्षौहिणी सेना आपके अधीन है; फिर भी घटोत्कच की सहायता से भीमसेन आदि पाण्डवों ने युद्ध में मुझे जीत लिया! सूखा हुआ पेड़ जैसे अग्नि से जलता है वैसे ही मेरा शरीर भी क्रोध से जल रहा है। इसलिए अब वही उपाय कीजिए जिससे मैं आपका आश्रय लेकर दुष्ट राक्षस को मार सकूँ ॥१।८॥ राजा दुर्योधन के ये वचन सुनकर भीष्म ने कहा—हे राजेन्द्र! इस कार्य के लिए तुमको जो करना होगा सो मैं कहता हूँ, सुनो। तुम सदा, सब अवस्थाओं में, अपनी रक्षा करते रहो। और देखो, राजा या तो राजा से युद्ध करता है, [ या राजकुमार से ] इसलिए तुम धर्मराज, भीमसेन, अर्जुन, नकुल या सहदेव से ही युद्ध करना ॥९।१२॥ मैं, द्रोणाचार्य, कृपाचार्य, अश्वत्थामा, कृतवर्मा, शल्य, सोमदत्ति, विकर्ण और दुःशासन

अहं द्रोणः कृपो द्रौणिः कृतवर्मा च सात्वतः ।
शल्यश्च सौमदत्तिश्च विकर्णश्च महारथाः ॥ १३ ॥
तव च भ्रातरः श्रेष्ठा दुःशासनपुरोगमाः ।
त्वदर्थे प्रतियोत्स्यामो राक्षसं तं महाबलम् ॥ १४ ॥
रौद्रे तस्मिन्राक्षसेन्द्रे यदि तेऽनुशयो महान् ।
अयं वा गच्छतु रणे तस्य युद्धाय दुर्मतेः ॥ १५ ॥
भगदत्तो महीपालः पुरन्दरसमो युधि ।
एतावदुक्त्वा राजानं भगदत्तमथाऽब्रवीत् ॥ १६ ॥
समक्षं पार्थिवेन्द्रस्य वाक्यं वाक्यविशारदः ।
गच्छ शीघ्रं महाराज हैडिम्बं युद्धदुर्मदम् ॥ १७ ॥
वारयस्व रणे यत्तो मिषतां सर्वधन्विनाम् ।
राक्षसं क्रूरकर्माणं यथेन्द्रस्तारकं पुरा ॥ १८ ॥
तव दिव्यानि चाऽस्त्राणि विक्रमश्च परन्तप ।
समागमश्च बहुभिः पुराऽभूदमरैः सह ॥ १९ ॥
त्वं तस्य नृपशार्दूल प्रतियोद्धा महाहवे ।
स्वबलेनोच्छ्रितो राजञ्जहि राक्षसपुङ्गवम् ॥ २० ॥
एतच्छ्रुत्वा तु वचनं भीष्मस्य पृतनापतेः ।
प्रययौ सिंहनादेन परानभिमुखो द्रुतम् ॥ २१ ॥
तमाद्रवन्तं सम्प्रेक्ष्य गर्जन्तमिव तोयदम् ।
अभ्यवर्तन्त संक्रुद्धाः पाण्डवानां महारथाः ॥ २२ ॥
भीमसेनोऽभिमन्युश्च राक्षसश्च घटोत्कचः ।
द्रौपदेयाः सत्यधृतिः क्षत्रदेवश्च भारत ॥ २३ ॥

---

आदि तुम्हारे भाई, सब लोग तुम्हारे लिए महाबली राक्षस घटोत्कच से युद्ध करेंगे । अथवा यदि तुमको उस राक्षस से ऐसा ही सन्ताप पहुँचा है तो ये इन्द्र के समान प्रतापी महाराज भगदत्त उस राक्षस के साथ युद्ध करने जायँ ॥१३।१६॥ महावीर भीष्म ने दुर्योधन से यह कहकर सबके सामने भगदत्त से कहा—हे महाराज ! तुम शीघ्र जाकर सब योद्धाओं के सम्मुख यत्नपूर्वक युद्ध में प्रचण्ड अधम राक्षस को रोको । जैसे इन्द्र ने तारकासुर को मारा था वैसे ही इस राक्षस को जीतो । तुम्हारा पराक्रम अद्भुत है और अस्त्र भी दिव्य हैं । तुम पहले असुरों के साथ युद्ध कर चुके हो । अतएव इस समय अपने से स्पर्धा रखनेवाले दुरात्मा घटोत्कच को शीघ्र ही मारो ॥१६।२०॥ पराक्रमी सेनापति भीष्म की आज्ञा पाकर राजा भगदत्त, सुप्रतीक नाम के हाथी पर चढ़कर, सिंहनाद करते हुए शत्रुओं की ओर चले । पाण्डवपक्ष के महारथी भीमसेन, अभिमन्यु, राक्षस घटोत्कच, द्रौपदी के पाँचों पुत्र, सत्यधृति क्षत्रदेव, चेदिराज,

चेदिपो वसुदानश्च दशार्णाधिपतिस्तथा ।
सुप्रतीकेन तांश्चाऽपि भगदत्तोऽप्युपाद्रवत् ॥ २४ ॥
ततः समभवद्युद्धं घोररूपं भयानकम् ।
पाण्डूनां भगदत्तेन यमराष्ट्रविवर्धनम् ॥ २५ ॥
प्रयुक्ता रथिभिर्बाणा भीमवेगाः सुतेजनाः ।
ते निपेतुर्महाराज नागेषु च रथेषु च ॥ २६ ॥
प्रभिन्नाश्च महानागा विनीता हस्तिसादिभिः ।
परस्परं समासाद्य सन्निपेतुरभीतवत् ॥ २७ ॥
मदान्धा रोषसंरब्धा विषाणाग्रैर्महाहवे ।
विभिदुर्दन्तमुसलैः समासाद्य परस्परम् ॥ २८ ॥
हयाश्च चामरापीडाः प्रासपाणिभिरास्थिताः ।
चोदिताः सादिभिः क्षिप्रं निपेतुरितरेतरम् ॥ २९ ॥
पादाताश्च पदात्योघैस्ताडिताः शक्तितोमरैः ।
न्यपतन्त तदा भूमौ शतशोऽथ सहस्रशः ॥ ३० ॥
रथिनश्च रथै राजन्कर्णिनालीकसायकैः ।
निहत्य समरे वीरान्सिंहनादान्विनेदिरे ॥ ३१ ॥
तस्मिंस्तथा वर्तमाने संग्रामे लोमहर्षणे ।
भगदत्तो महेष्वासो भीमसेनमथाऽद्रवत् ॥ ३२ ॥
कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदम् ।
पर्वतेन यथा तोयं स्रवमाणेन सर्वशः ॥ ३३ ॥
किरञ्छरसहस्राणि सुप्रतीकशिरोगतः ।
ऐरावतस्थो मघवान्वारिधारा इवाऽनघ ॥ ३४ ॥

---

वसुदान और दशार्णदेश के राजा आदि वीर लोग भी प्रलयकाल के मेघ के समान गरजते हुए भगदत्त को आते देखकर क्रुद्ध होकर, उसकी ओर चले॥२१।२४॥ इसके अनन्तर भगदत्त के साथ पाण्डवों का घोर संग्राम होने लगा। रथी लोग हाथियों और रथों के ऊपर बड़े वेग से बाण बरसाने लगे। सवारों के द्वारा सुशिक्षित मस्त हाथी मद से अन्धे होकर भी दूसरे हाथियों से निर्भय भाव से भिड़ने लगे। मदान्ध और क्रोधान्ध गजराज परस्पर भिड़कर दांतों से प्रहार करने लगे। चामरभूषित घोड़े, प्रास हाथ में लिये हुए सवारों के द्वारा चलाये जाकर, वेग के साथ परस्पर आक्रमण और प्रहार करने लगे। सैकड़ों-हजारों पैदल सेना के दल परस्पर शक्ति, तोमर आदि शस्त्रों के प्रहार करके पृथ्वी पर गिरने लगे। रथों पर बैठकर रथी लोग कर्णी, नालीक और तोमर आदि बाणों से वीरों को मारकर सिंहनाद करने लगे ॥२५।३१॥ हे राजेन्द्र! इस प्रकार रोंगटे उत्पन्न कर देनेवाला संग्राम मच जाने पर महाधनुर्धर भगदत्त,

स भीमं शरधाराभिस्ताडयामास पार्थिवः ।
पर्वतं वारिधाराभिस्तपान्ते जलदो यथा ॥ ३५ ॥
भीमसेनस्तु संक्रुद्धः पादरक्षान्परःशतान् ।
निजघान महेष्वासः संरब्धः शरवृष्टिभिः ॥ ३६ ॥
तान्दृष्ट्वा निहतान्क्रुद्धो भगदत्तः प्रतापवान् ।
चोदयामास नागेन्द्रं भीमसेनरथं प्रति ॥ ३७ ॥
स नागः प्रेषितस्तेन बाणो ज्याचोदितो यथा ।
अभ्यधावत वेगेन भीमसेनमरिन्दमम् ॥ ३८ ॥
तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथाः ।
अभ्यवर्त्तन्त वेगेन भीमसेनपुरोगमाः ॥ ३९ ॥
केकयाश्चाऽभिमन्युश्च द्रौपदेयाश्च सर्वशः ।
दशार्णाधिपतिः शूरः क्षत्रदेवश्च मारिष ॥ ४० ॥
चेदिपश्चित्रकेतुश्च संरब्धाः सर्व एव ते ।
उत्तमास्त्राणि दिव्यानि दर्शयन्तो महाबलाः ॥ ४१ ॥
तमेकं कुञ्जरं क्रुद्धाः समन्तात्पर्यवारयन् ।
स विद्धो बहुभिर्बाणैर्व्यरोचत महाद्विपः ॥ ४२ ॥
सञ्जातरुधिरोत्पीडो धातुचित्र इवाऽद्रिराट् ।
दशार्णाधिपतिश्चाऽपि गजं भूमिधरोपमम् ॥ ४३ ॥
समास्थितोऽभिदुद्राव भगदत्तस्य वारणम् ।
तमापतन्तं समरे गजं गजपतिः स च ॥ ४४ ॥

---

झरनों से शोभित पर्वत के समान बहते हुए मदजल से सुशोभित, हाथी पर चढ़कर चारों ओर बाण बरसाते हुए भीमसेन की ओर दौड़े ॥३२।३४॥ वर्षाकाल का मेघ जैसे जलधारा से पर्वत को ढक देता है वैसे ही उन्होंने भीमसेन को बाणों से छिपा दिया। महावीर भीम ने क्रोध से अधीर होकर सौ से अधिक हाथी के चरणरक्षकों को बाणों से मार डाला। महातेजस्वी राजा भगदत्त ने उनको मरा हुआ देख क्रुद्ध होकर अपने हाथी को भीमसेन के रथ की ओर बढ़ाया ॥३५।३७॥ भगदत्त के द्वारा सञ्चालित वह हाथी धनुष से छूटे हुए बाण के समान भीमसेन के ऊपर झपटा। इसी समय पाण्डवपक्ष के सब महारथी भीमसेन के पीछे-पीछे वेग से आगे बढ़े। अभिमन्यु, द्रौपदी के पाँचों पुत्र, दशार्णराज, क्षत्रदेव, चेदिराज, चित्रकेतु और केकयगण क्रोध के मारे महाधनुष चढ़ाकर, चारों ओर से घेरकर, उस हाथी पर दिव्य अस्त्र छोड़ने लगे ॥३८।४२॥ वह गजराज बाणों के प्रहार से बहुत ही घायल हो गया। उनके शरीर से रक्त बहने लगा। वह गेरू से रँगे हुए गिरिराज की तरह शोभायमान हुआ। दशार्ण देश के राजा पर्वततुल्य ऊँचे हाथी पर चढ़कर भगदत्त के हाथी की ओर बढ़े। तटभूमि जैसे महासागर के जल को रोकती है वैसे ही सुवर्णाक ने उस हाथी के वेग को रोका और उस हाथी ने भगदत्त

दधार सुप्रतीकोऽपि वेलेव मकरालयम् ।
वारितं प्रेक्ष्य नागेन्द्रं दशार्णस्य महात्मनः ॥ ४५ ॥
साधु साध्विति सैन्यानि पाण्डवेयान्यपूजयन् ।
ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान्वै चतुर्दश ॥ ४६ ॥
प्राहिणोत्तस्य नागस्य प्रमुखे नृपसत्तम ।
वर्ममुख्यं तनुत्राणं शातकुम्भपरिष्कृतम् ॥ ४७ ॥
विदार्य प्राविशन्क्षिप्रं वल्मीकमिव पन्नगाः ।
स गाढविद्धो व्यथितो नागो भरतसत्तम ॥ ४८ ॥
उपावृत्तमदः क्षिप्रमभ्यवर्तत वेगितः ।
स प्रदुद्राव वेगेन प्रणदन्भैरवं रवम् ॥ ४९ ॥
सम्मर्दयानः स्वबलं वायुर्वृक्षानिवौजसा ।
तस्मिन्पराजिते नागे पाण्डवानां महारथाः ॥ ५० ॥
सिंहनादं विनद्योच्चैर्युद्धायैवाऽवतस्थिरे ।
ततो भीमं पुरस्कृत्य भगदत्तमुपाद्रवन् ॥ ५१ ॥
किरन्तो विविधान्बाणाञ्शस्त्राणि विविधानि च ।
तेषामापततां राजन्संक्रुद्धानाममर्षिणाम् ॥ ५२ ॥
श्रुत्वा स निनदं घोरममर्षाद्गतसाध्वसः ।
भगदत्तो महेष्वासः स्वनागं प्रत्यचोदयत् ॥ ५३ ॥
अङ्कुशाङ्गुष्ठनुदितः स गजप्रवरो युधि ।
तस्मिन्क्षणे समभवत्सांवर्तक इवाऽनलः ॥ ५४ ॥
रथसङ्घांस्तथा नागान्हयांश्च हयसादिभिः ।
पादातांश्च सुसंक्रुद्धः शतशोऽथ सहस्रशः ॥ ५५ ॥

के सुप्रतीक हाथी का वेग रोका। यह देखकर पाण्डवगण और उनकी सेना "वाह वाह" करने लगी ॥४२।४६॥ तब राजा भगदत्त ने क्रुद्ध होकर शत्रु के हाथी को चौदह तोमर मारे। सर्प जैसे बिल में प्रवेश होता है वैसे ही वे तोमर, हाथी पर पड़े हुए सुवर्णमय कवच को तोड़कर, उसके शरीर में प्रवेश हो गये। दशार्णाधिप का हाथी इससे बहुत घायल होकर भयानक शब्द से चिल्लाने लगा और वेग से चलनेवाली आँधी जैसे पेड़ों को तोड़ती है वैसे अपने ही पक्ष की सेना को रौंदता हुआ बड़े वेग से भागा ॥४६।५०॥ इस प्रकार दशार्णराज का हाथी भाग जाने पर पाण्डवपक्ष के सब महारथी युद्ध के लिए उद्यत होकर, भीमसेन को आगे करके, सिंह की तरह गरजते और तीक्ष्ण अस्त्र-शस्त्र बरसाते हुए राजा भगदत्त पर आक्रमण करने चले ॥५०।५१॥ महाधनुर्धर भगदत्त ने उन कुपित वीरों का सिंहनाद सुनकर, बहुत ही क्रुद्ध होकर, निर्भय भाव से अपने हाथी को उनकी ओर बढ़ाया। अंकुश का इशारा पाते ही गजराज

अमृद्नात्समरे नागः सम्प्रधावंस्ततस्ततः ।
तेन संलोड्यमानं तु पाण्डवानां बलं महत् ॥ ५६ ॥
सञ्चुकोच महाराज चर्मेवाऽग्नौ समाहितम् ।
भग्नं तु स्वबलं दृष्ट्वा भगदत्तेन धीमता ॥ ५७ ॥
घटोत्कचोऽथ संक्रुद्धो भगदत्तमुपाद्रवत् ।
विकटः परुषो राजन्दीप्तास्यो दीप्तलोचनः ॥ ५८ ॥
रूपं विभीषणं कृत्वा रोषेण प्रज्वलन्निव ।
जग्राह विमलं शूलं गिरीणामपि दारणम् ॥ ५९ ॥
नागं जिघांसुः सहसा चिक्षेप च महाबलः ।
स विस्फुलिङ्गमालाभिः समन्तात्परिवेष्टितः ॥ ६० ॥
तमापतन्तं सहसा दृष्ट्वा प्राग्ज्योतिषो नृपः ।
चिक्षेप रुचिरं तीक्ष्णमर्धचन्द्रं सुदारुणम् ॥ ६१ ॥
चिच्छेद तन्महच्छूलं तेन बाणेन वेगवान् ।
उत्पपात द्विधा च्छिन्नं शूलं हेमपरिष्कृतम् ॥ ६२ ॥
महाशनिर्यथा भ्रष्टा शक्रमुक्ता नभोगता ।
शूलं निपतितं दृष्ट्वा द्विधा कृत्तं च पार्थिवः ॥ ६३ ॥
रुक्मदण्डां महाशक्तिं जग्राहाऽग्निशिखोपमाम् ।
चिक्षेप तां राक्षसस्य तिष्ठ तिष्ठेति चाऽब्रवीत् ॥ ६४ ॥
तामापतन्तीं सम्प्रेक्ष्य वियत्स्थामशनीमिव ।
उत्पत्य राक्षसस्तूर्णं जग्राह च ननाद च ॥ ६५ ॥
बभञ्ज चैनां त्वरितो जानुन्यारोप्य भारत ।
पश्यतः पार्थिवेन्द्रस्य तदद्भुतमिवाऽभवत् ॥ ६६ ॥

सुप्रतीक प्रलयकाल के संवर्तक अग्नि के समान क्रोध से प्रज्वलित हो उठा। वह सामने पड़नेवाले हाथियों, घोड़ों, सवारों और सैकड़ों-सहस्रों पैदलों तथा रथों को रौंदता हुआ शीघ्रता से दौड़ा। पाण्डवों की सेना अग्नि में पड़े चमड़े की तरह भय से संकुचित हो उठी ॥५२।५७॥ उधर प्रदीप्त-मुख और प्रदीप्त-नयन महाबली घटोत्कच बड़ा भयानक रूप धारण करके, क्रोध से प्रज्वलित होकर, पर्वत को भी तोड़ सकनेवाला एक भयङ्कर शूल हाथ में लेकर राजा भगदत्त की ओर दौड़ा ॥५७।६०॥ उसने हाथी को, मारने के लिए, वह शूल मारा। यह देखकर कुपित महाराज भगदत्त ने एक तीक्ष्ण अर्धचन्द्र बाण मारकर उस शूल के दो टुकड़े कर डाले। इन्द्र के चलाये वज्र के समान वह शूल दो टुकड़े होकर पृथ्वी पर गिर पड़ा। अब भगदत्त ने "ठहर जा, ठहर जा" कहकर एक अग्निशिखातुल्य घोर शक्ति राक्षस को मारी ॥६०।६४॥ उस सुवर्ण-दण्डभूषित शक्ति को आकाश में आते हुए वज्र की तरह देखकर घटोत्कच

तद्वेक्ष्य कृतं कर्म राक्षसेन बलीयसा ।
दिवि देवाः सगन्धर्वा मुनयश्चाऽपि विस्मिताः ॥ ६७ ॥
पाण्डवाश्च महाराज भीमसेनपुरोगमाः ।
साधु साध्विति नादेन पृथिवीमन्वनादयन् ॥ ६८ ॥
तं तु श्रुत्वा महानादं प्रहृष्टानां महात्मनाम् ।
नाऽमृष्यत महेष्वासो भगदत्तः प्रतापवान् ॥ ६९ ॥
स विस्फार्य महच्चापमिन्द्राशनिसमप्रभम् ।
तर्जयामास वेगेन पाण्डवानां महारथान् ॥ ७० ॥
विसृजन्विमलांस्तीक्ष्णान्नाराचाञ्ज्वलनप्रभान् ।
भीममेकेन विव्याध राक्षसं नवभिः शरैः ॥ ७१ ॥
अभिमन्युं त्रिभिश्चैव केकयान्पञ्चभिस्तथा ।
पूर्णायतविसृष्टेन शरेणाऽनतपर्वणा ॥ ७२ ॥
बिभेद दक्षिणं बाहुं क्षत्रदेवस्य चाऽऽहवे ।
पपात सहसा तस्य सशरं धनुरुत्तमम् ॥ ७३ ॥
द्रौपदेयांस्ततः पञ्च पञ्चभिः समताडयत् ।
भीमसेनस्य च क्रोधान्निजघान तुरङ्गमान् ॥ ७४ ॥
ध्वजं केसरिणं चाऽस्य चिच्छेद विशिखैस्त्रिभिः ।
निर्बिभेद त्रिभिश्चाऽन्यैःसारथिं चाऽस्य पत्रिभिः ॥ ७५ ॥
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
विशोको भरतश्रेष्ठ भगदत्तेन संयुगे ॥ ७६ ॥

ने उछलकर पकड़ लिया और सिंहनाद करके भगदत्त के सामने ही घुटनों से उसके दो टुकड़े कर डाले। उसका यह कार्य अत्यन्त अद्भुत जान पड़ा। देवलोक में देवता, गन्धर्व और मुनिगण उस राक्षस के इस अद्भुत कर्म को देखकर बहुत ही विस्मित हुए ॥६६। ६७॥ भीमसेन और उनके साथी वीरगण "वाह वाह" के शब्द से पृथ्वीमण्डल को प्रतिध्वनित करने लगे। प्रसन्नमना पाण्डवों का सिंहनाद सुनकर महाधनुर्धर भगदत्त अत्यन्त अधीर हुए। वे धनुष चढ़ाकर वे पाण्डवों के महारथियों की भर्त्सना करने लगे। वे राक्षस के पैरों पर अचानक अग्नितुल्य बाण बरसाने लगे ॥६८।७१॥ उन्होंने भीमसेन को एक बाण, घटोत्कच को नौ बाण, अभिमन्यु को तीन बाण और केकयकुमारों को पाँच बाण मारे। इसके पश्चात् धनुष पर एक बाण चढ़ाकर क्षत्रदेव के दाहने हाथ में मारा। इससे क्षत्रदेव के हाथ से धनुष और बाण गिर पड़ा ॥७२।७३॥ भगदत्त ने फिर पाँच तीक्ष्ण बाण द्रौपदी के पुत्रों को मारे। फिर महावीर भीमसेन के घोड़ों को मारकर तीन बाणों से ध्वजा काट डाली और अन्य तीन बाणों से सारथी को घायल कर दिया। उसका सारथी विशोक उस प्रहार से अत्यन्त पीड़ित होकर रथ पर गिर पड़ा। अब श्रेष्ठ रथी भीमसेन गदा लेकर रथ से उतर पड़े, और बड़े वेग से शत्रु की ओर दौड़े। उन्हें शस्त्रयुक्त देख

ततो भीमो महाबाहुर्विरथो रथिनां वरः ।
गदां प्रगृह्य वेगेन प्रचस्कन्द रथोत्तमात् ॥ ७७ ॥
तमुद्यतगदं दृष्ट्वा सशृङ्गमिव पर्वतम् ।
तावकानां भयं घोरं समपद्यत भारत ॥ ७८ ॥
एतस्मिन्नेव काले तु पाण्डवः कृष्णसारथिः ।
आजगाम महाराज निघ्नञ्शत्रून्समन्ततः ॥ ७९ ॥
यत्र तौ पुरुषव्याघ्रौ पितापुत्रौ महाबलौ ।
प्राग्ज्योतिषेण संयुक्तौ भीमसेनघटोत्कचौ ॥ ८० ॥
दृष्ट्वा च पाण्डवो भ्रातॄन्युध्यमानान्महारथान् ।
त्वरितो भरतश्रेष्ठ तत्राऽयुध्यत्किरञ्छरान् ॥ ८१ ॥
ततो दुर्योधनो राजा त्वरमाणो महारथः ।
सेनामचोदयत्क्षिप्रं रथनागाश्वसंकुलाम् ॥ ८२ ॥
तामापतन्तीं सहसा कौरवाणां महाचमूम् ।
अभिदुद्राव वेगेन पाण्डवः श्वेतवाहनः ॥ ८३ ॥
भगदत्तश्च समरे तेन नागेन भारत ।
विमृद्नन्पाण्डवबलं युधिष्ठिरमुपाद्रवत् ॥ ८४ ॥
तदाऽऽसीत्सुमहद्युद्धं भगदत्तस्य मारिष ।
पञ्चालैः पाण्डवैश्चैव केकयैश्चोद्यतायुधैः ॥ ८५ ॥
भीमसेनोऽपि समरे तावुभौ केशवार्जुनौ ।
अश्रावयद्यथावृत्तमिरावद्वधमुत्तमम् ॥ ८६ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भगदत्तयुद्धे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

की तरह आते देखकर कौरवपक्ष के वीर भय से विह्वल हो उठे ॥७७।७८॥ उधर अर्जुन चारों ओर शत्रुओं की सेना को मारते हुए उस स्थान पर आये जहाँ भीम और घटोत्कच के साथ भगदत्त का युद्ध हो रहा था। महारथी भाइयों को युद्ध करते देखकर वे भी शत्रुसेना के ऊपर तीक्ष्ण बाण बरसाने लगे ॥७९।८१॥ राजा दुर्योधन ने हाथी, घोड़े, रथ आदि से परिपूर्ण और भी बहुत सी सेना युद्ध के लिए भेजी। अर्जुन उस आती हुई कौरवसेना को मारने के लिए उसकी ओर चले। राजा भगदत्त अपने हाथी से पाण्डवसेना को रौंदवाते हुए बड़े वेग से युधिष्ठिर की ओर चले। उस समय शस्त्र उठाये हुए पाञ्चाल, सृञ्जय, केकय आदि के साथ भगदत्त का घोर संग्राम होने लगा। उसी समय भीमसेन ने श्रीकृष्ण और अर्जुन से इरावान् की मृत्यु का सब वृत्तान्त कहा ॥८२।८६॥

भीष्मपर्व का पचानवेवाँ अध्याय समाप्त हुआ ॥ ९५ ॥

अथ षण्णवतितमोऽध्यायः ॥ ९६ ॥

सञ्जय उवाच— पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः ।
दुःखेन महताऽऽविष्टो निःश्वसन्पन्नगो यथा ॥ १ ॥
अब्रवीत्समरे राजन्वासुदेवमिदं वचः ।
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा ॥ २ ॥
कुरूणां पाण्डवानां च क्षयं घोरं महामतिः ।
स ततो निवारितवान्धृतराष्ट्रं जनेश्वरम् ॥ ३ ॥
अन्ये च बहवो वीराः संग्रामे मधुसूदन ।
निहताः कौरवैः संख्ये तथाऽस्माभिश्च कौरवाः ॥ ४ ॥
अर्थहेतोर्नरश्रेष्ठ क्रियते कर्म कुत्सितम् ।
धिगर्थान्यत्कृते ह्येवं क्रियते ज्ञातिसङ्क्षयः ॥ ५ ॥
अधनस्य मृतं श्रेयो न च ज्ञातिवधाद्धनम् ।
किं नु प्राप्स्यामहे कृष्ण हत्वा ज्ञातीन्समागतान् ॥ ६ ॥
दुर्योधनापराधेन शकुनेः सौबलस्य च ।
क्षत्रिया निधनं यान्ति कर्णदुर्मन्त्रितेन च ॥ ७ ॥
इदानीं च विजानामि सुकृतं मधुसूदन ।
कृतं राज्ञा महाबाहो याचता च सुयोधनम् ॥ ८ ॥
राज्यार्धं पञ्च वा ग्रामान्नाऽकार्षीत्स च दुर्मतिः ।
दृष्ट्वा हि क्षत्रियाञ्शूराञ्शयानान्धरणीतले ॥ ९ ॥
निन्दामि भृशमात्मानं धिगस्तु क्षत्रजीविकाम् ।
अशक्तमिति मामेते ज्ञास्यन्ते क्षत्रिया रणे ॥ १० ॥

---

छियानवेवाँ अध्याय ॥ ९६ ॥

सञ्जय ने कहा—हे महाराज ! अपने पुत्र इरावान् की मृत्यु का वृत्तान्त सुनकर अर्जुन को बड़ा दुःख हुआ । क्रोध से विह्वल होकर नाग की तरह साँसें लेते हुए वे श्रीकृष्ण से कहने लगे—हे केशव ! पहले ही महामति विदुर ने कौरवों और पाण्डवों के प्रियजन-वियोगरूप अति घोर भय का वृत्तान्त जानकर हमको और दुर्योधन आदि को युद्ध न करने का उपदेश दिया था ॥१।३॥ देखो ! हमने कौरवपक्ष के बहुत से वीरों को और कौरवों ने हमारे बहुत से वीरों को मार डाला है । हे मित्र ! लोग धन के लिए ही बुरे और निन्दित कर्म करते हैं । हम भी उसी धन के लिए ही जातिवधरूप पाप कर रहे हैं । ऐसे धन को धिक्कार है ! जाति-भाइयों को मारकर धनी बनने की अपेक्षा मर जाना ही निर्धन मनुष्य के लिए श्रेष्ठ है । हे वासुदेव ! इन भाइयों और जातिवालों को मारकर हमें क्या लाभ प्राप्त होगा ? ॥४।६॥ दुष्ट दुर्योधन और शकुनि के अपराध से तथा कर्ण की कुमन्त्रणा से ये सब वीर क्षत्रिय मारे जा रहे हैं । अब मेरी समझ में आया है कि पहले राजा युधिष्ठिर दुर्योधन से आधा राज्य या केवल पाँच गाँव माँगकर अच्छा

युद्धं तु मे न रुचितं ज्ञातिभिर्मधुसूदन ।
सञ्चोदय हयाञ्शीघ्रं धार्तराष्ट्रचमूं प्रति ॥ ११ ॥
प्रतरिष्ये महापारं भुजाभ्यां समरोदधिम् ।
नाऽयं यापयितुं कालो विद्यते माधव क्वचित् ॥ १२ ॥
एवमुक्तस्तु पार्थेन केशवः परवीरहा ।
चोदयामास तानश्वान्पाण्डुरान्वातरंहसः ॥ १३ ॥
अथ शब्दो महानासीत्तव सैन्यस्य भारत ।
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ १४ ॥
अपराह्णे महाराज संग्रामः समपद्यत ।
पर्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः ॥ १५ ॥
ततो राजंस्तव सुता भीमसेनमुपाद्रवन् ।
परिवार्य रणे द्रोणं वसवो वासवं यथा ॥ १६ ॥
ततः शान्तनवो भीष्मः कृपश्च रथिनां वरः ।
भगदत्तः सुशर्मा च धनञ्जयमुपाद्रवन् ॥ १७ ॥
हार्दिक्यो बाह्लिकश्चैव सात्यकिं समभिद्रुतौ ।
अम्बष्ठकस्तु नृपतिरभिमन्युमवास्थितः ॥ १८ ॥
शेषास्त्वन्ये महाराज शेषानेव महारथान् ।
ततः प्रववृते युद्धं घोररूपं भयावहम् ॥ १९ ॥
भीमसेनस्तु सम्प्रेक्ष्य पुत्रांस्तव जनेश्वर ।
प्रजज्वाल रणे क्रुद्धो हविषा हव्यवाडिव ॥ २० ॥

ही कार्य कर रहे थे, किन्तु दुष्ट दुर्योधन उस समझौते पर भी प्रसन्न नहीं हुआ ॥७।९॥ हे केशव ! इस समय इन वीर क्षत्रियों की मृत्यु देखकर मैं आप अपनी निन्दा कर रहा हूँ ! क्षत्रियवृत्ति को धिक्कार है ! जाति भाइयों से युद्ध करने की इच्छा मुझे कदापि नहीं है; किन्तु मैं युद्ध न करूँगा तो वीर क्षत्रियगण मुझे कायर समझेंगे। इसी से मैं युद्ध कर रहा हूँ। हे मधु-सूदन ! दुर्योधन की सेना के मध्य शीघ्र मेरा रथ ले चलो। मैं अपने बाहुबल से इस अपार समर-सागर के पार जाऊँगा। नपुंसक की तरह वृथा पश्चात्ताप में पड़ना और समय गँवाना उचित नहीं है ॥९।१२॥ शत्रुपक्ष के वीरों को मारनेवाले अर्जुन के ये वचन सुनकर कृष्णचन्द्र, पवन के वेग से चलनेवाले घोड़ों को हाँककर, उधर ही रथ ले चले। पर्वकाल में उमड़ते हुए समुद्र में जैसा शब्द होता है वैसा ही कोलाहल उस समय कौरवों की सेना में होने लगा। तीसरे पहर भीष्म के साथ पाण्डवों का घोर युद्ध होने लगा ॥१३।१५॥ जिस प्रकार वसुगण इन्द्र को चारों ओर से घेरे रहते हैं उसी प्रकार धृतराष्ट्र के पुत्र द्रोणाचार्य को अपने मध्य में करके भीमसेन की ओर बढ़े। अब महारथी भीष्म, कृपाचार्य, भगदत्त और सुशर्मा अर्जुन से युद्ध करने चले। कृतवर्मा और बाह्लीक सात्यकि से युद्ध करने चले। राजा अम्बष्ठक अभिमन्यु से युद्ध करने चले ॥१६।१८॥ अन्य महारथी लोग

पुत्रास्तु तव कौन्तेयं छादयाञ्चक्रिरे शरैः ।
प्रावृषीव महाराज जलदा इव पर्वतम् ॥ २१ ॥
स च्छाद्यमानो बहुधा पुत्रैस्तव विशाम्पते ।
सृक्किणी संलिहन्वीरः शार्दूल इव दर्पितः ॥ २२ ॥
व्यूढोरस्कं ततो भीमः पातयामास भारत ।
क्षुरप्रेण सुतीक्ष्णेन सोऽभवद्गतजीवितः ॥ २३ ॥
अपरेण तु भल्लेन पीतेन निशितेन तु ।
अपातयत्कुण्डलिनं सिंहः क्षुद्रमृगं यथा ॥ २४ ॥
ततः सुनिशितान्पीतान्समादत्त शिलीमुखान् ।
ससर्ज त्वरया युक्तः पुत्रांस्ते प्राप्य मारिष ॥ २५ ॥
प्रेषिता भीमसेनेन शरास्ते दृढधन्वना ।
अपातयन्त पुत्रांस्ते रथेभ्यः सुमहारथान् ॥ २६ ॥
अनाधृष्टिं कुण्डभेदिं वैराटं दीर्घलोचनम् ।
दीर्घबाहुं सुबाहुं च तथैव कनकध्वजम् ॥ २७ ॥
प्रपतन्त स्म वीरास्ते विरेजुर्भरतर्षभ ।
वसन्ते पुष्पशबलाश्च्युताः प्रपतिता इव ॥ २८ ॥
ततः प्रदुद्रुवुः शेषास्तव पुत्रा महाहवे ।
तं कालमिव मन्यन्तो भीमसेनं महाबलम् ॥ २९ ॥
द्रोणस्तु समरे वीरं निर्दहन्तं सुतांस्तव ।
यथाऽद्रिं वारिधाराभिः समन्ताद्व्यकिरच्छरैः ॥ ३० ॥

---

अपने समान महारथियों से युद्ध करने लगे । इसके अनन्तर दोनों पक्षों में महाभयानक युद्ध होने लगा। आपके पुत्रों को देखकर महावीर भीमसेन आहुति पड़ने से प्रज्वलित अग्नि के समान क्रोध से प्रज्वलित हो उठे। आपके पुत्र वैसे ही भीमसेन पर बाण बरसाने लगे जैसे मेघ पर्वत पर जल बरसाते हैं ॥१९।२१॥ पराक्रमी भीमसेन क्रोध से होंठ चाटते हुए आपके पुत्रों पर बाण बरसा रहे थे । उन्होंने तीक्ष्ण क्षुरप्र बाण से व्यूढोरस्क नाम के राजकुमार का सिर काट डाला । फिर एक तीक्ष्ण भल्ल बाण मारकर कुण्डली नाम के राजकुमार को वैसे ही मार डाला जैसे सिंह मृग को मार डालता है ॥२२।२४॥ अब वे स्फूर्ति से आपके अन्य पुत्रों पर बाण बरसाने लगे। हे राजेन्द्र! भीमसेन के अव्यर्थ बाणों के प्रहार से अनाधृष्य, कुण्डभेदी, वैराट, दीर्घलोचन, दीर्घबाहु, सुबाहु और कनकध्वज नामक आपके पुत्र मरकर रथ पर से गिर पड़े । पृथ्वी पर पड़े हुए वे वीर राजकुमार उखड़कर गिरे हुए पुष्प पूर्ण आम के वृक्षों की तरह देख पड़े ॥२५।२८॥ महाबाहु भीमसेन को साक्षात् काल के समान सन्मुख देखकर आपके अन्य पुत्र भय के मारे इधर उधर भागने लगे। हे महाराज! महावीर द्रोणाचार्य भीमसेन के हाथों आपके पुत्रों की मृत्यु देखकर उन पर तीक्ष्ण बाणों की वर्षा करने लगे । द्रोण के बाणों से पीड़ित होकर भी भीमसेन ने आपके पुत्रों को मारकर अपने

तत्राऽऽद्भुतमपश्याम कुन्तीपुत्रस्य पौरुषम् ।
द्रोणेन वार्यमाणोऽपि निजघ्ने यत्सुतांस्तव ॥ ३१ ॥
यथा गोवृषभो वर्षं सन्धारयति खात्पतत् ।
भीमस्तथा द्रोणमुक्तं शरवर्षमदीधरत् ॥ ३२ ॥
अद्भुतं च महाराज तत्र चक्रे वृकोदरः ।
यत्पुत्रांस्तेऽवधीत्संख्ये द्रोणं चैव न्यवारयत् ॥ ३३ ॥
पुत्रेषु तव वीरेषु चिक्रीडाऽर्जुनपूर्वजः ।
मृगेष्विव महाराज चरन्व्याघ्रो महाबलः ॥ ३४ ॥
यथा हि पशुमध्यस्थो दारयेत पशून्वृकः ।
वृकोदरस्तव सुतांस्तथा व्यद्रावयद्रणे ॥ ३५ ॥
गाङ्गेयो भगदत्तश्च गौतमश्च महारथाः ।
पाण्डवं रभसं युद्धे वारयामासुरर्जुनम् ॥ ३६ ॥
अस्त्रैरस्त्राणि संवार्य तेषां सोऽतिरथो रणे ।
प्रवीरांस्तव सैन्येषु प्रेषयामास मृत्यवे ॥ ३७ ॥
अभिमन्युस्तु राजानमम्बष्ठं लोकविश्रुतम् ।
विरथं रथिनां श्रेष्ठं वारयामास सायकैः ॥ ३८ ॥
विरथो वध्यमानस्तु सौभद्रेण यशस्विना ।
अवप्लुत्य रथात्तूर्णमम्बष्ठो वसुधाधिपः ॥ ३९ ॥
असिं चिक्षेप समरे सौभद्रस्य महात्मनः ।
आरुरोह रथं चैव हार्दिक्यस्य महाबलः ॥ ४० ॥
आपतन्तं तु निस्त्रिंशं युद्धमार्गविशारदः ।
लाघवाद्व्यंसयामास सौभद्रः परवीरहा ॥ ४१ ॥

अद्भुत पौरुष का परिचय दिया। बली साँड जैसे आकाश से गिरती हुई बूँदों के वेग को सहज ही सह लेता है, वैसे ही भीमसेन भी द्रोणाचार्य के बाणों को सहने लगे ॥२८।३२॥ भीमसेन ने एक साथ द्रोणाचार्य का सामना किया और आपके पुत्रों को भी मारा, यह देखकर सबको बड़ा आश्चर्य हुआ। हे महाराज! व्याघ्र जैसे मृगों के झुण्ड में घूमता और क्रीड़ा करता है वैसे ही महाबली भीमसेन भी आपके पुत्रों के मध्य में विचरते हुए युद्ध की क्रीड़ा करने लगे। एक भेड़िया जैसे सहस्रों पशुओं को मार डालता है वैसे ही भीमसेन आपके पुत्रों के मध्य में जाकर उन्हें भगाने लगे ॥३२।३५॥ इधर महारथी भीष्म, भगदत्त और कृपाचार्य [illegible] अर्जुन को बड़े वेग से आते देखकर स्फूर्ति के साथ उन्हें रोकने लगे। अतिरथी योद्धा अर्जुन ने अपने दिव्य अस्त्रों से उनके अस्त्रों को निष्फल कर दिया। वे कौरवसेना के मुख्य-मुख्य वीरों को मारने लगे। अभिमन्यु ने अगणित बाण मार-कर राजा अम्बष्ठ के रथ के टुकड़े-टुकड़े कर डा

व्यंसितं वीक्ष्य निस्त्रिंशं सौभद्रेण रणे तदा ।
साधु साध्विति सैन्यानां प्रणादोऽभूद्विशाम्पते ॥ ४२ ॥
धृष्टद्युम्नमुखास्त्वन्ये तव सैन्यमयोधयन् ।
तथैव तावकाः सर्वे पाण्डुसैन्यमयोधयन् ॥ ४३ ॥
तत्राऽऽक्रन्दो महानासीत्तव तेषां च भारत ।
निघ्नतां दृढमन्योन्यं कुर्वतां कर्म दुष्करम् ॥ ४४ ॥
अन्योन्यं हि रणे शूराः केशेष्वाक्षिप्य मानिनः ।
नखदन्तैरयुध्यन्त मुष्टिभिर्जानुभिस्तथा ॥ ४५ ॥
तलैश्चैवाऽथ निस्त्रिंशैर्बाहुभिश्च सुसंस्थितैः ।
विवरं प्राप्य चाऽन्योन्यमनयन्यमसादनम् ॥ ४६ ॥
न्यहनच्च पिता पुत्रं पुत्रश्च पितरं तथा ।
व्याकुलीकृतसर्वाङ्गा युयुधुस्तत्र मानवाः ॥ ४७ ॥
रणे चारूणि चापानि हेमपृष्ठानि मारिष ।
हतानामपविद्धानि कलापाश्च महाधनाः ॥ ४८ ॥
जातरूपमयैः पुङ्खै राजतैर्निशिताः शराः ।
तैलधौता व्यराजन्त निर्मुक्तभुजगोपमाः ॥ ४९ ॥
हस्तिदन्तत्सरून्खड्गाञ्जातरूपपरिष्कृतान् ।
चर्माणि चाऽपविद्धानि रुक्मचित्राणि धन्विनाम् ॥ ५० ॥
सुवर्णविकृतप्रासान्पट्टिशान्हेमभूषितान् ।
जातरूपमयाश्चर्ष्टीः शक्तीश्च कनकोज्ज्वलाः ॥ ५१ ॥

॥३६।३८॥ अभिमन्यु के बाणों से रथ टूटते देखकर राजा अम्बष्ठ रथ से उतर पड़े और अभिमन्यु पर खड्ग का वार करके हार्दिक्य के रथ पर चढ़ गये। युद्धनिपुण शत्रुदमन अभिमन्यु ने अम्बष्ठ के उस खड्ग को टुकड़े-टुकड़े कर डाला। यह देखकर सब सैनिक "वाह वाह" करने लगे ॥३९।४२॥ हे महाराज ! धृष्टद्युम्न आदि पाण्डवपक्ष के योद्धा आपकी सेना से और आपके योद्धा उनकी सेना मे भिड़कर घोर युद्ध करने लगे। दोनों पक्ष के सैनिक लोग परस्पर भिड़कर एक दूसरे के केश पकड़कर खींचने और नख, दाँत घूँसे, घुटने, थप्पड़, खड्ग, कुहनी आदि के प्रहारों से मरते और मारते थे ॥४३।४६॥ युद्ध के आवेश मे आकर पिता पुत्रों को और पुत्र पिता आदि को मार रहे थे। शत्रुपक्ष के बाणों से योद्धाओं के अङ्ग कट-फट जाते थे। मरे हुए लोगों के सुवर्णमण्डित पीठ और मूठवाले मनोहर धनुष और बहुमूल्य अलङ्कार युद्धभूमि में इधर-उधर दिखाई दे रहे थे। सोने-चाँदी से शोभित, तीक्ष्ण बाण केंचुल से निकले हुए नागों की तरह रणभूमि में गिरते थे ॥४७।४९॥ हाथीदाँत की मूठों से शोभित सुवर्णमण्डित खड्ग, ढालें, प्रास, पट्टिश, सुवर्णमण्डित ऋष्टि, शक्ति, बढ़िया कवच, भारी मूसल, भिन्दिपाल, विचित्र स्वर्णभूषित धनुष, अनेक प्रकार के परिघ, चामर, व्यजन और अन्य कई प्रकार के अस्त्र-शस्त्रों को हाथ में लिये

सुसन्नाहाश्च पतिता मुसलानि गुरूणि च ।
परिघान्पट्टिशांश्चैव भिन्दिपालांश्च मारिष ॥ ५२ ॥
पतितान्विविधांश्चापांश्चित्रान्हेमपरिष्कृतान् ।
कुथा बहुविधाकाराश्चामरा व्यजनानि च ॥ ५३ ॥
नानाविधानि शस्त्राणि प्रगृह्य पतिता नराः ।
जीवन्त इव दृश्यन्ते गतसत्वा महारथाः ॥ ५४ ॥
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकाः ।
गजवाजिरथक्षुण्णाः शेरते स्म नराः क्षितौ ॥ ५५ ॥
तथैवाऽश्वनृनागानां शरीरैर्विबभौ तदा ।
सञ्छन्ना वसुधा राजन्पर्वतैरिव सर्वशः ॥ ५६ ॥
समरे पतितैश्चैव शक्त्यृष्टिशरतोमरैः ।
निस्त्रिंशैः पट्टिशैः प्रासैरयस्कुन्तैः परश्वधैः ॥ ५७ ॥
परिघैर्भिन्दिपालैश्च शतघ्नीभिश्च मारिष ।
शरीरैः शस्त्रनिर्भिन्नैः समास्तीर्यत मेदिनी ॥ ५८ ॥
विशब्दैरल्पशब्दैश्च शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्न विबभौ निचिता मही ॥ ५९ ॥
सतलत्रैः सकेयूरैर्बाहुभिश्चन्दनोक्षितैः ।
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ ६० ॥
*बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः* ।
पातितैर्ऋषभाक्षाणां बभौ भारत मेदिनी ॥ ६१ ॥
कवचैः शोणितादिग्धैर्विप्रकीर्णैश्च काञ्चनैः ।
रराज सुभृशं भूमिः शान्तार्चिभिरिवाऽनलैः ॥ ६२ ॥

महारथी वीर मर जाने पर भी दूर से जीवित से जान पड़ते थे ॥५०।५४॥ बहुतों के शरीर गदा के प्रहार से चिथड़ा हो गये थे, बहुतों के सिर मूसल की चोट से फट गये थे और बहुत से योद्धा हाथी, घोड़े, रथ आदि के नीचे कुचल गये थे। ऐसे असंख्य मनुष्य जहाँ-तहाँ पड़े हुए थे। हाथियों, घोड़ों और मनुष्यों के शरीरों के ढेरों से यह पृथ्वी पर्वतमयी सी जान पड़ती थी। शस्त्रों से छिन्न-भिन्न नर-शरीरों से और शक्ति, ऋष्टि, तोमर, बाण, खड्ग, पट्टिश, प्रास, बर्छी, परशु, परिघ, भिन्दिपाल और शतघ्नी आदि से पृथ्वी भरी पड़ी थी ॥५५।५८॥ हे महाराज! उनमें से कोई चुपचाप पड़ा था, कोई धीरे-धीरे कराह रहा था, कोई जोर से चिल्ला रहा था और कोई बिल्कुल मरा पड़ा था। केयूरभूषित चन्दनचर्चित बाहु, हाथी की सूँड़ के समान जाँघ, चूड़ामणि और कुण्डलों से भूषित सिर सर्वत्र कटे पड़े थे। उनसे रणभूमि की अपूर्व बीभत्स शोभा हो रही थी। रक्त से सने हुए स्वर्णमय कवच चारों ओर पड़े हुए थे, जिनसे वह युद्धभूमि अग्नि-

विप्रविद्धैः कलापैश्च पतितैश्च शरासनैः ।
विप्रकीर्णैः शरैश्चैव रुक्मपुङ्खैः समन्ततः ॥ ६३ ॥
रथैश्च सर्वतोभग्नैः किङ्किणीजालभूषितैः ।
वाजिभिश्च हतैर्बाणैः स्त्रस्तजिह्वैः सशोणितैः ॥ ६४ ॥
अनुकर्षैः पताकाभिरुपासङ्गैर्ध्वजैरपि ।
प्रवीराणां महाशङ्खैर्विप्रकीर्णैश्च पाण्डुरैः ॥ ६५ ॥
स्त्रस्तहस्तैश्च मातङ्गैः शयानैर्विबभौ मही ।
नानारूपैरलङ्कारैः प्रमदेवाऽभ्यलंकृता ॥ ६६ ॥
दन्तिभिश्चाऽपरैस्तत्र सप्रासैर्गाढवेदनैः ।
करैः शब्दं विमुञ्चद्भिः शीकरं च मुहुर्मुहुः ॥ ६७ ॥
विबभौ तद्रणस्थानं स्यन्दमानैरिवाऽचलैः ।
नानारागैः कम्बलैश्च परिस्तोमैश्च दन्तिनाम् ॥ ६८ ॥
वैदूर्यमणिदण्डैश्च पतितैरङ्कुशैः शुभैः ।
घण्टाभिश्च गजेन्द्राणां पतिताभिः समन्ततः ॥ ६९ ॥
विपाटितविचित्राभिः कुथाभिरङ्कुशैस्तथा ।
ग्रैवेयैश्चित्ररूपैश्च रुक्मकक्ष्याभिरेव च ॥ ७० ॥
यन्त्रैश्च बहुधा च्छिन्नैस्तोमरैश्चाऽपि काञ्चनैः ।
अश्वानां रेणुकपिलै रुक्मच्छन्नैरुरश्छदैः ॥ ७१ ॥
सादिनां भुजगैश्छिन्नैः पतितैः साङ्गदैस्तथा ।
प्रासैश्च विमलैस्तीक्ष्णैर्विमलाभिस्तथर्ष्टिभिः ॥ ७२ ॥
उष्णीषैश्च तथा चित्रैर्विप्रविद्धैस्ततस्ततः ।
विचित्रैर्बाणवर्षैश्च जातरूपपरिष्कृतैः ॥ ७३ ॥

शिखामयी सी प्रतीत होती थी ॥५९।६२॥ सुवर्णपुङ्ख बाण, धनुष, तर्कस, किङ्किणीजालभूषित टूटे हुए रथ, रक्त से युक्त निकली हुई जीभ, घोडे, रथ, अनुकर्ष, पताका, मटमैली ध्वजा, महाशङ्ख आदि सर्वत्र पडे थे। उनसे वह पृथ्वी अलङ्कारों से भूषित स्त्री के समान शोभायमान हो रही थी। हाथियों की सूँडे कट गई थीं और वे पृथ्वी पर पडे थे। प्रास के प्रहार से घायल और गहरी यन्त्रणा से पीडित हाथी चीत्कार करते हुए सूँड पटक रहे थे। उनसे वह पृथ्वी झरनों से शोभित पर्वतों से व्याप्त सी जान पड़ती थी ॥६३।६८॥ तरह-तरह के कम्बल, हाथियो की विचित्र झूले, वडूर्यमणिमण्डित दण्ड, अँकुश, घण्टा, फटे हुए विचित्र आसन, विचित्र कण्ठभूषण, सोने की जञ्जीरें, छिन्न भिन्न यन्त्र, काञ्चनमण्डित्त तोमर, धूल से सने हुए छत्र, कवच, सवारो की अङ्गदभूषित कटी हुई भुजाएँ, विमल तीक्ष्ण प्रास, यष्टि, पगडी, सुवर्णमय विचित्र बाण, घोड़ो के परिमर्दित विचित्र कम्बल, राङ्कव कम्बल, राजाओं के मस्तक की विचित्र चूड़ामणि,

अश्वास्तरपरिस्तोमैराङ्कवैर्मृदितैस्तथा ।
नरेन्द्रचूडामणिभिर्विचित्रैश्च महाधनैः ॥ ७४ ॥
छत्रैस्तथाऽपविद्धैश्च चामरैर्व्यजनैरपि ।
पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः ॥ ७५ ॥
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः ।
अपविद्धैर्महाराज सुवर्णोज्ज्वलकुण्डलैः ॥ ७६ ॥
ग्रहनक्षत्रशबला द्यौरिवाऽऽसीद्वसुन्धरा ।
एवमेते महासेने मृदिते तत्र भारत ॥ ७७ ॥
परस्परं समासाद्य तत्र तेषां च संयुगे ।
तेषु श्रान्तेषु भग्नेषु मृदितेषु च भारत ॥ ७८ ॥
रात्रिः समभवत्तत्र नाऽपश्याम ततोऽनुगान् ।
ततोऽवहारं सैन्यानां प्रचक्रुः कुरुपाण्डवाः ॥ ७९ ॥
रजनीमुखे सुरौद्रे तु वर्तमाने महाभये ।
अवहारं ततः कृत्वा सहिताः कुरुपाण्डवाः ।
न्यविशन्त यथाकालं गत्वा स्वशिविरं तदा ॥ ८० ॥

*इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि अष्टमदिवसयुद्धावहारे षण्णवतितमोऽध्यायः ॥ ९६ ॥*

---

छत्र, चामर, व्यजन और वीरों के मनोहर कुण्डलों से शोभित श्मश्रुयुक्त प्रकाशपूर्ण सिर इधर-उधर पड़े थे। उनसे यह पृथ्वी ग्रह-नक्षत्र-भूषित आकाश के समान शोभा पा रही थी ॥६८।७७॥ हे नरनाथ! दोनों पक्ष के वीर जब अधिकता से मारे जा चुके तब मरने से बचे हुए योद्धा थककर भागने और कुचले जाने लगे। इतने में महाभयङ्कर रात्रि आ गई। उस समय समरभूमि में कुछ भी नहीं सूझता था। तब कौरवों और पाण्डवों ने युद्ध समाप्त कर दिया। सब लोग अपने-अपने डेरोंमें जाकर विश्राम करने लगे॥७७।८०॥

भीष्मपर्व का छियानवेवाँ अध्याय समाप्त हुआ ॥ ९६ ॥

अथ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

सञ्जय उवाच — ततो दुर्योधनो राजा शकुनिश्चाऽपि सौबलः ।
दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्जयः ॥ १ ॥
समागम्य महाराज मन्त्रं चक्रुर्विवक्षितम् ।
कथं पाण्डुसुताः संख्ये जेतव्याः सगणा इति ॥ २ ॥

---

सत्तानवेवाँ अध्याय ॥ ९७ ॥

सञ्जय ने कहा — हे राजेन्द्र! इसके पश्चात् राजा दुर्योधन, शकुनि, दुःशासन और कर्ण तीनों मिलकर सम्मति करने लगे कि किस प्रकार सेना सहित पाण्डवों को पराजित किया जा सकता है। अब दुर्योधन ने कर्ण और शकुनि को सम्बोधन करके कहा — हे वीरो! मेरी समझ में नहीं आता कि द्रोणाचार्य

ततो दुर्योधनो राजा सर्वांस्तानाह मन्त्रिणः ।
सूतपुत्रं समाभाष्य सौबलं च महाबलम् ॥ ३ ॥
द्रोणो भीष्मः कृपः शल्यः सौमदत्तिश्च संयुगे ।
न पार्थान्प्रतिबाधन्ते न जाने तच्च कारणम् ॥ ४ ॥
अवध्यमानास्ते चाऽपि क्षपयन्ति बलं मम ।
सोऽस्मि क्षीणबलः कर्ण क्षीणशस्त्रश्च संयुगे ॥ ५ ॥
निकृतः पाण्डवैः शूरैरवध्यैर्दैवतैरपि ।
सोऽहं संशयमापन्नः प्रहरिष्ये कथं रणे ॥ ६ ॥
तमब्रवीन्महाराज सूतपुत्रो नराधिपम् ।
कर्ण उवाच—मा शोच भरतश्रेष्ठ करिष्येऽहं प्रियं तव ॥ ७ ॥
भीष्मः शान्तनवस्तूर्णमपयातु महारणात् ।
निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत ॥ ८ ॥
अहं पार्थान्हनिष्यामि सहितान्सर्वसोमकैः ।
पश्यतो युधि भीष्मस्य शपे सत्येन ते नृप ॥ ९ ॥
पाण्डवेषु दयां नित्यं स हि भीष्मः करोति वै ।
अशक्तश्च रणे भीष्मो जेतुमेतान्महारथान् ॥ १० ॥
अभिमानी रणे भीष्मो नित्यं चापि रणप्रियः ।
स कथं पाण्डवान्युद्धे जेष्यते तात सङ्गतान् ॥ ११ ॥
स त्वं शीघ्रमितो गत्वा भीष्मस्य शिबिरं प्रति ।
अनुमान्य गुरुं वृद्धं शस्त्रं न्यासय भारत ॥ १२ ॥

भीष्म, कृपाचार्य, शल्य और भूरिश्रवा, ये लोग पाण्डवों को क्यों नहीं परास्त करते या मारते । पाण्डव लोग जीवित रहकर बिना किसी बाधा के हमारे पक्ष की सेना को नष्ट कर रहे हैं । हे कर्ण ! मेरी सेना और अस्त्र-शस्त्र दिन-दिन घटते जा रहे हैं । सुनता हूँ, पाण्डवों को देवता भी नहीं मार सकते । वे ऐसे ही शूर हैं । मैं उन्हें किस प्रकार मारूँगा या परास्त करूँगा ! मुझे बड़ा सन्देह और चिन्ता हो रही है ॥१।६॥ कर्ण ने कहा —हे राजेन्द्र ! आप वृथा शोक न करें । मैं आपका प्रिय कार्य करूँगा । केवल पितामह भीष्म को शीघ्र इस युद्ध से पृथक् हो जाने दो । मैं प्रतिज्ञा करता हूँ कि भीष्म अस्त्र-शस्त्र त्याग कर युद्ध से हट जायँ तो मैं, उनके सम्मुख ही, सोमकों सहित पाण्डवों को मार डालूँगा ॥७।९॥ भीष्म पितामह पाण्डवों पर बहुत दया रखते हैं । इस कारण वे कभी पाण्डवों को परास्त नहीं कर सकेंगे । भीष्म अत्यन्त समर-प्रिय हैं । वे अभिमानी भीष्म कैसे पाण्डवों को जीतकर युद्ध को समाप्त कर देंगे ! हे राजेन्द्र ! आप शीघ्र भीष्म के शिविर में जाइए । वे आपके गुरुजन, वृद्ध और मान्य हैं । आप उनसे प्रार्थनापूर्वक अनुरोध कीजिए जिससे शस्त्र रखकर वे युद्ध से अलग हो जायें । वे शस्त्रत्याग कर देंगे तो आप निश्चय जानिए कि मैं अकेला ही बन्धु-बान्धव-सुहृद्गण-सहित पाण्डवों को मार डालूँगा ॥१०।१२॥

न्यस्तशस्त्रे ततो भीष्मे निहतान्पश्य पाण्डवान् ।
मयैकेन रणे राजन्ससुहृद्गणबान्धवान् ॥ १३ ॥
एवमुक्तस्तु कर्णेन पुत्रो दुर्योधनस्तव ।
अब्रवीद्भ्रातरं तत्र दुःशासनमिदं वचः ॥ १४ ॥
अनुयात्रं यथा सर्वं सज्जीभवति सर्वशः ।
दुःशासन तथा क्षिप्रं सर्वमेवोपपादय ॥ १५ ॥
एवमुक्त्वा ततो राजन्कर्णमाह जनेश्वरः ।
अनुमान्य रणे भीष्ममेषोऽहं द्विपदां वरम् ॥ १६ ॥
आगमिष्ये ततः क्षिप्रं त्वत्सकाशमरिन्दम ।
अपक्रान्ते ततो भीष्मे प्रहरिष्यसि संयुगे ॥ १७ ॥
निष्पपात ततस्तूर्णं पुत्रस्तव विशाम्पते ।
सहितो भ्रातृभिस्तैस्तु देवैरिव शतक्रतुः ॥ १८ ॥
ततस्तं नृपशार्दूलं शार्दूलसमविक्रमम् ।
आरोहयद्धयं तूर्णं भ्राता दुःशासनस्तदा ॥ १९ ॥
अङ्गदी बद्धमुकुटो हस्ताभरणवान्नृप ।
धार्तराष्ट्रो महाराज विबभौ स पथि व्रजन् ॥ २० ॥
भण्डीपुष्पनिकाशेन तपनीयनिभेन च ।
अनुलिप्तः परार्ध्येन चन्दनेन सुगन्धिना ॥ २१ ॥
अरजोम्बरसंवीतः सिंहखेलगतिर्नृप ।
शुशुभे विमलार्चिष्मान्नभसीव दिवाकरः ॥ २२ ॥
तं प्रयान्तं नरव्याघ्रं भीष्मस्य शिविरं प्रति ।
अनुजग्मुर्महेष्वासाः सर्वलोकस्य धन्विनः ॥ २३ ॥

हे राजेन्द्र ! कर्ण के ऐसे वचन सुनकर दुर्योधन ने दुःशासन से कहा—हे भाई ! शीघ्र मेरे साथियों को प्रस्तुत होने की आज्ञा दो। अब दुर्योधन ने कर्ण से कहा कि हे शत्रुदमन ! मैं भीष्म को अस्त्र-शस्त्र त्यागकर युद्ध से पृथक् होने के लिए प्रसन्न करके अभी तुम्हारे निकट आता हूँ। भीष्म युद्ध करना छोड़ देंगे तो तुम शीघ्र युद्ध करके पाण्डवों को मारना। हे महाराज ! कर्ण से यों कहकर देवताओं के मध्य में इन्द्र के समान अपने भाइयों के साथ राजा दुर्योधन भीष्म के पास जाने को प्रस्तुत हुए ॥१४।१८॥ दुःशासन ने पराक्रमी दुर्योधन को घोड़े पर सवार कराया। सिंह के समान रोंगटे वीर दुर्योधन ने अङ्गद, मुकुट और हाथों के अन्य आभूषण पहने। वे मजीठ के पुष्प के समान कान्तिवाले, सुनहरे रङ्ग के, शरीर में सुगन्धित चन्दन और अङ्गराग लगाये हुए थे। स्वच्छ वस्त्र और भूषण पहने सूर्य के समान तेजस्वी राजा दुर्योधन स्फूर्ति से भीष्म के शिविर को चले ॥१९।२२॥ जैसे देवगण देवलोक में इन्द्र की

अभिवाद्य ततो भीष्मं निषण्णः परमासने ।
काञ्चने सर्वतोभद्रे स्पर्द्धयास्तरणसंवृते ॥ ३५ ॥
उवाच प्राञ्जलिर्भीष्मं वाष्पकण्ठोऽश्रुलोचनः ।
त्वां वयं हि समाश्रित्य संयुगे शत्रुसूदन ॥ ३६ ॥
उत्सहेम रणे जेतुं सेन्द्रानपि सुरासुरान् ।
किमु पाण्डुसुतान्वीरान्ससुहृद्गणबान्धवान् ॥ ३७ ॥
तस्मादर्हसि गाङ्गेय कृपां कर्तुं मयि प्रभो ।
जहि पाण्डुसुतान्वीरान्महेन्द्र इव दानवान् ॥ ३८ ॥
अहं सर्वान्महाराज निहनिष्यामि सोमकान् ।
पञ्चालान्केकयैः सार्धं करूषांश्चेति भारत ॥ ३९ ॥
त्वद्वचः सत्यमेवाऽस्तु जहि पार्थान्समागतान् ।
सोमकांश्च महेष्वासान्सत्यवाग्भव भारत ॥ ४० ॥
दयया यदि वा राजन्द्वेष्यभावान्मम प्रभो ।
मन्दभाग्यतया चापि मम रक्षसि पाण्डवान् ॥ ४१ ॥
अनुजानीहि समरे कर्णमाहवशोभिनम् ।
स जेष्यति रणे पार्थान्ससुहृद्गणबान्धवान् ॥ ४२ ॥
स एवमुक्त्वा नृपतिः पुत्रो दुर्योधनस्तव ।
नोवाच वचनं किञ्चिद्भीष्मं सत्यपराक्रमम् ॥ ४३ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मं प्रति दुर्योधनवाक्ये सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

भीष्म के शिविर में पहुँचकर सवारी से उतरे और पितामह के पास गये । उन्हें प्रणाम करके, सर्वतोभद्र महामूल्य गलीचे के ऊपर सोने के सिंहासन पर बैठकर, हाथ जोड़कर नेत्रों में आँसू भरे हुए वे गद्गद् स्वर से कहने लगे—हे शत्रुनाशन ! हम आपका आश्रय लेकर पाण्डवों की कौन कहे, देवताओं और दानवों को भी युद्ध में परास्त करने का साहस कर सकते हैं ॥३४।३७॥ इसलिए हे पितामह ! इन्द्र जैसे दानवों को परास्त करते हैं वैसे ही आप पाण्डवों को परास्त कीजिए । हे महामते ! आप सब सोमकों, पाञ्चालों, केकयों और करूषों को परास्त करने का प्रण कर चुके हैं । इस समय वह अपना वचन सत्य कीजिए । अथवा जो आप पाण्डवों पर दया या हम पर विद्वेष की दृष्टि रखने के या हमारे अभाग्य के कारण पाण्डवों को मार डालना न चाहते हों तो फिर युद्धप्रिय कर्ण को युद्ध करने की आज्ञा दे दीजिए । *वे समर में बन्धु-बान्धवों-सहित पाण्डवों को परास्त* करके मार डालने के लिए प्रस्तुत हैं । कौरवश्रेष्ठ दुर्योधन भीष्म से यह कहकर चुप हो रहे ॥३८।४३॥

---

भीष्मपर्व का सत्तानवेवाँ अध्याय समाप्त हुआ ॥ ९७ ॥

अथ अष्टनवतितमोऽध्यायः ॥ ९८ ॥

सञ्जय उवाच — वाक्शल्यैस्तव पुत्रेण सोऽतिविद्धो महामनाः ।
दुःखेन महताऽऽविष्टो नोवाचाऽप्रियमण्वपि ॥ १ ॥
स ध्यात्वा सुचिरं कालं दुःखरोषसमन्वितः ।
श्वसमानो यथा नागः प्रणुन्नो वाक्शलाकया ॥ २ ॥
उद्वृत्य चक्षुषी कोपान्निर्दहन्निव भारत ।
सदेवासुरगन्धर्वं लोकं लोकविदां वरः ॥ ३ ॥
अब्रवीत्तव पुत्रं स सामपूर्वमिदं वचः ।
किं त्वं दुर्योधनैवं मां वाक्शल्यैरपकृन्तसि ॥ ४ ॥
घटमानं यथाशक्ति कुर्वाणं च तव प्रियम् ।
जुह्वानं समरे प्राणांस्तव वै प्रियकाम्यया ॥ ५ ॥
यदा तु पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत् ।
पराजित्य रणे शक्रं पर्याप्तं तन्निदर्शनम् ॥ ६ ॥
यदा च त्वां महाबाहो गन्धर्वैर्हृतमोजसा ।
अमोचयत्पाण्डुसुतः पर्याप्तं तन्निदर्शनम् ॥ ७ ॥
द्रवमाणेषु शूरेषु सोदरेषु तव प्रभो ।
सूतपुत्रे च राधेये पर्याप्तं तन्निदर्शनम् ॥ ८ ॥
यच्च नः सहितान्सर्वान्विराटनगरे तदा ।
एक एव समुद्यातः पर्याप्तं तन्निदर्शनम् ॥ ९ ॥
द्रोणं च युधि संरब्धं मां च निर्जित्य संयुगे ।
वासांसि स समादत्त पर्याप्तं तन्निदर्शनम् ॥ १० ॥

अट्ठानवेवाँ अध्याय ॥ ९८ ॥

सञ्जय कहते हैं—हे राजेन्द्र ! वाक्य-बाण द्वारा दुर्योधन ने भीष्म पितामह के मर्मस्थल में चोट पहुँचाई। वे दुःख से अत्यन्त कातर और व्यथित होकर महानाग की तरह श्वास लेते हुए शान्त हो रहे। दूसरे काल के समान भीष्म की आँखें क्रोध से लाल होकर ऊपर चढ़ गईं। वे इस प्रकार देखने लगे मानो देवता-दैत्य-गन्धर्व-मनुष्य आदि सहित तीनों लोकों को भस्म कर डालेंगे; किन्तु उन्होंने कोई अप्रिय या कड़ी बात नहीं कही। क्षण भर के पश्चात् शान्त भाव से समझाते हुए पितामह बोले—सुनो, दुर्योधन ! मैं प्राणों की अपेक्षा न करके यथाशक्ति यत्नपूर्वक तुम्हारा प्रिय करने की चेष्टा कर रहा हूँ। तब भी तुम ऐसे वचन-बाणों से क्यों मेरे मर्मस्थल को चोट पहुँचाते हो ? अर्जुन ने खाण्डव-दाह के समय इन्द्र आदि देवताओं को जीतकर अग्नि को तृप्त किया था, वही उनके पराक्रम का यथेष्ट प्रमाण है ॥१।६॥ गन्धर्वगण जब तुमको पकड़कर ले चले थे, तुम्हारे शूर भाई और कर्ण तुमको छोड़कर भाग गये थे तब अर्जुन, तुमको छुड़ाकर, अपने पराक्रम का यथेष्ट परिचय दे चुके हैं। विराट नगर में गायें हरने के

तथा द्रौणिं महेष्वासं शारद्वतमथाऽपि च ।
गोग्रहे जितवान्पूर्वं पर्याप्तं तन्निदर्शनम् ॥ ११ ॥
विजित्य च यदा कर्णं सदा पुरुषमानिनम् ।
उत्तरायै ददौ वस्त्रं पर्याप्तं तन्निदर्शनम् ॥ १२ ॥
निवातकवचान्युद्धे वासवेनाऽपि दुर्जयान् ।
जितवान्समरे पार्थः पर्याप्तं तन्निदर्शनम् ॥ १३ ॥
को हि शक्तो रणे जेतुं पाण्डवं रभसं तदा ।
यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः ॥ १४ ॥
वासुदेवोऽनन्तशक्तिः सृष्टिसंहारकारकः ।
सर्वेश्वरो देवदेवः परमात्मा सनातनः ॥ १५ ॥
उक्तोऽसि बहुशो राजन्नारदाद्यैर्महर्षिभिः ।
त्वं तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन ॥ १६ ॥
मुमूर्षुर्हि नरः सर्वान्वृक्षान्पश्यति काञ्चनान् ।
तथा त्वमपि गान्धारे विपरीतानि पश्यसि ॥ १७ ॥
स्वयं वैरं महत्कृत्वा पाण्डवैः सह सृञ्जयैः ।
युद्ध्यस्व तानद्य रणे पश्यामः पुरुषो भव ॥ १८ ॥
अहं तु सोमकान्सर्वान्पञ्चालांश्च समागतान् ।
निहनिष्ये नरव्याघ्र वर्जयित्वा शिखण्डिनम् ॥ १९ ॥
तैर्वाऽहं निहतः संख्ये गमिष्ये यमसादनम् ।
तान्वा निहत्य समरे प्रीतिं दास्याम्यहं तव ॥ २० ॥

समय हम सब योद्धा मिलकर भी अकेले अर्जुन का कुछ नहीं कर सके, परन्तु उन्होंने हम सबको जीत लिया। यही उनके बल का यथेष्ट परिचय है। उस समय अर्जुन कुपित द्रोणाचार्य को, मुझको, महारथी अश्वत्थामा को और कृपाचार्य को जीतकर हम सबके वस्त्र उतार ले गये थे, यही उनके बल का श्रेष्ठ निदर्शन है ॥७।१०॥ अपने को शूर और मर्द मानकर सदा अभिमान करने वाले कर्ण को भी उस समय जीतकर अर्जुन उसके वस्त्र ले गये थे और उसके वे वस्त्र बालिका उत्तरा को दिये थे, वही उनके पराक्रम का अच्छा परिचय है। इन्द्र भी जिन्हें हरा नहीं सके उन निवात कवच दानवों को अर्जुन ने सहज में मार डाला, यही उनके बल का श्रेष्ठ प्रमाण है ॥११।१३॥ हे राजेन्द्र! नारद आदि महर्षि जिन्हें महाशक्तिसम्पन्न, सृष्टि स्थिति प्रलयकारी, सब के ईश्वर, देवदेव, परमात्मा और सनातन पुरुष कहते हैं, वह शङ्ख-चक्र-गदा पद्मधारी, विश्व रक्षक, वासुदेव अर्जुन के सहायक और रक्षक हैं। उन महाप्रतापी यशस्वी अर्जुन को युद्ध में कौन परास्त कर सकता है? हे दुर्योधन! मोह के वश होने से तुम्हें कार्य अकार्य का ज्ञान नहीं है ॥१४।१६॥ मृत्यु के वश मनुष्य जैसे साधारण वृक्षों को सुवर्णमय देखता है वैसे ही तुम सब बातों को विपरीत देख रहे हो। तुमने आप ही पहले अन्याय करके सृञ्जयों और पाण्डवों के साथ वैरभाव

पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि ।
वरदानात्पुमाञ्जातः सैषा वै स्त्री शिखण्डिनी ॥ २१ ॥
तमहं न हनिष्यामि प्राणत्यागेऽपि भारत ।
याऽसौ प्राङ्निर्मिता धात्रा सैषा वै स्त्री शिखण्डिनी २२ ॥
सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्ता महारणम् ।
यं जनाः कथयिष्यन्ति यावत्स्थास्यति मेदिनी ॥ २३ ॥
एवमुक्तस्तव सुतो निर्जगाम जनेश्वर ।
अभिवाद्य गुरुं मूर्ध्ना प्रययौ स्वं निवेशनम् ॥ २४ ॥
आगम्य तु ततो राजा विसृज्य च महाजनम् ।
प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयङ्करः ॥ २५ ॥
प्रविष्टः स निशां तां च गमयामास पार्थिव ।
प्रभातायां च शर्वर्यां प्रातरुत्थाय तान्नृपः ॥ २६ ॥
राज्ञः समाज्ञापयत सेनां योजयतेति ह ।
अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ॥ २७ ॥
दुर्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु ।
मन्यमानः स तं राजन्प्रत्यादेशमिवाऽऽत्मनः ॥ २८ ॥
निर्वेदं परमं गत्वा विनिन्द्य परवश्यताम् ।
दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्जुनं रणे ॥ २९ ॥
इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितम् ।
दुर्योधनो महाराज दुःशासनमचोदयत् ॥ ३० ॥

उत्पन्न किया है। इस समय हम लोगों के सामने उनको युद्ध में हराकर अपना पौरुष दिखाओ। । या तो मैं शिखण्डी के अतिरिक्त सब सृञ्जयों और पाञ्चालों को मारकर तुम्हारा प्रिय करूँगा या मैं स्वय उनके हाथ से मारा जाऊँगा ॥१७।२०॥ शिखण्डी अपने पिता के यहाँ पहले स्त्री-रूप में उत्पन्न होकर पीछे यक्ष के वरदान से पुरुष हुआ है। वास्तव में वह स्त्री ही है। हे भारत! मैं प्राण भले दे दूँगा, परन्तु उस पर वार नहीं करूँगा। क्योंकि पहले विधाता ने उसे स्त्री-रूप से उत्पन्न किया है। हे दुर्योधन! अब तुम जाकर विश्राम करो। मैं कल महाघोर युद्ध करूँगा। जब तक पृथ्वी रहेगी, तब तक मेरे उस युद्ध की चर्चा रहेगी॥२१।२३॥सञ्जय कहते हैं—हे राजा धृतराष्ट्र! भीष्म ने जब आपके पुत्र दुर्योधन से यह कहा, तब उन्होंने सिर झुकाकर उन्हें प्रणाम किया। फिर वे अपने शिविर में आकर सुख से लेटकर विश्राम करने लगे। रात्रि व्यतीत हो गई। प्रातःकाल होने पर उठकर दुर्योधन ने सब राजाओं को आज्ञा दी कि हे वीरो! तुम लोग सेना तैयार करो। आज भीष्म कुपित होकर सोमकों को मारेंगे॥२४।२७॥ हे राजेन्द्र! रात्रि को भीष्म ने दुर्योधन के उन वचनों को अपने लिए तिरस्कार समझा। वे पराधीनता की बहुत निन्दा करके खिन्न होकर अर्जुन से युद्ध करने के बारे में सोचते रहे। उनके इस भाव को समझकर दुर्योधन ने

दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।
द्वाविंशतिमनीकानि सर्वाण्येवाऽभिचोदय ॥ ३१ ॥
इदं हि समनुप्राप्तं वर्षपूगाभिचिन्तितम् ।
पाण्डवानां ससैन्यानां वधो राज्यस्य चाऽऽगमः ॥ ३२ ॥
तत्र कार्यतमं मन्ये भीष्मस्यैवाऽभिरक्षणम् ।
स नो गुप्तः सहायः स्याद्धन्यात्पार्थांश्च संयुगे ॥ ३३ ॥
अब्रवीद्धि विशुद्धात्मा नाऽहं हन्यां शिखण्डिनम् ।
स्त्रीपूर्वको ह्यसौ राजंस्तस्माद्वर्ज्यो मया रणे ॥ ३४ ॥
लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया ।
राज्यं स्फीतं महाबाहो स्त्रियश्च त्यक्तवान्पुरा ॥ ३५ ॥
नैव चाऽहं स्त्रियं जातु न स्त्रीपूर्वं कथञ्चन ।
हन्यां युधि नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ३६ ॥
अयं स्त्रीपूर्वको राजञ्छिखण्डी यदि ते श्रुतः ।
उद्योगे कथितं यत्तत्तथा जाता शिखण्डिनी ॥ ३७ ॥
कन्या भूत्वा पुमाञ्जातः स च मां योधयिष्यति ।
तस्याऽहं प्रमुखे बाणान्न मुञ्चेयं कथञ्चन ॥ ३८ ॥
युद्धे हि क्षत्रियांस्तात पाण्डवानां जयैषिणः ।
सर्वानन्यान्हनिष्यामि सम्प्राप्तान्रणमूर्धनि ॥ ३९ ॥
एवं मां भरतश्रेष्ठ गाङ्गेयः प्राह शास्त्रवित् ।
तत्र सर्वात्मना मन्ये गाङ्गेयस्यैव पालनम् ॥ ४० ॥

दुःशासन से कहा-- हे दुःशासन ! तुम भीष्म की रक्षा के लिए असंख्य रथी और सेना के बाईस बड़े बड़े दल भेजो ॥२८।३१॥ मैं बहुत दिनों से सोचता आ रहा हूँ कि सेना सहित पाण्डवों को मारकर राज्य प्राप्त करूँगा। इस घड़ी वही समय उपस्थित है। इस समय युद्ध में सब प्रकार भीष्म की रक्षा करना ही मुझे श्रेयस्कर जान पड़ता है क्योंकि वे हमारे प्रधान सहायक हैं। वे सुरक्षित रहेंगे तो पाण्डव अवश्य मारे जायँगे। महात्मा भीष्म ने कहा है कि "मैं शिखण्डी पर कभी प्रहार नहीं करूँगा, क्योंकि वह पहले स्त्री था। इसी कारण वह इस युद्ध में मेरे लिए त्याज्य है ॥३२।३४॥ मैं पहले, पिता के हित की इच्छा से, विवाह और राज्य का अधिकार छोड़ चुका हूँ। हे राजेन्द्र ! तुमसे सत्य कहता हूँ कि मैं स्त्री पर या स्त्रीपूर्व पुरुष पर कभी प्रहार नहीं करूँगा। युद्धारम्भ के पहले ही मैं तुमसे कह चुका हूँ कि शिखण्डी पहले स्त्री था, पीछे पुरुष हुआ है। वह शिखण्डी मुझसे युद्ध करेगा, तो मैं उस पर बाण नहीं चलाऊँगा। शिखण्डी के अतिरिक्त और जो कोई पाण्डवों की जय चाहनेवाले क्षत्रिय मेरे सामने आ जायँगे, उनको मैं मारूँगा।" ॥३५।३९॥ हे भाई ! शास्त्रविद्या में निपुण पितामह मुझसे यह कह चुके हैं। इस कारण सब प्रकार उनकी रक्षा करना हमारा मुख्य कर्तव्य है। वन में अरक्षित सिंह को भी भेड़िये

अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाहवे ।
मा वृकेणेव गाङ्गेयं घातयेम शिखण्डिना ॥ ४१ ॥
मातुलः शकुनिः शल्यः कृपो द्रोणो विविंशतिः ।
यत्ता रक्षन्तु गाङ्गेयं तस्मिन्गुप्ते ध्रुवो जयः ॥ ४२ ॥
एतच्छ्रुत्वा तु ते सर्वे दुर्योधनवचस्तदा ।
सर्वतो रथवंशेन गाङ्गेयं पर्यवारयन् ॥ ४३ ॥
पुत्राश्च तव गाङ्गेयं परिवार्य ययुर्मुदा । ।
कम्पयन्तो भुवं द्यां च क्षोभयन्तश्च पाण्डवान् ॥ ४४ ॥
ते रथैः सुप्रसंयुक्तैर्दन्तिभिश्च महारथाः ।
परिवार्य रणे भीष्मं दंशिताः समवस्थिताः ॥ ४५ ॥
यथा देवासुरे युद्धे त्रिदशा वज्रधारिणम् ।
सर्वे ते स्म व्यतिष्ठन्त रक्षन्तस्तं महारथम् ॥ ४६ ॥
ततो दुर्योधनो राजा पुनर्भ्रातरमब्रवीत् ।
सव्यं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम् ॥ ४७ ॥
गोप्तारावर्जुनस्यैतावर्जुनोऽपि शिखण्डिनः ।
रक्ष्यमाणः स पार्थेन तथाऽस्माभिर्विवर्जितः ॥ ४८ ॥
यथा भीष्मं न नो हन्याद्दुःशासन तथा कुरु ।
भ्रातुस्तद्वचनं श्रुत्वा पुत्रो दुःशासनस्तव ॥ ४९ ॥
भीष्मं प्रमुखतः कृत्वा प्रययौ सह सेनया ।
भीष्मं तु रथवंशेन दृष्ट्वा समभिसंवृतम् ॥ ५० ॥

मार डालते हैं। इसलिए ऐसा यत्न करो जिससे भीष्म-रूप सिंह शिखण्डीरूप भेड़िये के हाथ से न मारे जा सकें। मामा शकुनि, शल्य, कृपाचार्य, द्रोणाचार्य और विविंशति आदि सब मुख्य योद्धा यत्न के साथ भीष्म की ही रक्षा करें। उनके सुरक्षित होने से हमारी विजय निश्चित है ॥४०।४२॥ तब शकुनि आदि वीरगण दुर्योधन की आज्ञा के अनुसार, चारों ओर असंख्य रथों से घेरकर, भीष्म की रक्षा करने लगे। हे राजेन्द्र! आपके पुत्रगण आनन्द और उत्साह के साथ सिंहनाद से आकाशमण्डल और पृथ्वीमण्डल को कँपाते हुए, पाण्डवों के हृदय में क्षोभ उत्पन्न करके, भीष्म के आसपास स्थित हुए। जैसे देवासुर-संग्राम में देवताओं ने इन्द्र की रक्षा की थी, वैसे वे महारथी लोग भीष्म पितामह की रक्षा करने लगे ॥४३।४६॥ अब दुर्योधन ने फिर दुःशासन से कहा—हे भाई दुःशासन! युधामन्यु और उत्तमौजा नाम के दोनों वीर अर्जुन के रथ के बायें और दाहने पहिये की रक्षा करते हैं। उनके द्वारा सुरक्षित होकर अर्जुन अवश्य शिखण्डी की रक्षा करेंगे। इसलिए जो हम भीष्म की रक्षा नहीं करेंगे तो अर्जुन के द्वारा सुरक्षित शिखण्डी अवश्य उनको मारेगा। अतएव इस समय वही उपाय करना है, जिससे भीष्म को शिखण्डी न मार सके। दुर्योधन के ये वचन सुनकर, बहुत सी सेना साथ लेकर, दुःशासन भीष्म के पीछे उनकी रक्षा करते हुए युद्ध करने

अर्जुनो रथिनां श्रेष्ठो धृष्टद्युम्नमुवाच ह ।
शिखण्डिनं नरव्याघ्रं भीष्मस्य प्रमुखे नृप ।
स्थापयस्वाऽद्य पाञ्चाल्य तस्य गोप्ताऽहमित्युत ॥ ५१ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मदुर्योधनसंवादे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

चले। इधर महारथी अर्जुन ने भीष्म को महारथियों के मध्य सुरक्षित देखकर सेनापति धृष्टद्युम्न से कहा—हे पाञ्चाल-राजकुमार ! शिखण्डी को भीष्म के आगे खड़ा कर दो। आज मैं स्वयं समर में शिखण्डी की रक्षा करूँगा ॥४७।५१॥

भीष्मपर्व का अट्ठानवेवाँ अध्याय समाप्त हुआ ॥ ९८ ॥

अथ ऊनशततमोऽध्यायः ॥ ९९ ॥

सञ्जय उवाच—ततः शान्तनवो भीष्मो निर्ययौ सह सेनया ।
व्यूहं चाऽव्यूहत महत्सर्वतोभद्रमात्मनः ॥ १ ॥
कृपश्च कृतवर्मा च शैब्यश्चैव महारथः ।
शकुनिः सैन्धवश्चैव काम्बोजश्च सुदक्षिणः ॥ २ ॥
भीष्मेण सहिताः सर्वे पुत्रैश्च तव भारत ।
अग्रतः सर्वसैन्यानां व्यूहस्य प्रमुखे स्थिताः ॥ ३ ॥
द्रोणो भूरिश्रवाः शल्यो भगदत्तश्च मारिष ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ॥ ४ ॥
अश्वत्थामा सोमदत्तश्चाऽऽवन्त्यौ च महारथौ ।
महत्या सेनया युक्ता वामं पक्षमपालयन् ॥ ५ ॥
दुर्योधनो महाराज त्रिगर्तैः सर्वतो वृतः ।
व्यूहमध्ये स्थितो राजन्पाण्डवान्प्रति भारत ॥ ६ ॥
अलम्बुषो रथश्रेष्ठः श्रुतायुश्च महारथः ।
पृष्ठतः सर्व सैन्यानां स्थितौ व्यूहस्य दंशितौ ॥ ७ ॥
एवं च तं तदा व्यूहं कृत्वा भारत तावकाः ।
सन्नद्धाः समदृश्यन्त प्रतपन्त इवाऽग्नयः ॥ ८ ॥

निन्नानवेवाँ अध्याय ॥ ९९ ॥

सञ्जय ने कहा—हे महाराज ! इसके अनन्तर सेना साथ लेकर महात्मा भीष्म युद्ध के लिए शिविर से बाहर निकले और सर्वतोभद्र नाम के व्यूह की रचना करने लगे। महावीर कृपाचार्य, कृतवर्मा, शैब्य, शकुनि, सिन्धुपति जयद्रथ, काम्बोजराज सुदक्षिण और आपके सब पुत्रों को साथ लेकर, सब सेना के आगे, व्यूह के मुख में महारथी प्रतापी भीष्म पितामह खड़े हुए। द्रोणाचार्य, भूरिश्रवा, शल्य और भगदत्त कवच पहनकर व्यूह के दक्षिणभाग की रक्षा करने लगे ॥१।४॥ महारथी अश्वत्थामा, सोमदत्त और विन्द, अनुविन्द अपनी सेना

ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च माद्रीपुत्रावुभावपि ॥ ९ ॥
अग्रतः सर्वसैन्यानां स्थिता व्यूहस्य दंशिताः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ॥ १० ॥
स्थिताः सैन्येन महता परानीकविनाशनाः ।
शिखण्डी विजयश्चैव राक्षसश्च घटोत्कचः ॥ ११ ॥
चेकितानो महाबाहुः कुन्तिभोजश्च वीर्यवान् ।
स्थिता रणे महाराज महत्या सेनया वृताः ॥ १२ ॥
अभिमन्युर्महेष्वासो द्रुपदश्च महाबलः ।
युयुधानो महेष्वासो युधामन्युश्च वीर्यवान् ॥ १३ ॥
केकया भ्रातरश्चैव स्थिता युद्धाय दंशिताः ।
एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्जयम् ॥ १४ ॥
पाण्डवाः समरे शूराः स्थिता युद्धाय दंशिताः ।
तावकास्तु रणे यत्ताः सहसेना नराधिपाः ॥ १५ ॥
अभ्युद्ययू रणे पार्थान्भीष्मं कृत्वाऽग्रतो नृप ।
तथैव पाण्डवा राजन्भीमसेनपुरोगमाः ॥ १६ ॥
भीष्मं योद्धुमभीप्सन्तः संग्रामे विजयैषिणः ।
क्ष्वेडाः किलकिलाः शङ्खान्क्रकचान्गोविषाणिकाः॥ १७ ॥
भेरीमृदङ्गपणवान्नादयन्तश्च पुष्करान् ।
पाण्डवा अभ्यवर्तन्त नदन्तो भैरवान्रवान् ॥ १८ ॥

साथ लेकर वामभाग की रक्षा करने लगे। त्रिगर्त-देश के राजा सुशर्मा के साथ महाराज दुर्योधन व्यूह के मध्यस्थल में स्थित हुए। श्रेष्ठ रथी राक्षस अलम्बुष और महारथी श्रुतायुष् कवच पहनकर व्यूह के पृष्ठभाग की रक्षा में तत्पर हुए। कौरवपक्ष के कवचधारी वीर इस प्रकार व्यूहरचना करके प्रज्वलित अग्नि के समान देख पड़ने लगे ॥५।८॥ इधर धर्मराज युधिष्ठिर, भीमसेन, नकुल और सहदेव अपने व्यूह के अग्रभाग में स्थित होकर उसकी रक्षा करने लगे। महावीर धृष्टद्युम्न, विराट, सात्यकि, शिखण्डी, अर्जुन, राक्षस घटोत्कच, महाबाहु चेकितान, महाबली कुन्तिभोज, श्रेष्ठ धनुर्द्धर योद्धा अभिमन्यु, प्रतापी द्रुपद, युयुधान, युधामन्यु और केकय देश के पाँचो भाई राजकुमार बहुमूल्य दृढ कवच पहनकर उस व्यूह की रक्षा करते हुए समरभूमि में शोभायमान हुए। इस प्रकार दुर्भेद्य दारुण महाव्यूह की रचना करके पाण्डव भी युद्ध के लिए उद्यत हुए। कौरवपक्ष के वीर राजा लोग भीष्म को आगे करके युद्ध के लिए पाण्डवों की ओर बढ़े। युद्ध में उत्साह रखनेवाले भीमसेन आदि पाण्डव भी विजय की इच्छा से भीष्म की ओर बढ़े ॥९।१७॥ उस समय युद्ध के मैदान मे बारम्बार, सिंहनाद, किलकिल-रव, हाथियों की चिंघार, घोड़ों और रथों का शब्द तथा अस्त्रों की झनकार चारों ओर छा गई। पाण्डव भी वीरनाद, सिंहनाद तथा

भेरीमृदङ्गशङ्खानां दुन्दुभीनां च निःस्वनैः ।
उत्कृष्टसिंहनादैश्च वल्गितैश्च पृथग्विधैः ॥ १९ ॥
वयं प्रतिनदन्तस्तानगच्छाम त्वरान्विताः ।
सहसैवाऽभिसंक्रुद्धास्तदाऽऽसीत्तुमुलं महत् ॥ २० ॥
ततोऽन्योन्यं प्रधावन्तः सम्प्रहारं प्रचक्रिरे ।
ततः शब्देन महता प्रचकम्पे वसुन्धरा ॥ २१ ॥
पक्षिणश्च महाघोरं व्याहरन्तो विबभ्रमुः ।
सप्रभश्चोदितः सूर्यो निष्प्रभः समपद्यत ॥ २२ ॥
ववुश्च वातास्तुमुलाः शंसन्तः सुमहद्भयम् ।
घोराश्च घोरनिर्ह्रादाः शिवास्तत्र ववाशिरे ॥ २३ ॥
वेदयन्त्यो महाराज महद्वैशसमागतम् ।
दिशः प्रज्वलिता राजन्पांसुवर्षं पपात च ॥ २४ ॥
रुधिरेण समुन्मिश्रमस्थिवर्षं तथैव च ।
रुदतां वाहनानां च नेत्रेभ्यः प्रापतज्जलम् ॥ २५ ॥
सुस्रुवुश्च शकृन्मूत्रं प्रध्यायन्तो विशाम्पते ।
अन्तर्हिता महानादाः श्रूयन्ते भरतर्षभ ॥ २६ ॥
रक्षसां पुरुषादानां नदतां भैरवान्रवान् ।
सम्पतन्तश्च दृश्यन्ते गोमायुबलवायसाः ॥ २७ ॥
श्वानश्च विविधैर्नादैर्वाशन्तस्तत्र मारिष ।
ज्वलिताश्च महोल्का वै समाहत्य दिवाकरम् ॥
निपेतुः सहसा भूमौ वेदयन्त्यो महद्भयम् ॥ २८ ॥

शङ्खनाद करके उत्साह के साथ कौरवों के सामने आ गये। क्रकच, गोविषाण, भेरी, मृदङ्ग, पणव, दुन्दुभि और शङ्ख आदि बाजों का घोर शब्द आकाशमण्डल तक गूँज उठा। कौरव लोग भी शत्रुपक्ष के प्रत्युत्तर में प्रतिनाद करते हुए पाण्डवों की सेना पर बड़े वेग से आक्रमण करने लगे। इस प्रकार दोनों ओर की सेना परस्पर भिड़कर घोर युद्ध करने लगी। हे राजेन्द्र! उस समय रणभूमि में इतना शब्द और कोलाहल होने लगा कि उससे पृथ्वी काँप उठी ॥१७।२१॥ मांसाहारी पक्षी भयानक शब्द करते हुए आकाश में मँडराने लगे। उज्ज्वल प्रभा के साथ उदय हुए सूर्य का मण्डल प्रभाशून्य हो गया। अमङ्गलसूचक सियार-सियारियों के झुण्ड चिल्लाते हुए इधर उधर फिरने लगे। वे होनेवाले घोर लोकक्षय की सूचना दे रहे थे। आनेवाले घोर भय की सूचना देती हुई विकट आँधी जोर से चलने लगी। दिशाओं में अग्नि लगने का सा लाल प्रकाश (दिग्दाह) दिखाई पड़ने लगा। आकाश से धूल और रुधिरयुक्त हड्डियाँ बरसने लगीं। वाहनों की आँखों से आँसू बहने लगे। वाहन चिन्तित से देख पड़ने लगे; वे बारम्बार मल-मूत्र-त्याग करने लगे ॥२२।२६॥ सहसा अदृश्य पुरुषभोजी राक्षसों के अनेक प्रकार के भयानक शब्द सुन पड़ने

महान्त्यनीकानि महासमुच्छ्रये ततस्तयोः पाण्डवधार्तराष्ट्रयोः ।
चकम्पिरे शङ्खमृदङ्गनिःस्वनैः प्रकम्पितानीव वनानि वायुना ॥ २९ ॥
नरेन्द्रनागाश्वसमाकुलानामभ्यायतीनामशिवे मुहूर्ते ।
बभूव घोषस्तुमुलश्चमूनां वातोद्धतानामिव सागराणाम् ॥ ३० ॥

इति श्रीमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि परस्परव्यूहरचनायां उत्पातदर्शने ऊनशततमोऽध्यायः ॥ ९९ ॥

लगे। गीदड़, गिद्ध, कौए और कुत्ते आदि मांसाहारी पशु-पक्षी आकाश से रणभूमि में टूट पड़ते और पृथ्वी पर दौड़ते देख पड़ने लगे। कुत्ते नाना प्रकार से विकट कर्णकटु शब्द करते और भूँकते हुए फिरने लगे। सूर्य के चारों ओर से प्रज्वलित उल्काएँ पृथ्वी पर गिरकर महाभय की सूचना देने लगीं। इस प्रकार आकाश और पृथ्वी में अनेक अनिष्टसूचक उत्पात देख पड़ने लगे। हे महाराज! उस घोर युद्ध के समय पाण्डवों और कौरवों की बड़ी-बड़ी सेनाएँ—जिनमें हाथी, घोड़े, राजा आदि थे—पवनवेग से कम्पित वनों की तरह शङ्ख, मृदङ्ग आदि बाजे बजाती हुई आगे बढ़ीं। कोलाहलपूर्ण सेनाओं के चलने का दृश्य देखकर ऐसा जान पड़ता था कि दो महासागर क्षोभ को प्राप्त हो रहे हैं ॥२७।३०॥

भीष्मपर्व का निन्नानवेवाँ अध्याय समाप्त हुआ ॥ ९९ ॥

अथ शततमोऽध्यायः ॥ १०० ॥

सञ्जय उवाच—अभिमन्यु रथोदारः पिशङ्गैस्तुरगोत्तमैः ।
अभिदुद्राव तेजस्वी दुर्योधनबलं महत् ॥ १ ॥
विकिरञ्शरवर्षाणि वारिधारा इवाऽम्बुदः ।
न शेकुः समरे क्रुद्धं सौभद्रमरिसूदनम् ॥ २ ॥
शस्त्रौघिणं गाहमानं सेनासागरमक्षयम् ।
निवारयितुमप्याजौ त्वदीयाः कुरुनन्दन ॥ ३ ॥
तेन मुक्ता रणे राजञ्शराः शत्रुनिबर्हणाः ।
क्षत्रियाननयञ्शूरान्प्रेतराजनिवेशनम् ॥ ४ ॥
यमदण्डोपमान्घोराञ्ज्वलिताशीविषोपमान् ।
सौभद्रः समरे क्रुद्धः प्रेषयामास सायकान् ॥ ५ ॥
स रथान्रथिनस्तूर्णं हयांश्चैव ससादिनः ।
गजारोहांश्च सगजान्दारयामास फाल्गुनिः ॥ ६ ॥

एक सौ अध्याय ॥ १०० ॥

सञ्जय कहते हैं—हे राजेन्द्र! इसके अनन्तर महातेजस्वी वीर अभिमन्यु पिङ्गल रङ्ग के घोड़ों से युक्त रथ पर बैठकर, मेघ जैसे जल बरसाता है वैसे, बाण बरसाते हुए दुर्योधन की सेना की ओर दौड़े। अनन्त सेना के भीतर घुसते हुए अस्त्र-शस्त्रधारी वीर अभिमन्यु को कौरव लोग किसी प्रकार नहीं रोक सके ॥१।३॥ अभिमन्यु के धनुष से छूटे हुए शत्रु-नाशक तीक्ष्ण बाण कौरवपक्ष के क्षत्रियों को मार-मारकर गिराने लगे। युद्धचतुर अभिमन्यु क्रुद्ध होकर यमदण्ड-सदृश भीषण और काले नाग के समान

तस्य तत्कुर्वतः कर्म महत्संख्ये महीभृतः ।
पूजयाञ्चक्रिरे हृष्टाः प्रशशंसुश्च फाल्गुनिम् ॥ ७ ॥
तान्यनीकानि सौभद्रो द्रावयामास भारत ।
तूलराशीनिवाऽऽकाशे मारुतः सर्वतोदिशम् ॥ ८ ॥
तेन विद्राव्यमाणानि तव सैन्यानि भारत ।
त्रातारं नाऽध्यगच्छन्त पङ्के मग्ना इव द्विपाः ॥ ९ ॥
विद्राव्य सर्वसैन्यानि तावकानि नरोत्तम ।
अभिमन्युः स्थितो राजन्विधूमोऽग्निरिव ज्वलन् ॥ १० ॥
न चैनं तावका राजन्विषेहुररिघातिनम् ।
प्रदीप्तं पावकं यद्वत्पतङ्गाः कालचोदिताः ॥ ११ ॥
प्रहरन्सर्वशत्रुभ्यः पाण्डवानां महारथः ।
अदृश्यत महेष्वासः सवज्र इव वासवः ॥ १२ ॥
हेमपृष्ठं धनुश्चाऽस्य ददृशे विचरद्दिशः ।
तोयदेषु यथा राजन्राजमाना शतह्रदा ॥ १३ ॥
शराश्च निशिताः पीता निश्चरन्ति स्म संयुगे ।
वनात्फुल्लद्रुमाद्राजन्भ्रमराणामिव व्रजाः ॥ १४ ॥
तथैव चरतस्तस्य सौभद्रस्य महात्मनः ।
रथेन काञ्चनाङ्गेन ददृशुर्नाऽन्तरं जनाः ॥ १५ ॥
मोहयित्वा कृपं द्रोणं द्रौणिं च सबृहद्बलम् ।
सैन्धवं च महेष्वासो व्यचरल्लघु सुष्ठु च ॥ १६ ॥

---

जहरीले बाण बरसाकर रथ सहित रथी, घोड़े सहित घुड़सवार और हाथी सहित हाथी के सवार को मारकर गिराने लगे। राजा लोग उनके अद्भुत कार्य और पराक्रम को देखकर, प्रसन्न होकर, प्रशंसा करने लगे ॥४।७॥ वायु जैसे रूई के ढेर को उड़ा देता है वैसे ही वीर अभिमन्यु के बाण कौरवपक्ष की सेना को भगाकर तितर-बितर करने लगे। दलदल में फँसे हुए हाथी की सी दशा सब सैनिकों की हो गई। अभिमन्यु के प्रहार से पीड़ित होकर भागने हुए सैनिकों की रक्षा कर सकनेवाला कोई योद्धा नहीं देख पड़ता था। महापराक्रमी अभिमन्यु अनायास शत्रुसेना को भगाकर प्रज्वलित अग्नि के समान शोभायमान हुए ॥८।१०॥ काल-प्रेरित पतङ्ग जैसे अग्नि के प्रताप को नहीं सह सकते, वैसे ही कौरव-सेना अभिमन्यु के पराक्रम को नहीं सह सकी। शत्रुसेना का संहार करते हुए वीर अभिमन्यु वज्रपाणि इन्द्र के समान देख पड़ते थे। सुवर्ण से मढ़ी हुई पीठवाला उनका धनुष घनघटा में बिजली के समान शोभायमान हो रहा था ॥११।१३॥ फूले हुए वृक्षों के वन से उड़ते हुए भौंरों की तरह अभिमन्यु के धनुष से छूटे, चमकते हुए, तीक्ष्ण बाण समरभूमि में चारों ओर जा रहे थे। सुवर्णमय रथ पर सवार वीर अभिमन्यु ने महावीर द्रोणाचार्य, अश्वत्थामा, जयद्रथ, कृपाचार्य और बृहद्बल को अचेत कर दिया। वे स्फूर्ति और

मण्डलीकृतमेवाऽस्य धनुः पश्याम भारत ।
सूर्यमण्डलसङ्काशं दहतस्तव वाहिनीम् ॥ १७ ॥
तं दृष्ट्वा क्षत्रियाः शूराः प्रतपन्तं तरस्विनम् ।
द्विफाल्गुनमिमं लोकं मेनिरे तस्य कर्मभिः ॥ १८ ॥
तेनाऽर्दिता महाराज भारती सा महाचमूः ।
व्यभ्रमत्तत्र तत्रैव योषिन्मदवशादिव ॥ १९ ॥
द्रावयित्वा महासैन्यं कम्पयित्वा महारथान् ।
नन्दयामास सुहृदो मयं जित्वेव वासवः ॥ २० ॥
तेन विद्राव्यमाणानि तव सैन्यानि संयुगे ।
चक्रुरार्तस्वनं घोरं पर्जन्यनिनदोपमम् ॥ २१ ॥
तं श्रुत्वा निनदं घोरं तव सैन्यस्य भारत ।
मारुतोद्धतवेगस्य सागरस्येव पर्वणि ॥ २२ ॥
दुर्योधनस्तदा राजन्नार्ष्यश्रृङ्गिमभाषत ।
एष कार्ष्णिर्महाबाहो द्वितीय इव फाल्गुनः ॥ २३ ॥
चमूं द्रावयते क्रोधाद्वृत्रो देवचमूमिव ।
तस्य चाऽन्यन्न पश्यामि संयुगे भेषजं महत् ॥ २४ ॥
ऋते त्वां राक्षसश्रेष्ठं सर्वविद्यासु पारगम् ।
स गत्वा त्वरितं वीरं जहि सौभद्रमाहवे ॥ २५ ॥
वयं पार्थं हनिष्यामो भीष्मद्रोणपुरोगमाः ।
स एवमुक्तो बलवान्राक्षसेन्द्रः प्रतापवान् ॥ २६ ॥

सुन्दरता के साथ बाण बरसाते हुए युद्धभूमि में विचरने लगे ॥१४।१६॥ कौरवसेना का संहार करता हुआ अभिमन्यु का धनुष सदैव खिंचा हुआ ही देख पड़ता था। वह सूर्य की तरह चमक रहा था। शूर क्षत्रियों ने शत्रुसेना का संहार करते हुए स्फूर्तिशाली अभिमन्यु के अद्भुत कर्म देखकर समझा कि इस लोक में दो अर्जुन हैं। हे राजेन्द्र! अभिमन्यु के बाणों से पीड़ित कौरवसेना, मद पिये हुए स्त्री की तरह, भ्रान्त होकर तितर-बितर होने लगी ॥१७।१९॥ युद्धप्रिय अभिमन्यु ने शत्रुसेना के प्रधान वीरों को विचलित करके और सारी सेना को भगाकर अपने सुहृदों को उसी प्रकार प्रसन्न कर दिया, जिस प्रकार मयासुर को जीतकर इन्द्र ने देवताओं को प्रसन्न किया था। कौरवपक्ष की सब सेना अभिमन्यु के प्रहारों से पीड़ित होकर भागती हुई मेघगर्जन के समान ऊँचे स्वर से आर्तनाद करने लगी ॥२०।२१॥ महाराज दुर्योधन ने जब तूफान से उमड़े हुए समुद्र के शब्द के समान भयभीत कौरवसेना की चिल्लाहट सुनी तब राक्षसराज अलम्बुष को बुलाकर कहा—हे वीर राक्षसश्रेष्ठ! महावीर अर्जुन का पुत्र अभिमन्यु दूसरे अर्जुन की तरह, देवसेना को भगानेवाले वृत्रासुर की तरह, अकेला ही अपने पराक्रम से कौरवसेना को पीड़ित करके भगा रहा है। तुम सब प्रकार की युद्धविद्या में निपुण हो। उसे रोकनेवाला तुम्हारे अतिरिक्त और कोई नहीं देख

प्रययौ समरे तूर्णं तव पुत्रस्य शासनात् ।
नर्दमानो महानादं प्रावृषीव बलाहकः ॥ २७ ॥
तस्य शब्देन महता पाण्डवानां बलं महत् ।
प्राचलत्सर्वतो राजन्वातोद्धूत इवाऽर्णवः ॥ २८ ॥
बहवश्च महाराज तस्य नादेन भीषिताः ।
प्रियान्प्राणान्परित्यज्य निपेतुर्धरणीतले ॥ २९ ॥
कार्ष्णिश्चापि मुदा युक्तः प्रगृह्य सशरं धनुः ।
नृत्यन्निव रथोपस्थे तद्रक्षः समुपाद्रवत् ॥ ३० ॥
ततः स राक्षसः क्रुद्धः सम्प्राप्यैवाऽऽर्जुनिं रणे ।
नाऽतिदूरे स्थितां तस्य द्रावयामास वै चमूम् ॥ ३१ ॥
तां वध्यमानां च तथा पाण्डवानां महाचमूम् ।
प्रत्युद्ययौ रणे रक्षो देवसेनां यथा बलः ॥ ३२ ॥
विमर्दः सुमहानासीत्तस्य सैन्यस्य मारिष ।
रक्षसा घोररूपेण वध्यमानस्य संयुगे ॥ ३३ ॥
ततः शरसहस्रैस्तां पाण्डवानां महाचमूम् ।
व्यद्रावयद्रणे रक्षो दर्शयन्स्वपराक्रमम् ॥ ३४ ॥
सा वध्यमाना च तथा पाण्डवानामनीकिनी ।
रक्षसा घोररूपेण प्रदुद्राव रणे भयात् ॥ ३५ ॥
प्रमृद्य च रणे सेनां पद्मिनीं वारणो यथा ।
ततोऽभिदुद्राव रणे द्रौपदेयान्महाबलान् ॥ ३६ ॥

पड़ता। इसलिए तुम शीघ्र ही जाकर युद्ध में उसे मार डालो। हम लोग भीष्म और द्रोण आदि के साथ जाकर अर्जुन को मारेंगे ॥२२।२६॥ दुर्योधन की आज्ञा पाते ही राक्षसश्रेष्ठ अलम्बुष वर्षाकाल के मेघ के समान गर्जना करता हुआ अभिमन्यु की ओर चला। उसके घोर शब्द को सुनकर पाण्डवों की भारी सेना वायु से उछलते हुए समुद्र के समान विचलित हो उठी। उसके शब्द से ही डरकर बहुत से सैनिक मर गये ॥२६।२९॥ हे महाराज! उस समय रथ पर स्थित महायशस्वी अभिमन्यु धनुष-बाण हाथ में लेकर उस राक्षस के सम्मुख आये। अलम्बुष ने अभिमन्यु को देखते ही युद्ध में उस पर आक्रमण किया। राक्षस को देखकर पाण्डवों की सेना भयभीत हो गई और भागने लगी। जैसे बल नाम का दैत्य जैसे देव-सेना के पीछे दौड़ा था, वैसे ही बाण बरसाता हुआ अलम्बुष पाण्डवसेना के पीछे दौड़ा ॥३०।३२॥ वह राक्षसराज अपना पराक्रम दिखाता और असंख्य बाण चलाता हुआ पाण्डवसेना को भगाने और नष्ट करने लगा। पाण्डवों की भारी सेना अत्यन्त व्यथित और भय से व्याकुल होकर चारों ओर भागने लगी। हे महाराज! जैसे हाथी कमलवन को रौंदता है वैसे ही राक्षसराज अलम्बुष पाण्डवसेना का संहार करता हुआ द्रौपदी के पुत्रों के सम्मुख दौड़ा। द्रौपदी के पाँचों पुत्र उस राक्षस को देखकर, क्रुद्ध हो युद्ध

ते तु क्रुद्धा महेष्वासा द्रौपदेयाः प्रहारिणः ।
राक्षसं दुद्रुवुः संख्ये ग्रहाः पञ्च रविं यथा ॥ ३७ ॥
वीर्यवद्भिस्ततस्तैस्तु पीडितो राक्षसोत्तमः ।
यथा युगक्षये घोरे चन्द्रमाः पञ्चभिर्ग्रहैः ॥ ३८ ॥
प्रतिविन्ध्यस्ततो रक्षो विभेद निशितैः शरैः ।
सर्वपारशवैस्तूर्णैरकुण्ठाग्रैर्महाबलः ॥ ३९ ॥
स तैर्भिन्नतनुत्राणः शुशुभे राक्षसोत्तमः ।
मरीचिभिरिवाऽर्कस्य संस्यूतो जलदो महान् ॥ ४० ॥
विषक्तैः स शरैश्चापि तपनीयपरिच्छदैः ।
आर्ष्यशृङ्गिर्बभौ राजन्दीप्तशृङ्ग इवाऽचलः ॥ ४१ ॥
ततस्ते भ्रातरः पञ्च राक्षसेन्द्रं महाहवे ।
विव्यधुर्निशितैर्बाणैस्तपनीयविभूषितैः ॥ ४२ ॥
स निर्भिन्नः शरैर्घोरैर्भुजगैः कोपितैरिव ।
अलम्बुषो भृशं राजन्नागेन्द्र इव चुक्रुधे ॥ ४३ ॥
सोऽतिविद्धो महाराज मुहूर्तमथ मारिष ।
प्रविवेश तमो दीर्घं पीडितस्तैर्महारथैः ॥ ४४ ॥
प्रतिलभ्य ततः संज्ञां क्रोधेन द्विगुणीकृतः ।
चिच्छेद सायकांस्तेषां ध्वजांश्चैव धनूंषि च ॥ ४५ ॥
एकैकं पञ्चभिर्बाणैराजघान स्मयन्निव ।
अलम्बुषो रथोपस्थे नृत्यन्निव महारथः ॥ ४६ ॥
त्वरमाणः सुसंरब्धो हयांस्तेषां महात्मनाम् ।
जघान राक्षसः क्रुद्धः सारथींश्च महाबलः ॥ ४७ ॥

---

होकर, सूर्य के सम्मुख पाँच ग्रहों की तरह, उसके सम्मुख दौड़े । प्रलयकाल में पाँच ग्रह जैसे चन्द्रमा को पीड़ा पहुँचाते, वैसे ही द्रौपदी के पुत्र उस राक्षस को पीड़ित करने लगे ॥३७।३८॥ महापराक्रमी प्रतिविन्ध्य ने उस राक्षसराज को तीक्ष्ण, कुण्ठित न होनेवाले, कई बाण मारे । उन बाणों से अलम्बुष का कवच कट गया और वह सूर्य-किरणरञ्जित काले मेघ के समान शोभायमान हुआ । प्रतिविन्ध्य के सुवर्ण-भूषित विशिख बाण राक्षस के शरीर में प्रविष्ट हो गये । उनसे वह प्रज्वलित शिखर-युक्त पर्वत के समान देख पड़ा ॥३९।४२॥ अब द्रौपदी के पाँचों पुत्र एक साथ सुवर्णभूषित बाण मारकर अलम्बुष को पीड़ा पहुँचाने लगे । महावीर्यशाली क्रुद्ध अलम्बुष नाग-तुल्य उन बाणों से घायल होने के कारण घोर व्यथा से अचेत हो गया । क्षण भर में सचेत होने पर वह दुगुने क्रोध से विह्वल हो उठा । उसने बड़ी स्फूर्ति के साथ बाणों से द्रौपदी के पुत्रों के धनुष, बाण और ध्वजाएँ काट डालीं । फिर उस महावीर राक्षस ने हर एक

विभेद च सुसंरब्धः पुनश्चैनान्सुसंशितैः ।
शरैर्बहुविधाकारैः शतशोऽथ सहस्रशः ॥ ४८ ॥
विरथांश्च महेष्वासान्कृत्वा तत्र स राक्षसः ।
अभिदुद्राव वेगेन हन्तुकामो निशाचरः ॥ ४९ ॥
तानर्दितान्रणे तेन राक्षसेन दुरात्मना ।
दृष्ट्वाऽर्जुनसुतः संख्ये राक्षसं समुपाद्रवत् ॥ ५० ॥
तयोः समभवद्युद्धं वृत्रवासवयोरिव ।
ददृशुस्तावकाः सर्वे पाण्डवाश्च महारथाः ॥ ५१ ॥
तौ समेतौ महायुद्धे क्रोधदीप्तौ परस्परम् ।
महाबलौ महाराज क्रोधसंरक्तलोचनौ ॥ ५२ ॥
परस्परमवेक्षेतां कालानलसमौ युधि ।
तयोः समागमो घोरो बभूव कटुकोदयः ॥ ५३ ॥
यथा देवासुरे युद्धे शक्रशम्बरयोः पुरा ॥ ५४ ॥

इति श्रीमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि अलम्बुषाभिमन्युसमागमे शततमोऽध्यायः ॥ १०० ॥

को पाँच-पाँच बाण मारे ॥४३।४६॥ उसने उनके घोड़ों और सारथियों को भी मार डाला। यह अद्भुत कर्म करके, अन्य अनेक तीक्ष्ण बाण मारकर, उसने सबको घायल कर दिया। महारथी राक्षस इस प्रकार द्रौपदी के पाँचों पुत्रों को, रथहीन करके, मारने के लिए शीघ्रता से आगे बढ़ा। महापराक्रमी अभिमन्यु ने जब देखा कि बली राक्षस द्रौपदी के पुत्रों को पीड़ित कर रहा है तब वे शीघ्रता के साथ अपना रथ बढ़ाकर उसके पास पहुँचे ॥४७।५०॥ हे राजेन्द्र! उस समय महाप्रतापी अभिमन्यु के साथ राक्षसराज अलम्बुष घोर युद्ध करने लगा। कौरवपक्ष और पाण्डवपक्ष के सब योद्धा, युद्ध छोड़कर, उन वृत्रासुर और इन्द्र के समान पराक्रमी दोनों वीरों का घोर अद्भुत संग्राम देखने लगे। कालानल-तुल्य वे दोनों वीर क्रोध से लाल आँखों से परस्पर इस प्रकार देखते थे मानों दृष्टि से ही भस्म कर डालेंगे। पहले देवासुर-युद्ध में शम्बरासुर और इन्द्र का जैसा भयङ्कर संग्राम हुआ था वैसा ही भयङ्कर समर इस समय होने लगा ॥५१।५४॥

भीष्मपर्व का एक सौ अध्याय समाप्त हुआ ॥ १०० ॥

अथ एकाधिकशततमोऽध्यायः ॥ १०१ ॥

धृतराष्ट्र उवाच—आर्जुनिं समरे शूरं विनिघ्नन्तं महारथान् ।
अलम्बुषः कथं युद्धे प्रत्ययुध्यत सञ्जय ॥ १ ॥
आर्ष्यशृङ्गिं कथं चैव सौभद्रः परवीरहा ।
तन्ममाऽऽचक्ष्व तत्त्वेन यथा वृत्तं स्म संयुगे ॥ २ ॥
धनञ्जयश्च किं चक्रे मम सैन्येषु संयुगे ।
भीमो वा रथिनां श्रेष्ठो राक्षसो वा घटोत्कचः ॥ ३ ॥

नकुलः सहदेवो वा सात्यकिर्वा महारथः ।
एतदाचक्ष्व मे सत्यं कुशलो ह्यसि सञ्जय ॥ ४ ॥
सञ्जय उवाच—हन्त तेऽहं प्रवक्ष्यामि संग्रामं लोमहर्षणम् ।
यथाऽभूद्राक्षसेन्द्रस्य सौभद्रस्य च मारिष ॥ ५ ॥
अर्जुनश्च यथा संख्ये भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च रणे चक्रुः पराक्रमम् ॥ ६ ॥
तथैव तावकाः सर्वे भीष्मद्रोणपुरः सराः ।
अद्भुतानि विचित्राणि चक्रुः कर्माण्यभीतवत् ॥ ७ ॥
अलम्बुषस्तु समरे अभिमन्युं महारथम् ।
विनद्य सुमहानादं तर्जयित्वा मुहुर्मुहुः ॥ ८ ॥
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाऽब्रवीत् ।
अभिमन्युश्च वेगेन सिंहवद्विनदन्मुहुः ॥ ९ ॥
आर्ष्यश्रृङ्गिं महेष्वासं पितुरत्यन्तवैरिणम् ।
ततः समीयतुः संख्ये त्वरितौ नरराक्षसौ ॥ १० ॥
रथाभ्यां रथिनौ श्रेष्ठौ यथा वै देवदानवौ ।
मायावी राक्षसश्रेष्ठो दिव्यास्त्रश्चैव फाल्गुनिः ॥ ११ ॥
ततः कार्ष्णिर्महाराज निशितैः सायकैस्त्रिभिः ।
आर्ष्यश्रृङ्गिं रणे विध्वा पुनर्विव्याध पञ्चभिः ॥ १२ ॥
अलम्बुषोऽपि संक्रुद्धः कार्ष्णिं नवभिराशुगैः ।
हृदि विव्याध वेगेन तोत्त्रैरिव महाद्विपम् ॥ १३ ॥

एक सौ एक अध्याय ॥ १०१ ॥

धृतराष्ट्र ने पूछा — हे सञ्जय ! महारथियों और शूरों को समर में मारते हुए अभिमन्यु से अलम्बुष ने किस प्रकार कैसा युद्ध किया ? शत्रुदमन अभिमन्यु ने ही उस राक्षसराज से कैसा युद्ध किया ? महाबली भीमसेन, राक्षस घटोत्कच, नकुल, सहदेव, सात्यकि और अर्जुन आदि ने मेरी सेना से कैसा युद्ध किया ? युद्ध का सब वृत्तान्त तुम जानते हो और वर्णन करने में भी निपुण हो। इसलिए यह सब वृत्तान्त कहो। ॥१।४॥ सञ्जय ने कहा—हे राजेन्द्र ! महावीर अभिमन्यु और अलम्बुष ने जैसा युद्ध किया, अर्जुन-भीमसेन-नकुल और सहदेव ने समर में जैसा पराक्रम प्रकट किया और आपके पक्ष के भीष्म, द्रोण आदि महारथी वीरों ने निर्भय होकर जो-जो अद्भुत कर्म किये, सो सब मैं आपके आगे कहता हूँ ॥५।७॥ राक्षसराज अलम्बुष सिंहनाद के साथ बारम्बार तरज-गरजकर "ठहर जा, ठहर जा" कहता हुआ बड़े वेग से अभिमन्यु पर आक्रमण करने चला। अभिमन्यु भी सिंहनाद करते हुए पिता के शत्रु राक्षसराज अलम्बुष की ओर वेग से चले। दिव्य अस्त्र चलाने में निपुण महारथी अभिमन्यु और मायावी श्रेष्ठ रथी अलम्बुष दोनों, देव-दानव के समान, शीघ्र ही आमने-सामने पहुँच गये ॥८।११॥ महावीर अभिमन्यु ने राक्षस

ततः शरसहस्रेण क्षिप्रकारी निशाचरः ।
अर्जुनस्य सुतं संख्ये पीडयामास भारत ॥ १४ ॥
अभिमन्युस्ततः क्रुद्धो नवभिर्नतपर्वभिः ।
विभेद निशितैर्बाणै राक्षसेन्द्रं महोरसि ॥ १५ ॥
ते तस्य विविशुस्तूर्णं कायं निर्भिद्य मर्मसु ।
स तैर्विभिन्नसर्वाङ्गः शुशुभे राक्षसोत्तमः ॥ १६ ॥
पुष्पितैः किंशुकै राजन्संस्तीर्ण इव पर्वतः ।
सन्धारयाणश्च शरान्हेमपुङ्खान्महाबलः ॥ १७ ॥
विबभौ राक्षसश्रेष्ठः सज्वाल इव पर्वतः ।
ततः क्रुद्धो महाराज आर्ष्यशृङ्गिरमर्षणः ॥ १८ ॥
महेन्द्रप्रतिमं कार्ष्णिं छादयामास पत्रिभिः ।
तेन ते विशिखा मुक्ता यमदण्डोपमाः शिताः ॥ १९ ॥
अभिमन्युं विनिर्भिद्य प्राविशन्त धरातलम् ।
तथैवाऽऽर्जुनिना मुक्ताः शराः कनकभूषणाः ॥ २० ॥
अलम्बुषं विनिर्भिद्य प्राविशन्त धरातलम् ।
सौभद्रस्तु रणे रक्षः शरैः सन्नतपर्वभिः ॥ २१ ॥
चक्रे विमुखमासाद्य मयं शक्र इवाऽऽहवे ।
विमुखं च रणे रक्षो वध्यमानं रणेऽरिणा ॥ २२ ॥
प्रादुश्चक्रे महामायां तामसीं परतापनाम् ।
ततस्ते तमसा सर्वे वृताश्चाऽऽसन्महीपते ॥ २३ ॥

को पहले तीन और फिर पाँच बाण मारे। जैसे महावत गजराज को अङ्कुश मारे वैसे ही स्फूर्तिशाली अलम्बुष ने क्रुद्ध होकर अभिमन्यु की छाती में ताककर नव तीक्ष्ण बाण मारे। इसके पश्चात् स्फूर्ति के साथ और एक सहस्र बाण मारे ॥१२।१४॥ मर्मस्थल में उन बाणों के लगने से अभिमन्यु क्रोध से अधीर हो उठे। उन्होंने भी महाभयङ्कर नव बाण राक्षस की छाती में मारे। वे बाण उसके शरीर को फोड़कर मर्मस्थल में पहुँच गये। बाणों से घायल और रक्त से रंगा हुआ वह राक्षस फूले हुए ढाक के पेड़ोंवाले पर्वत के समान शोभायमान हुआ। वे सुवर्णपुङ्ख बाण राक्षस के शरीर में प्रवेश हो गये थे, इस कारण वह शिखरों से शोभित पर्वत सा जान पड़ता था। क्रोधी अलम्बुष ने भी इन्द्र-सदृश अभिमन्यु को असंख्य बाणों से ढक दिया ॥१५।१९॥ राक्षस के धनुष से छूटे हुए यमदण्डतुल्य बाण अभिमन्यु के शरीर को फोड़कर पृथिवी में प्रवेश हो गये। इसी प्रकार ही अभिमन्यु के बाण भी अलम्बुष के शरीर को फोड़कर पृथ्वी में प्रवेश हो गये। इन्द्र ने जैसे मय दानव को समर से हटा दिया था, वैसे ही महावीर अभिमन्यु ने तीक्ष्ण बाण मारकर राक्षस को व्यथित और युद्ध से विमुख कर दिया ॥१९।२२॥ अब उस राक्षस ने शत्रुओं को नष्ट करनेवाली तामसी माया उत्पन्न की। उससे चारों ओर गहरा अँधेरा छा गया। कोई किसी को

नाऽभिमन्युमपश्यन्त नैव स्वान्न परान्रणे ।
अभिमन्युश्च तद् दृष्ट्वा घोररूपं महत्तमः ॥ २४ ॥
प्रादुश्चक्रेऽस्त्रमत्युग्रं भास्करं कुरुनन्दनः ।
ततः प्रकाशमभवज्जगत्सर्वं महीपते ॥ २५ ॥
तां चाऽभिजघ्निवान्मायां राक्षसस्य दुरात्मनः ।
संक्रुद्धश्च महावीर्यो राक्षसेन्द्रं नरोत्तमः ॥ २६ ॥
छादयामास समरे शरैः सन्नतपर्वभिः ।
बह्वीस्तथाऽन्या मायाश्च प्रयुक्तास्तेन रक्षसा ॥ २७ ॥
सर्वास्त्रविदमेयात्मा वारयामास फाल्गुनिः ।
हतमायं ततो रक्षो वध्यमानं च सायकैः ॥ २८ ॥
रथं तत्रैव सन्त्यज्य प्राद्रवन्महतो भयात् ।
तस्मिन्विनिर्जिते तूर्णं कूटयोधिनि राक्षसे ॥ २९ ॥
आर्जुनिः समरे सैन्यं तावकं सम्ममर्द ह ।
मदान्धो गन्धनागेन्द्रः सपद्मां पद्मिनीमिव ॥ ३० ॥
ततः शान्तनवो भीष्मः सैन्यं दृष्ट्वाऽभिविद्रुतम् ।
महता शरवर्षेण सौभद्रं पर्यवारयत् ॥ ३१ ॥
कोष्ठीकृत्य च तं वीरं धार्तराष्ट्रा महारथाः ।
एकं सुबहवो युद्धे ततक्षुः सायकैर्दृढम् ॥ ३२ ॥
स तेषां रथिनां वीरः पितुस्तुल्यपराक्रमः ।
सदृशो वासुदेवस्य विक्रमेण बलेन च ॥ ३३ ॥

नहीं देख सकता था अभिमन्यु को, अपने को या किसी अन्य को देख सकना असम्भव हो गया। महापराक्रमी अभिमन्यु ने वह घोर अन्धकार देखकर प्रकाशमय सौर अस्त्र का प्रयोग किया। सूर्यास्त्र के प्रभाव से राक्षस की माया का घोर अन्धकार दूर हो गया और सारे जगत् में प्रकाश फैल गया ॥२२।२५॥ राक्षस ने और भी बहुतेरी मायाएँ प्रकट कीं, किन्तु वीर अभिमन्यु ने दिव्य अस्त्रों से उन सब मायाओं को नष्ट कर दिया। इसके अनन्तर अभिमन्यु असंख्य तीक्ष्ण बाण मारकर उस राक्षस को पीड़ा पहुँचाने लगे ॥२६।२८॥ सब अस्त्रों के जाननेवाले अमित पराक्रमी अभिमन्यु के द्वारा सब माया नष्ट होने पर प्रहार-पीड़ित और भय से व्याकुल वह राक्षस रथ छोड़कर भाग खड़ा हुआ। कूटयुद्ध करनेवाला वह राक्षस जब इस प्रकार हारकर भाग गया तब महावीर अभिमन्यु फिर बाण-वर्षा करके कौरवसेना को पीड़ित करने लगे। उस समय ऐसा जान पड़ा कि मदान्ध जङ्गली हाथी कमलों के वन को रौंदकर उजाड़ रहा है ॥२८।३०॥ महारथी भीष्म ने सैनिकों को संग्राम से भागते देख तीक्ष्ण बाण बरसाकर अभिमन्यु का आगे बढ़ना रोका। महारथी दुर्योधन और उनके भाई भी अकेले अभिमन्यु को चारों ओर से घेरकर असंख्य बाण मारने लगे। तब अर्जुन के तुल्य पराक्रमी और बल-वीर्य में श्रीकृष्ण के समान महावीर अभिमन्यु,

उभयोः सदृशं कर्म स पितुर्मातुलस्य च ।
रणे बहुविधं चक्रे सर्वशस्त्रभृतां वरः ॥ ३४ ॥
ततो धनञ्जयो वीरो विनिघ्नंस्तव सैनिकान् ।
आससाद रणे भीष्मं पुत्रप्रेप्सुरमर्षणः ॥ ३५ ॥
तथैव समरे राजन्पिता देवव्रतस्तव ।
आससाद रणे पार्थं स्वर्भानुरिव भास्करम् ॥ ३६ ॥
ततः सरथनागाश्वाः पुत्रास्तव जनेश्वर ।
परिवव्रू रणे भीष्मं जुगुपुश्च समन्ततः ॥ ३७ ॥
तथैव पाण्डवा राजन्परिवार्य धनञ्जयम् ।
रणाय महते युक्ता दंशिता भरतर्षभ ॥ ३८ ॥
शारद्वतस्ततो राजन्भीष्मस्य प्रमुखे स्थितम् ।
अर्जुनं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ३९ ॥
प्रत्युद्गम्याऽथ विव्याध सात्यकिस्तं शितैः शरैः ।
पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरम् ॥ ४० ॥
गौतमोऽपि त्वरायुक्तो माधवं नवभिः शरैः ।
हृदि विव्याध संक्रुद्धः कङ्कपत्रपरिच्छदैः ॥ ४१ ॥
शैनेयोऽपि ततः क्रुद्धश्चापमानम्य वेगवान् ।
गौतमान्तकरं तूर्णं समाधत्त शिलीमुखम् ॥ ४२ ॥
तमापतन्तं वेगेन शक्राशनिसमद्युतिम् ।
द्विधा चिच्छेद संक्रुद्धो द्रौणिः परमकोपनः ॥ ४३ ॥
समुत्सृज्याऽथ शैनेयो गौतमं रथिनां वरः ।
अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ॥ ४४ ॥

पिता और मामा के समान, युद्ध में अनेक अद्भुत कार्य और कौशल दिखाने लगे ॥३१।३४॥ महावीर्यशाली अर्जुन भी उस समय कौरव सेना को मारते हुए अभिमन्यु को ढूँढते-ढूँढते भीष्म के समीप पहुँच गये। राहु जैसे ग्रसने के लिए सूर्य के पास जाता है वैसे ही भीष्म भी अर्जुन के समीप आये। हे राजेन्द्र! आपके पुत्रगण असंख्य रथ, हाथी, घोड़े आदि साथ लेकर चारों ओर से भीष्म पितामह की रक्षा करने लगे। इधर पाण्डवपक्ष के योद्धा भी चारों ओर से अर्जुन की सहायता करते हुए घोर युद्ध में प्रवृत्त हुए ॥३५।३८॥ इसी समय कृपाचार्य ने, भीष्म के सामने उपस्थित, अर्जुन को पचीस तीक्ष्ण बाण मारे। सिंह जैसे गजराज पर झपटता है वैसे ही सात्यकि भी पाण्डवों के हित के लिए कृपाचार्य के सन्मुख पहुँचे। वे अनेक तीक्ष्ण बाण मारकर कृपाचार्य को पीड़ित करने लगे। इससे क्रुद्ध होकर कृपाचार्य ने बड़ी स्फूर्ति के साथ कङ्कपत्रभूषित नव बाण सात्यकि की छाती में मारे ॥३९।४१॥ तब सात्यकि ने अत्यन्त

तस्य द्रोणसुतश्चापं द्विधा चिच्छेद भारत ।
अथैनं छिन्नधन्वानं ताडयामास सायकैः ॥ ४५ ॥
सोऽन्यत्कार्मुकमादाय शत्रुघ्नं भारसाधनम् ।
द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चाऽर्पयत् ॥ ४६ ॥
स विद्धो व्यथितश्चैव मुहूर्तं कश्मलायुतः ।
निषसाद रथोपस्थे ध्वजयष्टिं समाश्रितः ॥ ४७ ॥
प्रतिलभ्य ततः संज्ञां द्रोणपुत्रः प्रतापवान् ।
वार्ष्णेयं समरे क्रुद्धो नाराचेन समार्पयत् ॥ ४८ ॥
शैनेयं स तु निर्भिद्य प्राविशद्धरणीतलम् ।
वसन्तकाले बलवान्बिलं सर्पशिशुर्यथा ॥ ४९ ॥
अथाऽपरेण भल्लेन माधवस्य ध्वजोत्तमम् ।
चिच्छेद समरे द्रौणिः सिंहनादं मुमोच ह ॥ ५० ॥
पुनश्चैनं शरैर्घोरैश्छादयामास भारत ।
निदाघान्ते महाराज यथा मेघो दिवाकरम् ॥ ५१ ॥
सात्यकोऽपि महाराज शरजालं निहत्य तत् ।
द्रौणिमभ्याकिरत्तूर्णं शरजालैरनेकधा ॥ ५२ ॥
तापयामास च द्रौणिं शैनेयः परवीरहा ।
विमुक्तो मेघजालेन यथैव तपनस्तथा ॥ ५३ ॥
शराणां च सहस्रेण पुनरेव समुद्यतः ।
सात्यकिश्छादयामास ननाद च महाबलः ॥ ५४ ॥

क्रुद्ध होकर बड़े वेग से, धनुष चढ़ाकर, प्राण हर लेनेवाला एक बाण कृपाचार्य को मारा। अश्वत्थामा ने उस वज्रतुल्य बाण को वेग से आते देखकर एक बाण से उसे काटकर गिरा दिया। अब महारथी सात्यकि कृपाचार्य को छोड़कर, आकाशमण्डल में राहु जैसे चन्द्रमा की ओर दौड़ता है वैसे ही अश्वत्थामा की ओर दौड़े ॥४२।४४॥ महावीर अश्वत्थामा ने उनका धनुष काट डाला और उनपर असंख्य बाण बरसाये। सात्यकि ने उसी क्षण स्फूर्त्ति से दूसरा सुदृढ धनुष हाथ में लेकर साठ बाण अश्वत्थामा के हृदय में और दोनों हाथों में मारे। उन बाणों के प्रहार से अश्वत्थामा बहुत व्यथित होकर क्षण भर के लिए अचेत होगये, वे ध्वजा का डण्डा पकड़कर रथ पर बैठ गये॥४५।४७॥ सचेत होने पर उन्होंने क्रुद्ध होकर सात्यकि को एक घोर नाराच बाण मारा। वह बाण सात्यकि के शरीर को फोड़कर वैसे ही पृथ्वी में प्रवेश हो गया जैसे वसन्तऋतु में बलवान् सर्प का बच्चा बिल में प्रवेश हो जाता है। फिर एक भल्ल बाण से सात्यकि के रथ की ध्वजा काटकर वे सिंहनाद करने लगे। वर्षा-ऋतु में मेघ जैसे सूर्य को छिपा लेते हैं वैसे ही अश्वत्थामा ने बाणों से सात्यकि को अदृश्य कर दिया ॥४८।५१॥ हे राजेन्द्र ! सात्यकि भी उन बाणों को काटकर, अपने बाणों से अश्वत्थामा को अदृश्य करके, मेघों को चीरकर निकले हुए सूर्य की तरह अश्वत्थामा

दृष्ट्वा पुत्रं च तं ग्रस्तं राहुणेव निशाकरम् ।
अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ॥ ५५ ॥
विव्याध च सुतीक्ष्णेन पृषत्केन महामृधे ।
परीप्सन्स्वसुतं राजन्वार्ष्णेयेनाऽभिपीडितम् ॥ ५६ ॥
सात्यकिस्तु रणे हित्वा गुरुपुत्रं महारथम् ।
द्रोणं विव्याध विंशत्या सर्वपारशवैः शरैः ॥ ५७ ॥
तदन्तरममेयात्मा कौन्तेयः शत्रुतापनः ।
अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ॥ ५८ ॥
ततो द्रोणश्च पार्थश्च समेयेतां महामृधे ।
यथा बुधश्च शुक्रश्च महाराज नभस्तले ॥ ५९ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि अलम्बुषाभिमन्युयुद्धे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

को सताने लगे। इसके अनन्तर फिर सहस्रों बाण बरसाकर उन्होंने अश्वत्थामा को जर्जर कर दिया ॥५२।५४॥ पुत्र अश्वत्थामा को राहुग्रस्त चन्द्रमा के समान पीड़ित देखकर द्रोणाचार्य सात्यकि की ओर दौड़े, और अश्वत्थामा के प्राण बचाने के लिए उन्होंने सात्यकि को तीक्ष्ण बाण मारा। तब सात्यकि ने भी गुरु-पुत्र अश्वत्थामा को छोड़कर द्रोणाचार्य को लोहमय बीस बाण मारे। उधर महापराक्रमी अर्जुन भी कुपित होकर द्रोणाचार्य की ओर दौड़े। इसके अनन्तर द्रोण और अर्जुन दोनों, आकाश में बृहस्पति और शुक्र की तरह, घोर युद्ध करने लगे ॥५५।५९॥

—०—

भीष्मपर्व का एक सौ एक अध्याय समाप्त हुआ ॥ १०१ ॥

---

अथ द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

धृतराष्ट्र उवाच—कथं द्रोणो महेष्वासः पाण्डवश्च धनञ्जयः ।
समीयतू रणे यत्तौ तावुभौ पुरुषर्षभौ ॥ १ ॥
प्रियो हि पाण्डवो नित्यं भारद्वाजस्य धीमतः ।
आचार्यश्च रणे नित्यं प्रियः पार्थस्य सञ्जय ॥ २ ॥
तावुभौ रथिनौ संख्ये दृप्तौ सिंहाविवोत्कटौ ।
कथं समीयतुर्यत्तौ भारद्वाजधनञ्जयौ ॥ ३ ॥
सञ्जय उवाच—न द्रोणः समरे पार्थं जानीत प्रियमात्मनः ।
क्षत्रधर्मं पुरस्कृत्य पार्थो वा गुरुमाहवे ॥ ४ ॥

एक सौ दो अध्याय ॥ १०२ ॥

धृतराष्ट्र ने कहा—हे सञ्जय! पुरुषश्रेष्ठ द्रोणाचार्य और अर्जुन दोनों ने किस प्रकार युद्ध किया? बुद्धिमान् द्रोणाचार्य को अर्जुन बहुत ही प्रिय हैं, और अर्जुन भी द्रोणाचार्य का बहुत मान करते हैं। उन दोनों, सिंह के समान उत्साही, वीरों ने किस प्रकार युद्ध किया? ॥१।३॥ सञ्जय ने कहा—हे

न क्षत्रिया रणे राजन्वर्जयन्ति परस्परम् ।
निर्मर्यादं हि युध्यन्ते पितृभिर्भ्रातृभिः सह ॥ ५ ॥
रणे भारत पार्थेन द्रोणो विद्धस्त्रिभिः शरैः ।
नाऽचिन्तयच्च तान्बाणान्पार्थचापच्युतान्युधि ॥ ६ ॥
शरवृष्ट्या पुनः पार्थश्छादयामास तं रणे ।
स प्रजज्वाल रोषेण गहनेऽग्निरिवोर्जितः ॥ ७ ॥
ततोऽर्जुनं रणे द्रोणः शरैः सन्नतपर्वभिः ।
छादयामास राजेन्द्र न चिरादेव भारत ॥ ८ ॥
ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
द्रोणस्य समरे राजन्पार्ष्णिग्रहणकारणात् ॥ ९ ॥
त्रिगर्तराडपि क्रुद्धो भृशमायम्य कार्मुकम् ।
छादयामास समरे पार्थं बाणैरयोमुखैः ॥ १० ॥
ताभ्यां मुक्ताः शरा राजन्नन्तरिक्षे विरेजिरे ।
हंसा इव महाराज शरत्काले नभस्तले ॥ ११ ॥
ते शराः प्राप्य कौन्तेयं समन्ताद्विविशुः प्रभो ।
फलभारनतं यद्वत्स्वादुवृक्षं विहङ्गमाः ॥ १२ ॥
अर्जुनस्तु रणे नादं विनद्य रथिनां वरः ।
त्रिगर्तराजं समरे सपुत्रं विव्यधे शरैः ॥ १३ ॥
ते वध्यमानाः पार्थेन कालेनेव युगक्षये ।
पार्थमेवाऽभ्यवर्तन्त मरणे कृतनिश्चयाः ॥ १४ ॥

महाराज ! क्षत्रियधर्म के अनुयायी द्रोणाचार्य युद्ध में अर्जुन को अपना प्रिय नहीं समझते, और अर्जुन भी गुरु पर कठोर प्रहार करने में कुछ कमी नहीं रखते। क्षत्रियों का धर्म ही यह है कि वे युद्ध में किसी का विचार नहीं करते। वे नाते का विचार छोड़कर पिता और भाई आदि से कठिन युद्ध करते हैं ॥४।५॥ हे महाराज ! अर्जुन ने द्रोणाचार्य को तीन तीक्ष्ण बाण मारे; किन्तु अर्जुन के धनुष से छूटे हुए उन बाणों से द्रोणाचार्य विचलित नहीं हुए। तब फिर अर्जुन उनके ऊपर बाणों की वर्षा-सी करने लगे। गहन वन में अग्नि के समान आचार्य द्रोण क्रोध से प्रज्वलित हो उठे। उन्होंने स्फूर्ति के साथ अति तीक्ष्ण असंख्य बाणों से अर्जुन को ढक दिया ॥६।८॥ तब राजा दुर्योधन ने द्रोणाचार्य के पार्श्वभाग की रक्षा और सहायता के लिए त्रिगर्तदेश के राजा सुशर्मा को भेजा। राजा सुशर्मा कुपित होकर, धनुष चढ़ाकर, तीक्ष्ण बाणों से अर्जुन को पीड़ा पहुँचाने लगे। सुशर्मा का पुत्र भी लोहमय बाण अर्जुन को मारने लगा। उन पिता पुत्र के चलाये हुए बाण आकाश में, शरद् ऋतु में, उड़ते हुए हंसों के समान जान पड़ने लगे। जैसे पक्षी चारों ओर से आकर स्वादिष्ट फलों से पूर्ण झुके हुए वृक्ष के भीतर प्रवेश करते हैं, वैसे ही वे बाण चारों ओर से आकर अर्जुन के शरीर में प्रवेश होने लगे ॥९।१२॥ महारथी अर्जुन ने सिंह-

मुमुचुः शरवृष्टिं च पाण्डवस्य रथं प्रति ।
शरवृष्टिं ततस्तां तु शरवर्षैः समन्ततः ॥ १५ ॥
प्रतिजग्राह राजेन्द्र तोयवृष्टिमिवाऽचलः ।
तत्राऽद्भुतमपश्याम वीभत्सोर्हस्तलाघवम् ॥ १६ ॥
विमुक्तां बहुभिर्योधैः शस्त्रवृष्टिं दुरासदाम् ।
यदेको वारयामास मारुतोऽभ्रगणानिव ॥ १७ ॥
कर्मणा तेन पार्थस्य तुतुषुर्देवदानवाः ।
अथ क्रुद्धो रणे पार्थस्त्रिगर्तान्प्रति भारत ॥ १८ ॥
मुमोचाऽस्त्रं महाराज वायव्यं पृतनामुखे ।
प्रादुरासीत्ततो वायुः क्षोभयाणो नभस्तलम् ॥ १९ ॥
पातयन्वै तरुगणान्विनिघ्नंश्चैव सैनिकान् ।
ततो द्रोणोऽभिवीक्ष्यैव वायव्यास्त्रं सुदारुणम् ॥ २० ॥
शैलमन्यन्महाराज घोरमस्त्रं मुमोच ह ।
द्रोणेन युधि निर्मुक्ते तस्मिन्नस्त्रे नराधिप ॥ २१ ॥
प्रशशाम ततो वायुः प्रसन्नाश्च दिशो दश ।
ततः पाण्डुसुतो वीरस्त्रिगर्तस्य रथव्रजान् ॥ २२ ॥
निरुत्साहान्रणे चक्रे विमुखान्विपराक्रमान् ।
ततो दुर्योधनश्चैव कृपश्च रथिनां वरः ॥ २३ ॥
अश्वत्थामा तथा शल्यः काम्बोजश्च सुदक्षिणः ।
विन्दानुविन्दावावन्त्यौ वाह्लिकः सह वाह्लिकैः ॥ २४ ॥

नाद करके पिता और पुत्र दोनों को बहुत से बाण मारे। सुशर्मा और उनका पुत्र दोनों ही कालतुल्य अर्जुन के बाणों से घायल होकर भी, जीवन की ममता छोड़कर, अर्जुन से घोर युद्ध करने लगे। वे अर्जुन के ऊपर निरन्तर बाणों की वर्षा करने लगे। पर्वत जैसे वर्षा को अपने ऊपर रोकता है वैसे ही वीर अर्जुन अपने बाणों से उनके बाणों को रोकने लगे। उस समय हम लोग अर्जुन के हाथों की स्फूर्ति देखने लगे। वायु जैसे मेघमाला को क्षणभर में छिन्न-भिन्न कर डालती है, वैसे ही अकेले अर्जुन बहुत से योद्धाओं के शस्त्रों की वर्षा को छिन्न-भिन्न करने और रोकने लगे। अर्जुन के उस अद्भुत कर्म और युद्ध-कौशल को देखकर देवता और दानव बहुत ही सन्तुष्ट हुए ॥१३।१८॥ महावीर अर्जुन ने कुपित होकर त्रिगर्तसेना के ऊपर वायव्य अस्त्र छोड़ा। उससे प्रबल आँधी उत्पन्न हुई, जिससे आकाशमण्डल क्षोभ को प्राप्त हुआ, वृक्ष उखड़-उखड़कर गिरने लगे, सैनिक लोग नष्ट होने लगे और सारी सेना अस्तव्यस्त तथा नष्टभ्रष्ट होने लगी। द्रोणाचार्य ने उस दारुण वायव्य-अस्त्र का उत्थान देखकर, उसे व्यर्थ करने के लिए, घोर पर्वतास्त्र का प्रयोग किया। उससे आँधी शान्त हो गई, दसों दिशाएँ निर्मल देख पड़ने लगीं। इसके पश्चात् महारथी अर्जुन ने अपने युद्धकौशल से त्रिगर्त-राज के असंख्य रथी योद्धाओं को उत्साहहीन और

महता रथवंशेन पार्थस्याऽवारयन्दिशः ।
तथैव भगदत्तश्च श्रुतायुश्च महाबलः ॥ २५ ॥
गजानीकेन भीमस्य तावावारयतां दिशः ।
भूरिश्रवाः शलश्चैव सौबलश्च विशाम्पते ॥ २६ ॥
शरौघैर्विमलैस्तीक्ष्णैर्माद्रीपुत्राववारयन् ।
भीष्मस्तु संहतः संख्ये धार्तराष्ट्रैः ससैनिकैः ॥ २७ ॥
युधिष्ठिरं समासाद्य सर्वतः पर्यवारयत् ।
आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः ॥ २८ ॥
लेलिहन्सृक्किणी वीरो मृगराडिव कानने ।
भीमस्तु रथिनां श्रेष्ठो गदां गृह्य महाहवे ॥ २९ ॥
अवप्लुत्य रथात्तूर्णं तव सैन्यान्यभीषयत् ।
तमुद्वीक्ष्य गदाहस्तं ततस्ते गजसादिनः ॥ ३० ॥
परिवव्रू रणे यत्ता भीमसेनं समन्ततः ।
गजमध्यमनुप्राप्तः पाण्डवः स व्यराजत ॥ ३१ ॥
मेघजलस्य महतो यथा मध्यगतो रविः ।
व्यधमत्स गजानीकं गदया पाण्डवर्षभः ॥ ३२ ॥
महाभ्रजालमतुलं मातरिश्वेव सन्ततम् ।
ते वध्यमाना बलिना भीमसेनेन दन्तिनः ॥ ३३ ॥
आर्तनादं रणे चक्रुर्गर्जन्तो जलदा इव ।
बहुधा दारितश्चैव विषाणैस्तत्र दन्तिभिः ॥ ३४ ॥

पराक्रम-शून्य करके युद्ध से विमुख कर दिया ॥१८।२३॥ तब राजा दुर्योधन, कृपाचार्य, अश्वत्थामा, शल्य, सुदक्षिण, विन्द, अनुविन्द और वाह्लीक देश की सेना सहित राजा वाह्लीक असंख्य रथों के द्वारा चारों ओर से अर्जुन को घेरकर उनपर प्रहार करने लगे। महाबली श्रुतायुध और राजा भगदत्त ने बड़े भारी हाथियों के दल से चारों ओर से भीमसेन को घेर लिया। भूरिश्रवा, शल और शकुनि, ये तीनों वीर बहुत सी सेना के द्वारा नकुल और सहदेव को घेरकर उनपर तीक्ष्ण बाण बरसाने लगे। सेना सहित आपके सब पुत्रों को साथ लिये भीष्म पितामह ने धर्मराज युधिष्ठिर पर आक्रमण किया ॥२३।२७॥ हे महाराज ! पराक्रमी भीमसेन ने हाथियों की बड़ी सेना को अपनी ओर आते देखा तो वे रथ से उतर पड़े और गदा हाथ में लेकर उसी ओर दौड़े। वन में विचरनेवाले सिंह की तरह क्रोध से होंठ चाटते हुए भीमसेन का भयानक रूप ही देखकर बहुत से सैनिक भय से व्याकुल हो उठे। हाथियों पर सवार योद्धाओं ने गदा हाथ में लिये भीमसेन को खड़े देखकर चारों ओर से घेर लिया। सूर्य जैसे मेघों के मध्य में शोभित होते हैं वैसे ही उस गजदल के मध्य भीमसेन की शोभा हुई ॥२७।३१॥ वायु जैसे मेघों को तितर-बितर कर देती है वैसे ही भीमसेन अपनी गदा के विकट प्रहार से उस गजदल को मारने

फुल्लाशोकनिभः पार्थः शुशुभे रणमूर्धनि ।
विषाणे दन्तिनं गृह्य निर्विषाणमथाऽकरोत् ॥ ३५ ॥
विषाणेन च तेनैव कुम्भेऽभ्याहत्य दन्तिनम् ।
पातयामास समरे दण्डहस्त इवाऽन्तकः ॥ ३६ ॥
शोणिताक्तां गदां बिभ्रन्मेदोमज्जाकृतच्छविः ।
कृताभ्यङ्गः शोणितेन रुद्रवत्प्रत्यदृश्यत ॥ ३७ ॥
एवं ते वध्यमानाश्च हतशेषा महागजाः ।
प्राद्रवन्त दिशो राजन्विमृद्नन्तः स्वकं बलम् ॥ ३८ ॥
द्रवद्भिस्तैर्महानागैः समन्ताद्भरतर्षभ ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ३९ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीमपराक्रमे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

ओर भगाने लगे। बड़े-बड़े हाथी भीमसेन की गदा का मार खाकर मेघ-गर्जन के समान चिल्लाने और आर्तनाद करने लगे। हाथियों ने भी भीमसेन के शरीर में दाँतों के प्रहार किये। उनके शरीर से रक्त बह चला, जिससे वे फूले हुए अशोकवृक्ष के समान शोभायमान हुए॥३२।३५॥ भीमसेन ने कुपित होकर किसी-किसी हाथी के दाँत उखाड़ लिये, और दण्डपाणि यमराज की तरह उन्हीं दाँतों के प्रहार से उनके मस्तक फाड़कर वे उन्हें पृथ्वी पर गिराने लगे। भीम के शरीर में मेदा और मज्जा लिपी हुई थी, रक्त से युक्त गदा उनके कन्धे पर थी; इस वेष में वे शूलपाणि रुद्र के समान देख पड़ते थे। जो बड़े-बड़े हाथी मरने से बचे थे वे अपनी ही सेना को रौंदते हुए चारों ओर भागने लगे। कौरवपक्ष की सेना फिर युद्ध से भागकर अस्तव्यस्त हो गई॥३६।३९॥

भीष्मपर्व का एक सौ दो अध्याय समाप्त हुआ॥ १०२ ॥

अथ त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

सञ्जय उवाच—मध्यन्दिने महाराज संग्रामः समपद्यत ।
लोकक्षयकरो रौद्रो भीष्मस्य सह सोमकैः ॥ १ ॥
गाङ्गेयो रथिनां श्रेष्ठः पाण्डवानामनीकिनीम् ।
व्यधमन्निशितैर्बाणैः शतशोऽथ सहस्रशः ॥ २ ॥
संममर्द च तत्सैन्यं पिता देवव्रतस्तव ।
धान्यानामिव लूनानां प्रकरं गोगणा इव ॥ ३ ॥

एक सौ तीन अध्याय॥ १०३ ॥

सञ्जय ने कहा— हे राजेन्द्र! इसी दिन मध्याह्न के समय सोमकों के साथ भीष्म पितामह महाभयानक युद्ध करने लगे। महारथी भीष्म बाणों की अग्नि में सैंकड़ों-सहस्रों क्षत्रियों को भस्म करने लगे। जैसे बैल अन्न के ढेर को रौंदते हैं वैसे ही देवव्रत भीष्म पाण्डवों की सेना का संहार करने लगे॥१।३॥ धृष्टद्युम्न

धृष्टद्युम्नः शिखण्डी च विराटो द्रुपदस्तथा ।
भीष्ममासाद्य समरे शरैर्जघ्नुर्महारथम् ॥ ४ ॥
धृष्टद्युम्नं ततो विध्वा विराटं च शरैस्त्रिभिः ।
द्रुपदस्य च नाराचं प्रेषयामास भारत ॥ ५ ॥
तेन विद्धा महेष्वासा भीष्मेणाऽमित्रकर्षिणा ।
चुक्रुधुः समरे राजन्पादस्पृष्टा इवोरगाः ॥ ६ ॥
शिखण्डी तं च विव्याध भरतानां पितामहम् ।
स्त्रीमयं मनसा ध्यात्वा नाऽस्मै प्राहरदच्युतः ॥ ७ ॥
धृष्टद्युम्नस्तु समरे क्रोधेनाऽग्निरिव ज्वलन् ।
पितामहं त्रिभिर्बाणैर्बाह्वोरुरसि चाऽर्पयत् ॥ ८ ॥
द्रुपदः पञ्चविंशत्या विराटो दशभिः शरैः ।
शिखण्डी पञ्चविंशत्या भीष्मं विव्याधसायकैः ॥ ९ ॥
सोऽतिविद्धो महाराज शोणितौघपरिप्लुतः ।
वसन्ते पुष्पशवलो रक्ताशोक इवाऽऽबभौ ॥ १० ॥
तान्प्रत्यविध्यद्गाङ्गेयास्त्रिभिस्त्रिभिरजिह्मगैः ।
द्रुपदस्य च भल्लेन धनुश्चिच्छेद मारिष ॥ ११ ॥
सोऽन्यत्कार्मुकमादाय भीष्मं विव्याध पञ्चभिः ।
सारथिं च त्रिभिर्बाणैः सुशितै रणमूर्धनि ॥ १२ ॥
तथा भीमो महाराज द्रौपद्याः पञ्च चाऽऽत्मजाः ।
केकया भ्रातरः पञ्च सात्यकिश्चैव सात्वतः ॥ १३ ॥

शिखण्डी, विराट और महारथी द्रुपद भीष्म के पास जाकर उनपर असंख्य बाण बरसाने लगे। शत्रुनाशन भीष्म ने तीन-तीन बाण धृष्टद्युम्न और विराट को और एक नाराच बाण द्रुपद को मारा। धृष्टद्युम्न आदि महारथी भीष्म के बाणों से विद्ध होकर पाँव से पूँछ दबे हुए सर्प के समान क्रुद्ध हो गये ॥४।६॥ यद्यपि शिखण्डी निरन्तर भीष्म के मर्मस्थल में बाण मारने लगे, किन्तु महाव्रत भीष्म ने उन्हें पहले की स्त्री समझकर उन पर प्रहार नहीं किया। धृष्टद्युम्न ने क्रोध से अत्यन्त प्रज्वलित होकर भीष्म के हाथों में अग्निसदृश दो बाण मारे, और एक बाण वक्षःस्थल में मारा। महारथी द्रुपद ने भी भीष्म को पचीस बाण मारे। विराट ने पितामह को दस बाण और शिखण्डी ने पचीस बाण मारे ॥७।९॥ हे राजेन्द्र! उन बाणों से बहुत ही घायल होकर भीष्म रक्त से तर हो गये। वे उस समय वसन्त में लाल फूलों से शोभित अशोक-वृक्ष के समान देख पड़ने लगे। तब उन्होंने कुपित होकर [शिखण्डी को छोड़कर और] सबको तीन तीन बाण मारे। इसके पश्चात् एक भल्ल बाण से द्रुपद का धनुष काट डाला। राजा द्रुपद ने दूसरा धनुष लेकर पाँच बाण भीष्म को और तीन बाण उनके सारथी को मारे ॥१०।१२॥ तब भीमसेन, द्रौपदी के पाँचों पुत्र, कैकेयगण, यादवश्रेष्ठ सात्यकि और धृष्टद्युम्न, ये लोग द्रुपद की रक्षा करने के लिए भीष्म

अभ्यद्रवन्त गाङ्गेयं युधिष्ठिरपुरोगमाः ।
रिरक्षिषन्तः पाञ्चाल्यं धृष्टद्युम्नपुरोगमाः ॥ १४ ॥
तथैव तावकाः सर्वे भीष्मरक्षार्थमुद्यताः ।
प्रत्युद्ययुः पाण्डुसेनां सहसैन्या नराधिप ॥ १५ ॥
तत्राऽऽसीत्सुमहद्युद्धं तव तेषां च संकुलम् ।
नराश्वरथनागानां यमराष्ट्रविवर्धनम् ॥ १६ ॥
रथी रथिनमासाद्य प्राहिणोद्यमसादनम् ।
तथेतरान्समासाद्य नरनागाश्वसादिनः ॥ १७ ॥
अनयन्परलोकाय शरैः सन्नतपर्वभिः ।
शरैश्च विविधैर्घोरैस्तत्र तत्र विशाम्पते ॥ १८ ॥
रथास्तु रथिभिर्हीना हतसारथयस्तथा ।
विप्रद्रुताश्च समरे दिशो जग्मुः समन्ततः ॥ १९ ॥
मृद्नन्तस्ते नरान्राजन्हयांश्च सुबहून्रणे ।
वातायमाना दृश्यन्ते गन्धर्वनगरोपमाः ॥ २० ॥
रथिनश्च रथैर्हीना वर्मिणस्तेजसा युताः ।
कुण्डलोष्णीषिणः सर्वे निष्काङ्गदविभूषणाः ॥ २१ ॥
देवपुत्रसमाः सर्वे शौर्ये शक्रसमा युधि ।
ऋद्ध्या वैश्रवणं चाऽति नयेन च बृहस्पतिम् ॥ २२ ॥
सर्वलोकेश्वराः शूरास्तत्र तत्र विशाम्पते ।
विप्रद्रुता व्यदृश्यन्त प्राकृता इव मानवाः ॥ २३ ॥
दन्तिनश्च नरश्रेष्ठ हीनाः परमसादिभिः ।
मृद्नन्तः स्वान्यनीकानि निपेतुः सर्वशब्दगाः ॥ २४ ॥

---

की ओर चले। हे महाराज ! आपके पक्ष के सब वीर भी सेना साथ लेकर भीष्म की रक्षा करने के लिए पाण्डवों की ओर दौंडे ॥१३।१५॥ उस समय दोनों ओर के रथी, हाथी, घोड़े और पैदल परस्पर भिड़कर घोर युद्ध करने लगे। रथी रथी के साथ, हाथी हाथी के साथ, घोड़े घोड़ों के साथ, सवार सवारों के साथ और पैदल सैनिक पैदल सैनिकों के साथ भिड़कर यमपुरी को जाने लगे। हे राजेन्द्र ! स्थान-स्थान पर दारुण बाणों के प्रहार से टूट-फटकर, सारथी और रथी से शून्य होकर, बड़े-बड़े रथ समरभूमि में इधर-उधर फिरने लगे ॥१६।१८॥ मैंने देखा कि गन्धर्व नगरसदृश, वायुवेगगामी घोड़ों से युक्त, बड़े-बड़े रथ मनुष्यों और घोड़ों को रौंदते हुए इधर-उधर दौड़ने लगे। हे भूपाल ! बृहस्पति के समान नीति में निपुण, कुबेर के समान सम्पत्तिशाली, इन्द्र के समान शूर, कुण्डल पगड़ी-निष्क-अङ्गद-कवच आदि से अलंकृत, देवपुत्र के समान रथी राजा लोग बड़े-बड़े देशों के नरेश होकर भी, रथ नष्ट हो जाने

चर्मभिश्चामरैश्चित्रैः पताकाभिश्च मारिष ।
छत्रैः सितैर्हेमदण्डैश्चामरैश्च समन्ततः ॥ २५ ॥
विशीर्णैर्विप्रधावन्तो दृश्यन्ते स्म दिशो दश ।
नवमेघप्रतीकाशा जलदोपमनिःस्वनाः ॥ २६ ॥
तथैव दन्तिभिर्हीना गजारोहा विशाम्पते ।
प्रधावन्तोऽन्वदृश्यन्त तव तेषां च संकुले ॥ २७ ॥
नानादेशसमुत्थांश्च तुरगान्हेमभूषितान् ।
वातायमानानद्राक्षं शतशोऽथ सहस्रशः ॥ २८ ॥
अश्वारोहान्हतैरश्वैर्गृहीतासीन्समन्ततः ।
द्रवमाणानपश्याम द्राव्यमाणांश्च संयुगे ॥ २९ ॥
गजो गजं समासाद्य द्रवमाणं महाहवे ।
ययौ प्रमृद्य तरसा पादातान्वाजिनस्तथा ॥ ३० ॥
तथैव च रथान्राजन्प्रममर्द रणे गजः ।
रथाश्चैव समासाद्य पतितांस्तुरगान्भुवि ॥ ३१ ॥
व्यमृद्नन्समरे राजंस्तुरगांश्च नरान्रणे ।
एवं ते बहुधा राजन्प्रत्यमृद्नन्परस्परम् ॥ ३२ ॥
तस्मिन्रौद्रे तथा युद्धे वर्तमाने महाभये ।
प्रावर्तत नदी घोरा शोणितान्त्रतरङ्गिणी ॥ ३३ ॥
अस्थिसङ्घातसम्बाधा केशशैवलशाद्वला ।
रथह्रदा शरावर्ता हयमीना दुरासदा ॥ ३४ ॥

शीर्षोपलसमाकीर्णा हस्तिग्राहसमाकुला ।
कवचोष्णीषफेनौघा धनुर्वेगासिकच्छपा ॥ ३५ ॥
पताकाध्वजवृक्षाढ्या मर्त्यकूलापहारिणी ।
क्रव्यादहंससङ्कीर्णा यमराष्ट्रविवर्धनी ॥ ३६ ॥
तां नदीं क्षत्रियाः शूरा रथनागहयप्लवैः ।
प्रतेरुर्बहवो राजन्भयं त्यक्त्वा महारथाः ॥ ३७ ॥
अपोवाह रणे भीरून्कश्मलेनाभिसंवृतान् ।
यथा वैतरणी प्रेतान्प्रेतराजपुरं प्रति ॥ ३८ ॥
प्राक्रोशन्क्षत्रियास्तत्र दृष्ट्वा तद्वैशसं महत् ।
दुर्योधनापराधेन गच्छन्ति क्षत्रियाः क्षयम् ॥ ३९ ॥
गुणवत्सु कथं द्वेषं धृतराष्ट्रो जनेश्वरः ।
कृतवान्पाण्डुपुत्रेषु पापात्मा लोभमोहितः ॥ ४० ॥
एवं बहुविधा वाचः श्रूयन्ते स्म परस्परम् ।
पाण्डव-स्तव-संयुक्ताः पुत्राणां ते सुदारुणाः ॥ ४१ ॥
ता निशम्य ततो वाचः सर्वयोधैरुदाहृताः ।
आगस्कृत्सर्वलोकस्य पुत्रो दुर्योधनस्तव ॥ ४२ ॥
भीष्मं द्रोणं कृपं चैव शल्यं चोवाच भारत ।
युध्यध्वमनहङ्काराः किं चिरं कुरुथेति च ॥ ४३ ॥
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह ।
अक्षद्यूतकृतं राजन्सुघोरं वैशसं तदा ॥ ४४ ॥

उसमें सेवार और घास की जगह थे। टूटे हुए रथ उसके भीतर के गहरे कुण्ड थे। बाण ही भँवर थे; घोड़ों की लाशें मछलियाँ थीं। कटे हुए सिर कमल के फूल थे। हाथियों के शरीर बड़े-बड़े ग्राह थे। कवच और पगड़ियाँ फेने की जगह बह रही थीं। धनुष ही उसका वेगशाली प्रवाह था। तलवारें कच्छप की जगह थीं। पताका और ध्वजाएँ किनारे पर के वृक्षों की जगह थीं। मनुष्यों की लाशें उसके कगारे थे। मांसाहारी पक्षी हंसों के समान उसके आस-पास उड़ रहे थे। वह नदी यम के राज्य को बढ़ा रही थी ॥३३।३६॥ बहुत से शूरवीर महारथी क्षत्रिय निर्भय भाव से नौका के समान घोड़े-हाथी-रथ आदि पर चढ़कर उस नदी के पार जा रहे थे। जैसे वैतरणी नदी मरे हुओं को यमपुर में पहुँचाती है वैसे ही वह रक्त की नदी कायर और मूर्च्छित-से पुरुषों को रणभूमि से दूर हटाने लगी। क्षत्रियगण उस महाघोर हत्याकाण्ड को देखकर चिल्ला-चिल्लाकर कहने लगे —"हे क्षत्रियो! दुर्योधन के अपराध से ही सब क्षत्रिय नष्ट हो रहे हैं। महाराज धृतराष्ट्र ने ही लोभ और मोह के वश तथा पापपरायण होकर गुणी पाण्डवों से द्वेष क्यों किया?" ॥३७।४०॥ हे महाराज! इस प्रकार सब क्षत्रिय पाण्डवों की प्रशंसा और आपके पुत्रों की निन्दा से भरी अनेक प्रकार की बातें कर रहे थे। सब योद्धा क्षत्रियों के मुख से ऐसी बातें सुन-

यत्पुरा न निगृह्णासि वार्यमाणो महात्मभिः ।
वैचित्रवीर्य तस्येदं फलं पश्य सुदारुणम् ॥ ४५ ॥
न हि पाण्डुसुता राजन्ससैन्याः सपदानुगाः ।
रक्षन्ति समरे प्राणान्कौरवा वापि संयुगे ॥ ४६ ॥
एतस्मात्कारणाद्धोरो वर्तते स्वजनक्षयः ।
दैवाद्वा पुरुषव्याघ्र तव चापनयान्नृप ॥ ४७ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि संकुलयुद्धे त्र्यधिकशततमोऽध्यायः ॥१०३॥

कर सबके अपराधी आपके पुत्र राजा दुर्योधन ने भीष्म, द्रोण, कृप और राजा शल्य से कहा—"हे वीरो! तुम लोग अहङ्कार छोड़कर युद्ध करो। विलम्ब क्यों कर रहे हो!" ॥४१।४३॥ हे राजेन्द्र! तब उसी द्यूतक्रीड़ा के कारण फिर कौरवों और पाण्डवों का घोर युद्ध होने लगा। पहले व्यास, विदुर आदि महात्माओं ने बारम्बार आपको मना किया था परन्तु आपने उनकी बात नहीं मानी, उसी का यह दारुण परिणाम अब प्रत्यक्ष देखिए। हे राजेन्द्र! पाण्डव या कौरव और उनके सैनिक अनुगत बन्धु-बान्धव आदि सभी, प्राणों का मोह छोड़कर, घोर युद्ध कर रहे हैं। इस भयङ्कर स्वजन-विनाश का कारण चाहे दैव को मानिए, चाहे अपने अनुचित व्यवहार को मानिए और चाहे अपने हितचिन्तकों का कहा न मानने के अपराध को मानिए ॥४४।४७॥

—०—

भीष्मपर्व का एक सौ तीन अध्याय समाप्त हुआ ॥ १०३ ॥

अथ चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

सञ्जय उवाच—अर्जुनस्तान्नरव्याघ्रः सुशर्मानुचरान्नृपान् ।
अनयत्प्रेतराजस्य सदनं सायकैः शितैः ॥ १ ॥
सुशर्माऽपि ततो बाणैः पार्थं विव्याध संयुगे ।
वासुदेवं च सप्तत्या पार्थं च नवभिः पुनः ॥ २ ॥
तं निवार्य शरौघेण शक्रसूनुर्महारथः ।
सुशर्मणो रणे योधान्प्राहिणोद्यमसादनम् ॥ ३ ॥
ते वध्यमानाः पार्थेन कालेनेव युगक्षये ।
व्यद्रवन्त रणे राजन्भये जाते महारथाः ॥ ४ ॥
उत्सृज्य तुरगान्केचिद्रथान्केचिच्च मारिष ।
गजानन्ये समुत्सृज्य प्राद्रवन्त दिशो दश ॥ ५ ॥

एक सौ चार अध्याय ॥ १०४ ॥

सञ्जय ने कहा—हे राजेन्द्र! पुरुषसिंह अर्जुन तीक्ष्ण बाण बरसाकर त्रिगर्तराज सुशर्मा के साथियों को यमपुर भेजने लगे। सुशर्मा ने पहले सत्तर बाण श्रीकृष्ण को और फिर नव बाण अर्जुन को मारे। महारथी अर्जुन ने अनायास सुशर्मा के बाणों को व्यर्थ करके उसके सहायक कई योद्धाओं को मार डाला ॥१।३॥ सुशर्मा के बचे हुए साथी योद्धा, प्रलयकाल में काल के समान संहार करनेवाले, अर्जुन

अपरे तु तदाऽऽदाय वाजिनागरथान्रणे ।
त्वरया परया युक्ताः प्राद्रवन्त विशाम्पते ॥ ६ ॥
पादाताश्चाऽपि शस्त्राणि समुत्सृज्य महारणे ।
निरपेक्षा व्यधावन्त तेन तेन स्म भारत ॥ ७ ॥
वार्यमाणाः सुबहुशस्त्रैगर्तेन सुशर्मणा ।
तथाऽन्यैः पार्थिवश्रेष्ठैर्न व्यतिष्ठन्त संयुगे ॥ ८ ॥
तद्बलं प्रद्रुतं दृष्ट्वा पुत्रो दुर्योधनस्तव ।
पुरस्कृत्य रणे भीष्मं सर्वसैन्यपुरस्कृतः ॥ ९ ॥
सर्वोद्योगेन महता धनञ्जयमुपाद्रवत् ।
त्रिगर्ताधिपतेरर्थे जीवितस्य विशाम्पते ॥ १० ॥
स एकः समरे तस्थौ किरन्बहुविधान्शरान् ।
भ्रातृभिः सहितः सर्वैः शेषा हि प्रद्रुता नराः ॥ ११ ॥
तथैव पाण्डवा राजन्सर्वोद्योगेन दंशिताः ।
प्रययुः फाल्गुनार्थाय यत्र भीष्मो व्यतिष्ठत ॥ १२ ॥
ज्ञायमाना रणे वीर्यं घोरं गाण्डीवधन्वनः ।
हाहाकारकृतोत्साहा भीष्मं जग्मुः समन्ततः ॥ १३ ॥
ततस्तालध्वजः शूरः पाण्डवानां वरूथिनीम् ।
छादयामास समरे शरैः सन्नतपर्वभिः ॥ १४ ॥
एकीभूतास्ततः सर्वे कुरवः सह पाण्डवैः ।
अयुध्यन्त महाराज मध्यं प्राप्ते दिवाकरे ॥ १५ ॥

के बाणों से पीड़ित होकर भय के मारे प्राण लेकर भाग खड़े हुए । कोई घोड़े को, कोई हाथी को और कोई रथ को छोड़कर जिधर मार्ग मिला उधर पैदल ही भाग खड़ा हुआ । पैदल सेना के लोग भी उस महारण में शस्त्र-अस्त्र फेंककर, किसी का मार्ग न देखकर, इधर-उधर भागने लगे। त्रिगर्तराज सुशर्मा और अन्य राजा लोग उन्हें बारम्बार उत्साहित करते और ठहरने के लिए कहते थे, परन्तु उनमें से कोई भी नहीं ठहरा ॥४।८॥ हे महाराज ! दुर्योधन ने सुशर्मा की सेना को जब भागते देखा तब वे आप सब सेना के आगे हुए, और भीष्म पितामह को अपने आगे करके सुशर्मा के प्राण बचाने के लिए उद्योग करते हुए अर्जुन की ओर बढ़ने लगे । अपने भाइयों के साथ केवल दुर्योधन ही बाणवर्षा करते हुए अर्जुन के सन्मुख ठहरे, और सब योद्धा भाग गये । उधर कवचधारी पाण्डव भी पूर्ण उद्योग के साथ अर्जुन की सहायता करने के लिए भीष्म पितामह के सन्मुख आये ॥९।१२॥ युद्ध में अर्जुन का अमित पराक्रम जानकर भी वे लोग उत्साह के साथ कोलाहल और सिंहनाद करते हुए चारों ओर से भीष्म पर आक्रमण करने चले । तालचिह्न युक्त पताका से शोभित रथ पर बैठे हुए शूर भीष्म पितामह ने तीक्ष्ण बाणों से पाण्डवसेना को ढक दिया । हे राजेन्द्र ! इस प्रकार मध्याह्न के समय कौरवों के साथ पाण्डवों का घमासान

सात्यकिः कृतवर्माणं विद्ध्वा पञ्चभिराशुगैः ।
अतिष्ठदाहवे शूरः किरन्बाणान्सहस्रशः ॥ १६ ॥
तथैव द्रुपदो राजा द्रोणं विद्ध्वा शितैः शरैः ।
पुनर्विव्याध सप्तत्या सारथिं चाऽस्य पञ्चभिः ॥ १७ ॥
भीमसेनस्तु राजानं बाह्लीकं प्रपितामहम् ।
विद्ध्वा नदन्महानादं शार्दूल इव कानने ॥ १८ ॥
आर्जुनिश्चित्रसेनेन विद्धो बहुभिराशुगैः ।
अतिष्ठदाहवे शूरः किरन्बाणान्सहस्रशः ॥ १९ ॥
चित्रसेनं त्रिभिर्बाणैर्विव्याध समरे भृशम् ।
समागतौ तौ तु रणे महामात्रौ व्यरोचताम् ॥ २० ॥
यथा दिवि महाघोरौ राजन्बुधशनैश्चरौ ।
तस्याऽश्वांश्चतुरो हत्वा सूतं च नवभिः शरैः ॥ २१ ॥
ननाद बलवान्नादं सौभद्रः परवीरहा ।
हताश्वात्तु रथात्तूर्णं सोऽवप्लुत्य महारथः ॥ २२ ॥
आरुरोह रथं तूर्णं दुर्मुखस्य विशाम्पते ।
द्रोणश्च द्रुपदं भित्त्वा शरैः सन्नतपर्वभिः ॥ २३ ॥
सारथिं चाऽस्य विव्याध त्वरमाणः पराक्रमी ।
पीड्यमानस्ततो राजा द्रुपदो वाहिनीमुखे ॥ २४ ॥
अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ।
भीमसेनस्तु राजानं मुहूर्तादिव बाह्लिकम् ॥ २५ ॥

---

युद्ध होने लगा ॥१३।१५॥ महारथी सात्यकि ने कृतवर्मा को पाँच बाण मारे। इसके अनन्तर उन्होंने और भी हजारों बाण बरसाये। राजा द्रुपद ने पहले तीक्ष्ण बाणों से द्रोणाचार्य को घायल करके फिर सत्तर बाण उनको और पाँच बाण उनके सारथी को मारे। भीमसेन ने प्रपितामह राजा बाह्लीक को बाणों से घायल करके घोर सिंहनाद किया ॥१६।१८॥ पहले चित्रसेन ने बहुत से तीक्ष्ण बाण अभिमन्यु को मारे। शूर अभिमन्यु शत्रुओं पर हजारों बाण बरसा रहे थे। चित्रसेन के प्रहार करने पर उन्होंने भी चित्रसेन को तीन बाण मारे। हे महाराज! जैसे आकाश में महाघोर ग्रह बुध और शनैश्चर शोभाय-मान हों वैसे ही वे दोनों वीर युद्ध करते समय शोभा को प्राप्त हुए। वीर शत्रुओं का संहार करनेवाले अभिमन्यु ने नव बाणों से चित्रसेन के सारथी और चारों घोड़ों को मारकर सिंहनाद किया। वीर चित्रसेन बिना घोड़ों के रथ से कूदकर स्फूर्ति के साथ अपने भाई दुर्मुख के रथ पर चले गये ॥१९।२३॥ पराक्रमी द्रोणाचार्य ने बहुत से तीक्ष्ण बाण द्रुपद को और उनके सारथी को मारे। राजा द्रुपद सब सेना के सामने द्रोण के बाणों से पीड़ित होकर, उनके साथ अपने पिछले वैर को स्मरण कर, घोड़ों को शीघ्रता से हँकवाकर उनके सामने से हट गये। भीमसेन ने क्षणभर में सब सेना के सम्मुख महाराज बाह्लीक के

व्यश्वसूतरथं चक्रे सर्वसैन्यस्य पश्यतः ।
ससम्भ्रमो महाराज संशयं परमं गतः ॥ २६ ॥
अवप्लुत्य ततो वाहाद्वाह्लीकः पुरुषोत्तमः ।
आरुरोह रथं तूर्णं लक्ष्मणस्य महारणे ॥ २७ ॥
सात्यकिः कृतवर्माणं वारयित्वा महारणे ।
शरैर्बहुविधै राजन्नाससाद पितामहम् ॥ २८ ॥
स विद्ध्वा भारतं षष्ट्या निशितैर्लोमवाहिभिः ।
नृत्यन्निव रथोपस्थे विधुन्वानो महद्धनुः ॥ २९ ॥
तस्यायसीं महाशक्तिं चिक्षेपाऽथ पितामहः ।
हेमचित्रां महावेगां नागकन्योपमां शुभाम् ॥ ३० ॥
तामापतन्तीं सहसा मृत्युकल्पां सुदुर्जयाम् ।
ध्वंसयामास वार्ष्णेयो लाघवेन महायशाः ॥ ३१ ॥
अनासाद्य तु वार्ष्णेयं शक्तिः परमदारुणा ।
न्यपतद्धरणीपृष्ठे महोल्केव महाप्रभा ॥ ३२ ॥
वार्ष्णेयस्तु ततो राजन्स्वां शक्तिं कनकप्रभाम् ।
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति ॥ ३३ ॥
वार्ष्णेयभुजवेगेन प्रणुन्ना सा महाहवे ।
अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ॥ ३४ ॥
तामापतन्तीं सहसा द्विधा चिच्छेद भारतः ।
क्षुरप्राभ्यां सुतीक्ष्णाभ्यां सा व्यशीर्यत मेदिनीम् ॥ ३५ ॥

घोड़ों को और रथ सहित सारथी को नष्ट कर दिया। हे राजेन्द्र ! पुरुषश्रेष्ठ बाह्लीक प्राणसङ्कट की अवस्था में पड़कर भय के मारे स्फूर्ति के साथ टूटे हुए रथ से कूदकर लक्ष्मण कुमार के रथ पर चढ़ गये ॥२३।२७॥ सात्यकि ने कई प्रकार के बाण मारकर कृतवर्मा को युद्ध से हटा दिया। इसके अनन्तर वे भीष्म के पास पहुँचे। वहाँ उन्होंने स्फूर्ति के साथ भयानक लोम-वाही साठ बाण भीष्म को मारे। वे इतनी स्फूर्ति के साथ मण्डलाकार धनुष घुमाकर बाण बरसा रहे थे कि देखने से जान पड़ता था मानो रथ पर नृत्य कर रहे हैं ॥२८।२९॥ तब भीष्म पितामह ने हेम-चित्रित वेगवती नागिन-सी एक तीक्ष्ण शक्ति हाथ में ली, और वह शक्ति पूर्णबल से सात्यकि को मारी। महायशस्वी सात्यकि उस मृत्युतुल्य अमोघ शक्ति को सहसा आते देखकर बड़ी स्फूर्ति के साथ उसका प्रहार बचा गये। वह भयङ्कर शक्ति बड़ी उल्का के समान पृथ्वी में प्रवेश हो गई ॥३०।३२॥ अब वीर सात्यकि ने अपनी शक्ति उठाकर बड़े वेग से भीष्म के रथ पर फेंकी। सात्यकि के बाहुबल से चलाई गई बड़े वेग से आती हुई वह शक्ति मनुष्यों पर आक्रमण करनेवाली कालरात्रि के समान जान पड़ी। परन्तु भीष्म ने उस शक्ति को सहसा गिरते देख दो तीक्ष्ण क्षुरप्र बाणों से काटकर गिरा दिया। वह शक्ति दो टुकड़े होकर पृथ्वी पर गिर पड़ी

छित्वा शक्तिं तु गाङ्गेयः सात्यकिं नवभिः शरैः ।
आजघानोरसि क्रुद्धः प्रहसञ्छत्रुकर्शनः ॥ ३६ ॥
ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वजाः ।
परिवव्रू रणे भीष्मं माधवत्राणकारणात् ॥ ३७ ॥
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
पाण्डवानां कुरूणां च समरे विजयैषिणाम् ॥ ३८ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि वार्ष्णेययुद्धे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

॥३३।३५॥ उस शक्ति को काटने के पश्चात् शत्रुदमन भीष्म ने क्रोध की हँसी हँसकर सात्यकि की छाती में नव बाण मारे। तब भीष्म के अतुल पराक्रम से सात्यकि की रक्षा करने के लिए पाण्डवों ने भीष्म को चारों ओर से घेर लिया। जय की इच्छा रखनेवाले कौरव और पाण्डव परस्पर प्रहार करते हुए घोर युद्ध करने लगे ॥३६।३८॥

— ० —

भीष्मपर्व का एक सौ चार अध्याय समाप्त हुआ ॥ १०४ ॥

---

अथ पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

सञ्जय उवाच — दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतम् ।
यथा मेघैर्महाराज तपान्ते दिवि भास्करम् ॥ १ ॥
दुर्योधनो महाराज दुःशासनमभाषत ।
एष शूरो महेष्वासो भीष्मः शूरनिषूदनः ॥ २ ॥
छादितः पाण्डवैः शूरैः समन्ताद्भरतर्षभ ।
तस्य कार्यं त्वया वीर रक्षणं सुमहात्मनः ॥ ३ ॥
रक्ष्यमाणो हि समरे भीष्मोऽस्माकं पितामहः ।
निहन्यात्समरे यत्तान्पञ्चालान्पाण्डवैः सह ॥ ४ ॥
तत्र कार्यतमं मन्ये भीष्मस्यैवाऽभिरक्षणम् ।
गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं महाव्रतः ॥ ५ ॥
स भवान्सर्वसैन्येन परिवार्य पितामहम् ।
समरे कर्म कुर्वाणं दुष्करं परिरक्षतु ॥ ६ ॥

एक सौ पाँच अध्याय ॥ १०५ ॥

सञ्जय कहते हैं कि हे राजेन्द्र! पितामह भीष्म को वर्षाकाल के मेघों में घिरे हुए सूर्य की तरह पाण्डवों की सेना के घिराव में देखकर राजा दुर्योधन ने दुःशासन से कहा — हे भाई! यह देखो, शत्रुदमन भीष्म को पाण्डवों की सेना ने घेर लिया है। इस समय उन महावीर की रक्षा और सहायता करना हमारा परम कर्तव्य है। यदि हम पितामह की रक्षा कर सकेंगे तो वे अकेले ही पाञ्चालों और पाण्डवों को मार डालेंगे। भीष्म समर में अनेक अद्भुत दुष्कर कार्य करनेवाले और हमारे प्रधान रक्षक हैं। इसलिए तुम अपनी सारी

स एवमुक्तः समरे पुत्रो दुःशासनस्तव ।
परिवार्य स्थितो भीष्मं सैन्येन महता वृतः ॥ ७ ॥
ततः शतसहस्राणां हयानां सुबलात्मजः ।
विमलप्रासहस्तानामृष्टितोमरधारिणाम् ॥ ८ ॥
दर्पितानां सुवेशानां बलस्थानां पताकिनाम् ।
शिक्षितैर्युद्धकुशलैरुपेतानां नरोत्तमैः ॥ ९ ॥
नकुलं सहदेवं च धर्मराजं च पाण्डवम् ।
न्यवारयन्नरश्रेष्ठान्परिवार्य समन्ततः ॥ १० ॥
ततो दुर्योधनो राजा शूराणां हयसादिनाम् ।
अयुतं प्रेषयामास पाण्डवानां निवारणे ॥ ११ ॥
तैः प्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाऽऽहवे ।
खुराहता धरा राजंश्चकम्पे च ननाद च ॥ १२ ॥
खुरशब्दश्च सुमहान्वाजिनां शुश्रुवे तदा ।
महावंशवनस्येव दह्यमानस्य पर्वते ॥ १३ ॥
उत्पतद्भिश्च तैस्तत्र समुद्भूतं महद्रजः ।
दिवाकररथं प्राप्य च्छादयामास भास्करम् ॥ १४ ॥
वेगवद्भिर्हयैस्तैस्तु क्षोभिता पाण्डवी चमूः ।
निपतद्भिर्महावेगैर्हंसैरिव महत्सरः ॥ १५ ॥
हेषतां चैव शब्देन न प्राज्ञायत किञ्चन ।
ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ॥ १६ ॥

सेना के साथ जाकर पितामह की रक्षा करो ॥१।६॥ दुर्योधन की आज्ञा पाकर वीर दुःशासन ने भीष्म को अपनी सेना के मध्य में कर लिया। सब लोग बड़ी सावधानी से पितामह की रक्षा करने लगे। नकुल, सहदेव और धर्मराज से प्रधान रथी शकुनि युद्ध करने लगे। निर्मल प्रास, ऋष्टि और तोमर आदि शस्त्र धारण करनेवाले, सुशिक्षित, युद्धनिपुण वीर शकुनि के साथ थे। वे महावेगशाली पताका-शोभित घोड़ों पर सवार थे। ऐसे सहस्रों घुड़सवारों ने शकुनि के साथ जाकर तीनों पाण्डवों को घेर लिया ॥७।१०॥ राजा दुर्योधन ने पाण्डवों की गति रोकने के लिए दस हज़ार घुड़सवार सेना और भेज दी। गरुड़ की तरह शीघ्र चलनेवाले घोड़ों के दल आने पर उनकी टापों से समरभूमि मानो काँप उठी और टापों की आवाज से गूँज उठी। अग्नि लगने पर जलते हुए बाँसों की पोरें फटने से जैसा घोर शब्द होता है वैसा ही शब्द घोड़ों की टापें पृथ्वी पर पड़ने से हो रहा था। उनकी टापों से उड़ी हुई धूल के मेघ आकाश में छा गये और उसमें सूर्यमण्डल छिप गया ॥११। १४॥ जैसे हंसों के प्रवेश होने से सरोवर का जल क्षोभ को प्राप्त होता है वैसे ही वेगसम्पन्न घुड़सवार सेना आने पर पाण्डवों की सेना में हलचल मच गई। उस समय वहाँ घोड़ों की हिनहिनाहट और अस्त्र-शस्त्रों की झनकार के अतिरिक्त और कुछ भी नहीं

प्रत्यघ्नंस्तरसा वेगं समरे हयसादिनाम् ।
उद्‌वृत्तस्य महाराज प्रावृट्‌कालेऽतिपूर्यतः ॥ १७ ॥
पौर्णमास्यामम्बुवेगं यथा वेला महोदधेः ।
ततस्ते रथिनो राजञ्शरैः सन्नतपर्वभिः ॥ १८ ॥
न्यकृन्तन्नुत्तमाङ्गानि शरेण हयसादिनाम् ।
ते निपेतुर्महाराज निहता दृढधन्विभिः ॥ १९ ॥
नागैरिव महानागा यथावद्गिरिगह्वरे ।
तेऽपि प्रासैः सुनिशितैः शरैः सन्नतपर्वभिः ॥ २० ॥
न्यकृन्तन्नुत्तमाङ्गानि विचरन्तो दिशो दश ।
अभ्याहता हयारोहा ऋष्टिभिर्भरतर्षभ ॥ २१ ॥
अत्यजन्नुत्तमाङ्गानि फलानीव महाद्रुमाः ।
ससादिनो हया राजंस्तत्र तत्र निषूदिताः ॥ २२ ॥
पतिताः पात्यमानाश्च प्रत्यदृश्यन्त सर्वशः ।
वध्यमाना हयाश्चैव प्राद्रवन्त भयार्दिताः ॥ २३ ॥
यथा सिंहं समासाद्य मृगाः प्राणपरायणाः ।
पाण्डवाश्च महाराज जित्वा शत्रून्महामृधे ॥ २४ ॥
दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे ।
ततो दुर्योधनो दीनो दृष्ट्वा सैन्यं पराजितम् ॥ २५ ॥
अब्रवीद्भरतश्रेष्ठ मद्रराजमिदं वचः ।
एष पाण्डुसुतो ज्येष्ठो यमाभ्यां सहितो रणे ॥ २६ ॥
पश्यतां वो महाबाहो सेनां द्रावयति प्रभो ।
तं वारय महाबाहो वेलेव मकरालयम् ॥ २७ ॥

सुन पड़ता था। तटभूमि जैसे वर्षाकाल की पूर्णिमा के दिन क्षोभ को प्राप्त महासागर के प्रचण्ड वेग को रोकती है वैसे ही राजा युधिष्ठिर, नकुल और सहदेव ने उन घुड़सवार वीरों के वेग को तत्काल ही रोक दिया ॥१५।१८॥ तीनों वीर भाई तीक्ष्ण बाणों और प्रासों से उनके सिर काटने लगे। घुड़सवार लोग पाण्डवों के बाणों से मरकर, पर्वत कन्दरा में स्थित नागों द्वारा निहत महानागों की तरह, गिरने लगे। उनके सिर पेड़ से टपकनेवाले पके हुए ताड़-फल के समान पृथ्वी पर गिरते देख पड़ते थे ॥१८।२३॥ बहुत से घोड़े भी सवारों के साथ मरकर चारों ओर गिरने लगे। पाण्डवों के बाणों से अत्यन्त व्यथित घोड़े, सिंह के सताये हुए मृगों की तरह, प्राण ले-लेकर भागने लगे। तीनों पाण्डव इस प्रकार युद्ध में शत्रुपक्ष को हराकर भेरी, शङ्ख आदि बजाने लगे ॥२३।२५॥ राजा दुर्योधन ने अपने घुड़सवारों को हारकर भागते देख मद्रराज शल्य से कहा—हे राजेन्द्र! वह देखो, पाण्डवश्रेष्ठ युधिष्ठिर और नकुल-सहदेव हमारे सामने

त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः ।
पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान् ॥ २८ ॥
स ययौ रथवंशेन यत्र राजा युधिष्ठिरः ।
तदाऽऽपतद्वै सहसा शल्यस्य सुमहद्बलम् ॥ २९ ॥
महौघवेगं समरे वारयामास पाण्डवः ।
मद्रराजं च समरे धर्मराजो महारथः ॥ ३० ॥
दशभिः सायकैस्तूर्णमाजघान स्तनान्तरे ।
नकुलः सहदेवश्च तं सप्तभिरजिह्मगैः ॥ ३१ ॥
मद्रराजोऽपि तान्सर्वानाजघान त्रिभिस्त्रिभिः ।
युधिष्ठिरं पुनः षष्ट्या विव्याध निशितैः शरैः ॥ ३२ ॥
माद्रीपुत्रौ च सम्भ्रान्तौ द्वाभ्यां द्वाभ्यामताडयत् ।
ततो भीमो महाबाहुर्दृष्ट्वा राजानमाहवे ॥ ३३ ॥
मद्रराजरथं प्राप्तं मृत्योरास्यगतं यथा ।
अभ्यपद्यत संग्रामे युधिष्ठिरममित्रजित् ॥ ३४ ॥
ततो युद्धं महाघोरं प्रावर्तत सुदारुणम् ।
अपरां दिशमास्थाय पतमाने दिवाकरे ॥ ३५ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

ही हमारी सेना को मारकर भगा रहे हैं। हे महाभाग! आपका बल-विक्रम पृथ्वी में प्रसिद्ध है। इसलिए तट-भूमि जैसे समुद्र के वेग को रोकती है वैसे ही आप भी ज्येष्ठ पाण्डव को रोकिए ॥२५।२८॥ हे महाराज! प्रतापी राजा शल्य दुर्योधन के ये वचन सुनकर असंख्य रथों के साथ युधिष्ठिर के समीप चले। राजा युधिष्ठिर ने शल्य की भारी सेना के साथ बड़े वेग से अपनी ओर आते देखकर उन्हें अनायास रोक लिया। युधिष्ठिर ने शल्य की छाती में दस बाण मारे। नकुल और सहदेव ने भी सात बाण मारे ॥२८।३१॥ मद्रराज शल्य ने भी तीनों को तीन-तीन बाण मारे। इसके अनन्तर क्रुद्ध होकर फिर युधिष्ठिर को तीक्ष्ण साठ बाण और नकुल सहदेव को दो-दो बाण मारे। हे राजेन्द्र! शत्रुवीरनाशक महाबाहु भीमसेन ने जब राजा युधिष्ठिर को मृत्यु के पञ्जे में फँसे और शल्य के वशवर्ती देखा तब वे बड़े वेग से उनके पास दौड़े गये। सूर्य उस समय पश्चिम आकाश में पहुँच चुके थे। दोनों ओर के वीर प्राणों का मोह छोड़कर घमासान युद्ध करने लगे ॥३२।३५॥

भीष्मपर्व का एक सौ पाँच अध्याय समाप्त हुआ ॥ १०५ ॥

अथ षडधिकशततमोऽध्यायः ॥ १०६ ॥

सञ्जय उवाच—ततः पिता तव क्रुद्धो निशितैः सायकोत्तमैः ।
आजघान रणे पार्थान्सहसेनान्समन्ततः ॥ १ ॥

भीमं द्वादशभिर्विध्वा सात्यकिं नवभिः शरैः ।
नकुलं च त्रिभिर्विध्वा सहदेवं च सप्तभिः ॥ २ ॥
युधिष्ठिरं द्वादशभिर्बाह्वोरुरसि चाऽर्पयत् ।
धृष्टद्युम्नं ततो विध्वा ननाद सुमहाबलः ॥ ३ ॥
तं द्वादशार्ध्यैर्नकुलो माधवश्च त्रिभिः शरैः ।
धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च सप्तभिः ॥ ४ ॥
युधिष्ठिरो द्वादशभिः प्रत्यविध्यत्पितामहम् ।
द्रोणस्तु सात्यकिं विध्वा भीमसेनमविध्यत ॥ ५ ॥
एकैकं पञ्चभिर्बाणैर्यमदण्डोपमैः शितैः ।
तौ च तं प्रत्यविध्येतां त्रिभिस्त्रिभिरजिह्मगैः ॥ ६ ॥
तोत्रैरिव महानागं द्रोणं ब्राह्मणपुङ्गवम् ।
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः॥ ७ ॥
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
संग्रामे नाऽजहुर्भीष्मं वध्यमानाः शितैः शरैः ॥ ८ ॥
तथैवाऽन्ये महीपाला नानादेशसमागताः ।
पाण्डवानभ्यवर्तन्त विविधायुधपाणयः ॥ ९ ॥
तथैव पाण्डवा राजन्परिवव्रुः पितामहम् ।
स समन्तात्परिवृतो रथौघैरपराजितः ॥ १० ॥
गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन्परान् ।
रथाग्न्यगारश्चापार्चिरसिशक्तिगदेन्धनः ॥ ११ ॥

एक सौ छः अध्याय ॥ १०६ ॥

सञ्जय कहते हैं—हे राजेन्द्र ! इसके अनन्तर पराक्रमी भीष्म क्रोध से उत्तेजित होकर तीक्ष्ण बाणों से सेना सहित पाण्डवों को पीड़ित करने लगे। उन्होंने भीमसेन को बारह, सात्यकि को नव, नकुल को तीन, सहदेव को सात और युधिष्ठिर के हृदय तथा हाथों में बारह बाण मारे। इसके पश्चात् कई बाणों से धृष्टद्युम्न को घायल करके वे सिंहनाद करने लगे ॥१।३॥ तब नकुल ने बारह, सात्यकि ने तीन, धृष्टद्युम्न ने सत्तर, भीमसेन ने सात और युधिष्ठिर ने बारह बाण भीष्म पितामह को मारे। महाबली द्रोणाचार्य ने सात्यकि और भीमसेन को यमदण्डतुल्य पाँच-पाँच उग्र बाण मारे ॥४।६॥ जैसे कोई गजराज को अङ्कुश मारे वैसे ही सात्यकि और भीमसेन ने भी ब्राह्मणश्रेष्ठ द्रोणाचार्य को तीन-तीन तीक्ष्ण बाण मारे। सौवीर, कितव, प्राच्य, प्रतीच्य, उदीच्य, मालव, अभीषाह, शूरसेन, शिबि और वसाति देश के योद्धा लोग तीक्ष्ण बाणों से पीड़ित होकर भी संग्राम में भीष्म को छोड़कर नहीं भागे। अन्य अनेक देशों के योद्धा और राजा भी विविध शस्त्र लेकर पाण्डवों से युद्ध करने लगे। ॥६।९॥ पाण्डवगण भी अपनी सेना के साथ चारों ओर से पितामह भीष्म को घेर-कर उन पर प्रहार करने लगे। उस समय रथों से

शरस्फुलिङ्गो भीष्माग्निर्ददाह क्षत्रियर्षभान् ।
सुवर्णपुङ्खैरिषुभिर्गार्ध्रपक्षैः सुतेजनैः ॥ १२ ॥
कर्णिनालीकनाराचैश्छादयामास तद्बलम् ।
अपातयद् ध्वजांश्चैव रथिनश्च शितैः शरैः ॥ १३ ॥
मुण्डतालवनानीव चकार स रथव्रजान् ।
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे ॥ १४ ॥
अकरोत्स महाबाहुः सर्वशस्त्रभृतां वरः ।
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाऽशनेः ॥ १५ ॥
निशम्य सर्वभूतानि समकम्पन्त भारत ।
अमोघा ह्यपतन्बाणाः पितुस्ते भरतर्षभ ॥ १६ ॥
नाऽसज्जन्त तनुत्रेषु भीष्मचापच्युताः शराः ।
हतवीरान्रथान्राजन्संयुक्ताञ्जवनैर्हयैः ॥ १७ ॥
अपश्याम महाराज ह्रियमाणान्रणाजिरे ।
चेदिकाशिकरूषाणां सहस्राणि चतुर्दश ॥ १८ ॥
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ।
अपरावर्तिनः सर्वे सुवर्णविकृतध्वजाः ॥ १९ ॥
संग्रामे भीष्ममासाद्य व्यादितास्यमिवाऽन्तकम् ।
निमग्नाः परलोकाय सवाजिरथकुञ्जराः ॥ २० ॥
भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्च भारत ।
अपश्याम महाराज शतशोऽथ सहस्रशः ॥ २१ ॥

घिरे हुए भीष्म वन में दावानल के समान प्रज्वलित होकर शत्रुसेना को बाणों से नष्ट करने लगे। रथ-समूह भीष्मरूप अग्नि के कुण्ड थे। धनुष उसकी ज्वाला था। तलवार, गदा, शक्ति आदि शस्त्र ईंधन थे। बाण चिनगारियाँ थे ॥१०।१२॥ वे गृध्रपक्ष-शोभित सुवर्णपुङ्ख तीक्ष्ण इषु, कर्णी, नालीक, नाराच आदि बाणों से पाण्डवसेना को व्याप्त करके ध्वजाओं को काट-काटकर गिराने लगे। ध्वजाएँ कट जाने से सब रथ मुण्डित तालवृक्षों के समान देख पड़ने लगे। इसके पश्चात् वे हाथियों, रथों और घोड़ों पर सवार योद्धाओं को मार-मारकर पृथ्वी पर गिराने लगे ॥१२।१५॥ उनके धनुष की डोरी का विकट शब्द सुनकर सब प्राणी भय से काँपने लगे। हे महाराज! महावीर भीष्म के धनुष से निकले हुए अमोघ बाण शत्रुओं के कवच तोड़कर शरीर के भीतर प्रवेश होने लगे। इसके पश्चात् मैंने देखा कि वेग से चलनेवाले घोड़े—रथी और सारथी से शून्य—रथों को खींचते हुए युद्धभूमि में इधर-उधर फिर रहे हैं ॥१५।१८॥ उच्चकुल में उत्पन्न, युद्ध में कभी पीठ न दिखानेवाले, सुवर्ण-निर्मित ध्वजाओं से शोभित रथों पर बैठे हुए, देहत्याग का निश्चय किये हुए चौदह हजार चेदि, काशी और करूष देश के योद्धा महारथी ज्योंही मुख फैलाये हुए काल के समान भीष्म के सामने आये त्योंही हाथी, घोड़े आदि अपने वाहनों के साथ मर-मरकर

सवरूथै रथैर्भग्नै रथिभिश्च निपातितैः ।
शरैः सुकवचैश्छिन्नैः पट्टिशैश्च विशाम्पते ॥ २२ ॥
गदाभिर्भिन्दिपालैश्च निशितैश्च शिलीमुखैः ।
अनुकर्षैरुपासङ्गैश्चक्रैर्भग्नैश्च मारिष ॥ २३ ॥
बाहुभिः कार्मुकैः खड्गैः शिरोभिश्च सकुण्डलैः ।
तलत्रैरंगुलित्रैश्च ध्वजैश्च विनिपातितैः ॥ २४ ॥
चापैश्च बहुधा च्छिन्नैः समास्तीर्यत मेदिनी ।
हतारोहा गजा राजन्हयाश्च हयसादिनः ॥ २५ ॥
न्यपतन्त गतप्राणाः शतशोऽथ सहस्रशः ।
यतमानाश्च ते वीरा द्रवमाणान्महारथान् ॥ २६ ॥
नाऽशक्नुवन्वारयितुं भीष्मबाणप्रपीडितान् ।
महेन्द्रसमवीर्येण वध्यमाना महाचमूः ॥ २७ ॥
अभज्यत महाराज न च द्वौ सह धावतः ।
आविद्धरथनागाश्वं पतितध्वजसंकुलम् ॥ २८ ॥
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् ।
जघानाऽत्र पिता पुत्रं पुत्रश्च पितरं तथा ॥ २९ ॥
प्रियं सखायं चाऽऽक्रन्दे सखा दैवबलात्कृतः ।
विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः ॥ ३० ॥
प्रकीर्य केशान्धावन्तः प्रत्यदृश्यन्त सर्वशः ।
तद्गोकुलऽमिवोद्भ्रान्तमुद्भ्रान्तरथकूबरम् ॥ ३१ ॥

---

यमपुर को सिधारने लगे। सैकड़ों-सहस्रों योद्धाओं में किसी के रथ का युगकाष्ठ और अन्य अंश और किसी के रथ के पहिये बाणों से छिन्न-भिन्न होते देख पड़ते थे ॥१८।२१॥ टूटे हुए रथ, वरूथ, कटे हुए बाण, कवच, पट्टिश, गदा, भिन्दिपाल, तरकस, चक्र, खड्ग, कटे हुए कुण्डल-शोभित सिर, तलत्राण, अंगुलित्राण और कटकर गिरी हुई ध्वजा-पताका आदि से यह युद्धभूमि परिपूर्ण थी। सैकड़ों-सहस्रों हाथी, घोड़े और उनके सवार मारे गये। सब महारथी भीष्म के बाणों से अत्यन्त व्यथित होकर युद्धभूमि से भागने लगे। पाण्डवगण किसी प्रकार उन्हें नहीं रोक सके। हे भारत! उस समय पाण्डवों की सेना महेन्द्रसदृश महावीर भीष्म के बाणों की चोट से ऐसी अस्तव्यस्त हो गई कि दो मनुष्य भी एक साथ नहीं भाग सकते थे॥२५।२८॥ सब अपनी-अपनी जान लेकर भाग रहे थे, दूसरे की ओर देखते भी नहीं थे। रथ, हाथी, घोड़े, पैदल और ध्वजाओं से पूर्ण पाण्डवसेना अचेत सी होकर हाहाकार और आर्तनाद करने लगी। दैवदुर्विपाक में पड़कर पिता पुत्र को, पुत्र पिता को और प्रिय बन्धु प्रिय बन्धु को मारने लगा। युधिष्ठिर की सब सेना कवच फेंककर, बाल खोलकर, 'त्राहि त्राहि" करती हुई चारों ओर भागी। रथों के अङ्ग-भङ्ग हो गये। अनेक रथ उलट पुलट गये। सिंह के आक्रमण से व्याकुल और डरी हुई

ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ।
प्रभज्यमानं सैन्यं तु दृष्ट्वा यादवनन्दनः ॥ ३२ ॥
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ।
अयं स कालः सम्प्राप्तः पार्थ यः कांक्षितस्तव ॥ ३३ ॥
प्रहराऽस्मिन्नरव्याघ्र न चेन्मोहाद्विमुह्यसे ।
यत्पुरा कथितं वीर राज्ञां तेषां समागमे ॥ ३४ ॥
विराटनगरे तात सञ्जयस्य समीपतः ।
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्य सैनिकान् ॥ ३५ ॥
सानुबन्धान्हनिष्यामि ये मां योत्स्यन्ति सङ्गरे ।
इति तत्कुरु कौन्तेय सत्यं वाक्यमरिन्दम ॥ ३६ ॥
क्षत्रधर्ममनुस्मृत्य युध्यस्व विगतज्वरः ।
इत्युक्तो वासुदेवेन तिर्यग्दृष्टिरधोमुखः ॥ ३७ ॥
अकाम इव बीभत्सुरिदं वचनमब्रवीत् ।
अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरम् ॥ ३८ ॥
दुःखानि वनवासे वा किं नु मे सुकृतं भवेत् ।
चोदयाऽश्वान्यतो भीष्मः करिष्ये वचनं तव ॥ ३९ ॥
पातयिष्यामि दुर्धर्षं भीष्मं कुरुपितामहम् ।
स चाऽश्वान्रजतप्रख्यांश्चोदयामास माधवः ॥ ४० ॥
यतो भीष्मस्ततो राजन्दुष्प्रेक्ष्यो रश्मिवानिव ।
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ॥ ४१ ॥

---

गउओं के झुण्ड की सी दशा पाण्डवसेना की देख पड़ा। सब लोग आर्तनाद कर रहे थे ॥२८।३२॥ युधिष्ठिर की सेना को यों भागते देखकर वासुदेव ने रथ रोककर अर्जुन से कहा—हे धनञ्जय! यह तुम्हारा अभीष्ट समय उपस्थित है। इस समय तुम मोह को छोड़कर युद्ध करो। हे पुरुषसिंह! वीर भीष्म पर प्रहार करो। तुमने एक समय विराटनगर में सञ्जय के आगे कहा था कि भीष्म, द्रोण आदि कौरवपक्ष के योद्धा मुझसे युद्ध करने आवेंगे तो मैं उनको मारूँगा; उनके साथी भी जीते नहीं बचेंगे। इस समय अपनी उन बातों को पूर्ण करो। सन्ताप और मोह छोड़कर क्षत्रियधर्म के अनुसार युद्ध करो॥३२।३७॥ सञ्जय कहते हैं—हे राजेन्द्र! श्रीकृष्ण के ये वचन सुनकर अर्जुन ने तिरछी दृष्टि से देखकर, मुख लटकाकर, अनिच्छापूर्वक कहा—हे हृषीकेश! अवध्य गुरुजन को मारकर नरक का कारणस्वरूप राज्य प्राप्त करने की अपेक्षा मुझे वनवास के दुःख भोगना ही श्रेष्ठ जान पड़ता है। तुम्हारी बात न मानना भी मेरी शक्ति के बाहर है। रथ चलाओ। मैं तुम्हारी आज्ञा से दुर्धर्ष कुरुपितामह वृद्ध भीष्म को आज युद्ध में मार गिराऊँगा ॥३७।४०॥ अब भगवान् वासुदेव सूर्य के समान तेजस्वी दुर्निरीक्ष्य भीष्म की ओर श्वेत रङ्ग के अर्जुन के घोड़ों को हाँककर ले चले। युधिष्ठिर की सब सेना अर्जुन को भीष्म से युद्ध करने के लिए उद्यत

दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे ।
ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः ॥ ४२ ॥
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् ।
क्षणेन स रथस्तस्य सहयः सहसारथिः ॥ ४३ ॥
शरवर्षेण महता न प्राज्ञायत भारत ।
वासुदेवस्त्वसम्भ्रान्तो धैर्यमास्थाय सत्वरः ॥ ४४ ॥
चोदयामास तानश्वान्विनुन्नान्भीष्मसायकैः ।
ततः पार्थो धनुर्गृह्य दिव्यं जलदनिःस्वनम् ॥ ४५ ॥
पातयामास भीष्मस्य धनुश्छित्वा शितैः शरैः ।
स छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ॥ ४६ ॥
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ।
चकर्ष च ततो दोर्भ्यां धनुर्जलदनिःस्वनम् ॥ ४७ ॥
अथाऽस्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ।
तस्य तत्पूजयामास लाघवं शान्तनोः सुतः ॥ ४८ ॥
गाङ्गेयस्त्वब्रवीत्पार्थं धन्विश्रेष्ठमरिन्दम ।
साधु साधु महाबाहो साधु कुन्तीसुतेति च ॥ ४९ ॥
समाभाष्यैवमपरं प्रगृह्य रुचिरं धनुः ।
मुमोच समरे भीष्मः शरान्पार्थरथं प्रति ॥ ५० ॥
आदर्शयद्वासुदेवो हययाने परं बलम् ।
मोघान्कुर्वञ्शरांस्तस्य मण्डलानि निदर्शयन् ॥ ५१ ॥

देखकर आप से ही फिर लौट पड़ी ॥४०।४२॥ महावीर भीष्म बारम्बार सिंहनाद करके अर्जुन के रथ पर बाण बरसाने लगे। क्षण भर में ही भीष्म के बाणों से अर्जुन का रथ ऐसा छिप गया कि घोड़े, सारथी और रथ कुछ भी नहीं सूझ पड़ता था। निर्भय वासुदेव धैर्य के साथ उन भीष्म के बाणों से व्याकुल घोड़ों को चलाने लगे ॥४२।४५॥ तब महावीर अर्जुन ने मेघगर्जन का सा गम्भीर शब्द करनेवाले दिव्य गाण्डीव धनुष को लेकर तीक्ष्ण बाणों से भीष्म का धनुष काट डाला। महावीर भीष्म ने उसी क्षण और एक बड़ा धनुष उठाकर उस पर प्रत्यञ्चा चढ़ाई। तुरन्त ही फुर्तीले अर्जुन ने स्फूर्ति के साथ वह धनुष भी काट डाला। भीष्म ने प्रसन्न होकर इस स्फूर्ति के लिए "शाबाश अर्जुन, शाबाश !" कहकर अर्जुन की प्रशंसा की ॥४५।४२॥ भीष्म ने फिर दूसरा धनुष हाथ में लिया। वे फिर अर्जुन के रथ पर बाण छोड़ने लगे। वासुदेव भी अनेक प्रकार की गतियों से घोड़े चलाकर भीष्म के बाणों को व्यर्थ करते हुए सारथी के काम में निपुणता की पराकाष्ठा दिखाने लगे। तात्पर्य यह है कि श्रीकृष्ण इस चतुराई से रथ को घुमाते थे कि भीष्म का लक्ष्य और बाण निष्फल जाते थे। वासुदेव और अर्जुन के शरीर फिर भी भीष्म के बाणों से घायल हो रहे थे और ये दोनों पुरुषसिंह परस्पर सींगों की मार से घायल श्रेष्ठ साँड़ की तरह

शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव संरब्धौ विषाणोल्लिखिताङ्कितौ ॥ ५२ ॥
वासुदेवस्तु सम्प्रेक्ष्य पार्थस्य मृदुयुद्धताम् ।
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ॥ ५३ ॥
प्रतपन्तमिवाऽऽदित्यं मध्यमासाद्य सेनयोः ।
वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ॥ ५४ ॥
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ।
नाऽमृष्यत महाबाहुर्माधवः परवीरहा ॥ ५५ ॥
उत्सृज्य रजतप्रख्यान्हयान्पार्थस्य मारिष ।
वासुदेवस्ततो योगी प्रचस्कन्द महारथात् ॥ ५६ ॥
अभिदुद्राव भीष्मं स भुजप्रहरणो बली ।
प्रतोदपाणिस्तेजस्वी सिंहवद्विनदन्मुहुः ॥ ५७ ॥
दारयन्निव पद्भ्यां स जगतीं जगदीश्वरः ।
क्रोधताम्रेक्षणः कृष्णो जिघांसुरमितद्युतिः ॥ ५८ ॥
ग्रसन्त इव चेतांसि तावकानां महाहवे ।
दृष्ट्वा माधवमाक्रन्दे भीष्मायोद्यतमन्तिके ॥ ५९ ॥
हतो भीष्मो हतो भीष्मस्तत्र तत्र वचो महत् ।
अश्रूयत महाराज वासुदेवभयात्तदा ॥ ६० ॥
पीतकौशेयसंवीतो मणिश्यामो जनार्दनः ।
शुशुभे विद्रवन्भीष्मं विद्युन्माली यथाऽम्बुदः ॥ ६१ ॥
स सिंह इव मातङ्गं यूथर्षभ इवर्षभम् ।
अभिदुद्राव वेगेन विनदन्यादवर्षभः ॥ ६२ ॥

तमापतन्तं सम्प्रेक्ष्य पुण्डरीकाक्षमाहवे ।
असम्भ्रमं रणे भीष्मो विचकर्ष महद्धनुः ॥ ६३ ॥
उवाच चैव गोविन्दमसम्भ्रान्तेन चेतसा ।
एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते ॥ ६४ ॥
मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे ।
त्वया हि देव संग्रामे हतस्याऽपि ममाऽनघ ॥ ६५ ॥
श्रेय एव परं कृष्ण लोके भवति सर्वतः ।
सम्भावितोऽस्मि गोविन्द त्रैलोक्येनाऽद्य संयुगे ॥ ६६ ॥
प्रहरस्व यथेष्टं वै दासोऽस्मि तव चाऽनघ ।
अन्वगेव ततः पार्थः समभिद्रुत्य केशवम् ॥ ६७ ॥
निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै ।
निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ॥ ६८ ॥
जगामैवैनमादाय वेगेन पुरुषोत्तमः ।
पार्थस्तु विष्टभ्य बलाच्चरणौ परवीरहा ॥ ६९ ॥
निजग्राह हृषीकेशं कथञ्चिद्दशमे पदे ।
तत एवमुवाचाऽऽर्तः क्रोधपर्याकुलेक्षणम् ॥ ७० ॥
निःश्वसन्तं यथा नागमर्जुनः प्रणयात्सखा ।
निवर्तस्व महाबाहो नाऽनृतं कर्तुमर्हसि ॥ ७१ ॥
यत्त्वया कथितं पूर्वं न योत्स्यामीति केशव ।
मिथ्यावादीति लोकास्त्वां कथयिष्यन्ति माधव ॥ ७२ ॥

की तरह गरजते हुए श्रीकृष्ण जब भीष्म के सम्मुख चले तब वे बिजली से शोभित मेघ के समान जान पड़े। क्योंकि उनका शरीर मरकतमणि के समान साँवला था, और उसपर रेशमी पीताम्बर बहार दिखा रहा था ॥५९।६२॥ पराक्रमी भीष्म महात्मा वासुदेव को अपनी ओर इस प्रकार झपटते देखकर तनिक भी विचलित नहीं हुए। उन्होंने वैसे ही दिव्य धनुष खींचकर कहा—हे वासुदेव ! आपको प्रणाम है। आइए, आज इस महायुद्ध में मुझे मारकर वीरगति दीजिए। हे देव ! आप यदि मुझे युद्ध में मारेंगे तो उससे भी मैं अपने लिए श्रेय समझूँगा। हे गोविन्द ! आपके इस व्यवहार से आज त्रिभुवन के लोग मुझे और भी सम्मान देंगे। हे निष्पाप ! मैं आपका दास हूँ; मुझ पर जी भरकर प्रहार कीजिए ॥६३।६७॥ इधर अर्जुन भी श्रीकृष्ण के पीछे रथ से कूद पड़े। उन्होंने दौड़कर पीछे से श्रीकृष्ण के दोनों हाथ पकड़ लिये। अर्जुन के यों रोकने पर भी कुपित श्रीकृष्ण नहीं रुके, और उसी प्रकार उनको भी खींचते हुए वेग से आगे बढ़े। दस पग आगे जाने पर, किसी प्रकार पाँव जमाकर, अर्जुन उन्हें रोक सके ॥६७।७०॥ क्रोध से नेत्र लाल करके सर्प की तरह बारम्बार श्वास लेते हुए श्रीकृष्ण से सखा अर्जुन ने स्नेहपूर्ण नम्र स्वर में कहा—हे महाबाहो ! लौट चलिए। हे केशव ! आप पहले युद्ध न करने की प्रतिज्ञा कर

ममैष भारः सर्वो हि हनिष्यामि पितामहम् ।
शपे केशव शस्त्रेण सत्येन सुकृतेन च ॥ ७३ ॥
अन्तं यथा गमिष्यामि शत्रूणां शत्रुसूदन ।
अद्यैव पश्य दुर्धर्षं पात्यमानं महारथम् ॥ ७४ ॥
तारापतिमिवाऽऽपूर्णमन्तकाले यदृच्छया ।
माधवस्तु वचः श्रुत्वा फाल्गुनस्य महात्मनः ॥ ७५ ॥
न किञ्चिदुक्त्वा सक्रोध आरुरोह रथं पुनः ।
तौ रथस्थौ नरव्याघ्रौ भीष्मः शान्तनवः पुनः ॥ ७६ ॥
ववर्ष शरवर्षेण मेघो वृष्ट्या यथाऽचलौ ।
प्राणानादत्त योधानां पिता देवव्रतस्तव ॥ ७७ ॥
गभस्तिभिरिवाऽऽदित्यस्तेजांसि शिशिरात्यये ।
यथा कुरूणां सैन्यानि बभंजुर्युधि पाण्डवाः ॥ ७८ ॥
तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता ।
हतविद्रुतसैन्यास्तु निरुत्साहा विचेतसः ॥ ७९ ॥
निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे ।
मध्यङ्गतमिवाऽऽदित्यं प्रतपन्तं स्वतेजसा ॥ ८० ॥
ते वध्यमाना भीष्मेण शतशोऽथ सहस्रशः ।
कुर्वाणं समरे कर्माण्यतिमानुषविक्रमम् ॥ ८१ ॥
वीक्षाञ्चक्रुर्महाराज पाण्डवा भयपीडिताः ।
तथा पाण्डवसैन्यानि द्राव्यमाणानि भारत ॥ ८२ ॥

चुके हैं, उसे असत्य न कीजिए। आप शस्त्र लेकर पितामह से युद्ध करेंगे तो लोग आपको मिथ्यावादी कहेंगे। यह सब भार तो मेरे ऊपर है। मैं पितामह को मारूँगा। मैं शस्त्र, सत्य और सुकृत की सौगन्ध खाकर कहता हूँ कि संग्राम में सब शत्रुओं को उनके भाई-बन्धुओं-सहित अवश्य मारूँगा ॥७३।७४॥ आप अभी देखेंगे कि मैं पूर्णचन्द्र तुल्य पितामह को रथ से गिरा दूँगा। महानुभाव श्रीकृष्ण अर्जुन के ये वचन सुन-कर वैसे ही क्रोधपूर्ण भाव से फिर रथ पर चले गये। अर्जुन और श्रीकृष्ण के रथ पर जाते ही महारथी भीष्म फिर मेघ जैसे पर्वत पर जल बरसावे वैसे ही उन पर बाण बरसाने लगे। सूर्य जैसे वसन्त ऋतु में अपनी किरणों से सब पदार्थों के तेज को ग्रहण करते हैं वैसे ही पितामह भीष्म बाणों से सबके प्राण हरने लगे ॥७५।७८॥ पाण्डवगण जैसे कौरवों की सेना को भगा रहे थे वैसे ही भीष्म पाण्डवों की सेना को भगाने लगे। इस प्रकार भागते हुए, निरुत्साह, व्याकुल सैकड़ों-सहस्रों पाण्डवपक्ष के वीर मर मरकर गिरने लगे। वे मध्याह्न काल के सूर्य के समान तेज से प्रज्वलित, अलौकिक पराक्रमी, दुष्कर कर्म करनेवाले भीष्म की ओर नेत्र उठाकर देख भी नहीं सकते थे। उनकी ओर देखते ही पाण्डवगण भयभीत होने लगे ॥७९।८१॥ हे भरत! पाण्डवपक्ष के सब सैनिक भीष्म के प्रहार से भागकर, कीचड़ में फँसी गउओं

त्रातारं नाऽध्यगच्छन्त गावः पङ्कगता इव ।
पिपीलिका इव क्षुण्णा दुर्बला बलिना रणे ॥ ८३ ॥
महारथं भारतदुष्प्रकम्पं शरौघिणं प्रतपन्तं नरेन्द्रान् ।
भीष्मं न शेकुः प्रतिवीक्षितुं ते शरार्चिषं सूर्यमिवाऽऽतपन्तम् ॥ ८४ ॥
विमृद्नतस्तस्य तु पाण्डुसेनामस्तं जगामाऽथ सहस्ररश्मिः ।
ततो बलानां श्रमकर्शितानां मनोऽवहारं प्रति सम्बभूव ॥ ८५ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि नवमदिवसयुद्धसमाप्तौ षडधिकशततमोऽध्यायः ॥ १०६ ॥

के झुण्ड के समान, उत्पीड़ित चींटियों के समान और बलवान् व्यक्ति से युद्ध करनेवाले दुर्बल पुरुषों के समान, शरणहीन होकर भीष्म की ओर फिरकर देख भी नहीं सकते थे। महापराक्रमी भीष्म बाणरूप किरणों के द्वारा, सूर्य के समान, सब राजाओं को सन्ताप पहुँचाने लगे। हे राजेन्द्र ! इस प्रकार पाण्डवों की महासेना भीष्म के बाणों से नष्ट होने लगी। उस समय भगवान् सूर्यदेव अस्ताचल पर पहुँच गये। सैनिक लोग बहुत विश्रान्त हो गये थे। वे युद्ध के विश्राम के लिए व्याकुल हो उठे ॥८२।८५॥

भीष्मपर्व का एक सौ छः अध्याय समाप्त हुआ ॥ १०६ ॥

अथ सप्ताधिकशततमोऽध्याय ॥ १०७ ॥

सञ्जय उवाच—युध्यतामेव तेषां तु भास्करेऽस्तमुपागते ।
सन्ध्या समभवद्घोरा नाऽपश्याम ततो रणम् ॥ १ ॥
ततो युधिष्ठिरो राजा सन्ध्यां सन्दृश्य भारत ।
वध्यमानं च भीष्मेण त्यक्तास्त्रं भयविह्वलम् ॥ २ ॥
स्वसैन्यं च परावृत्तं पलायनपरायणम् ।
भीष्मं च युधि संरब्धं पीडयन्तं महारथम् ॥ ३ ॥
सोमकांश्च जितान्दृष्ट्वा निरुत्साहान्महारथान् ।
चिन्तयित्वा ततो राजा अवहारमरोचयत् ॥ ४ ॥
ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः ।
तथैव तव सैन्यानामपहारो ह्यभूत्तदा ॥ ५ ॥
ततोऽवहारं सैन्यानां कृत्वा तत्र महारथाः ।
न्यविशन्त कुरुश्रेष्ठ संग्रामे क्षतविक्षताः ॥ ६ ॥

एक सौ सात अध्याय ॥ १०७ ॥

सञ्जय ने कहा—हे भारत ! दिन व्यतीत हो गया था। युद्धभूमि में कुछ भी नहीं दिखाई पड़ता था। सन्ध्या के समय राजा युधिष्ठिर ने अपने पक्ष की सेना को महारथी भीष्म के प्रहार से पीड़ित हो, अस्त्र-शस्त्र फेंककर, भागने और सोमकगण को पराजित कर निरुत्साह होते देखकर अत्यन्त चिन्तित हो सेनापति को युद्ध रोकने की आज्ञा दी ॥१।४॥ हे राजेन्द्र ! इस प्रकार पाण्डवपक्ष की सेना को युद्ध से

भीष्मस्य समरे कर्म चिन्तयानास्तु पाण्डवाः ।
नाऽलभन्त तदा शान्तिं भीष्मबाणप्रपीडिताः ॥ ७ ॥
भीष्मोऽपि समरे जित्वा पाण्डवान्सहसृञ्जयान् ।
पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत ॥ ८ ॥
न्यविशत्कुरुभिः सार्धं हृष्टरूपैः समन्ततः ।
ततो रात्रिः समभवत्सर्वभूतप्रमोहिनी ॥ ९ ॥
तस्मिन्रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह ।
सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ १० ॥
आत्मनिःश्रेयसं सर्वे प्राप्तकालं महाबलाः ।
मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ॥ ११ ॥
ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप ।
वासुदेवं समुद्वीक्ष्य वचनं चेदमाददे ॥ १२ ॥
कृष्ण पश्य महात्मानं भीष्मं भीमपराक्रमम् ।
गजं नलवनानीव विमृद्नन्तं बलं मम ॥ १३ ॥
न चैवैनं महात्मानमुत्सहामो निरीक्षितुम् ।
लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकम् ॥ १४ ॥
यथा घोरो महानागस्तक्षको वै विषोल्बणः ।
तथा भीष्मो रणे क्रुद्धस्तीक्ष्णशस्त्रः प्रतापवान् ॥ १५ ॥
गृहीतचापः समरे प्रमुञ्चन्निशिताञ्छरान् ।
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् ॥ १६ ॥

लौटते देखकर आपके पक्ष की सेना ने भी युद्ध बन्द कर दिया। शस्त्र-प्रहार से छिन्न-भिन्न महारथी योद्धा लोग अपने-अपने शिविर को लौट चले। भीष्म के बाणों से पीड़ित पाण्डवगण उनके अद्भुत युद्ध-कौशल का स्मरण करके किसी प्रकार शान्ति नहीं प्राप्त कर सकते थे। वे बहुत ही व्याकुल हो उठे ॥५।७॥ उधर आपके पुत्र भीष्म की पूजा और प्रशंसा करते हुए उन्हें अपने मध्य में करके शिविर को गये। इसके पश्चात् सब प्राणियों को मोहित करनेवाली भयङ्कर रात्रि उपस्थित हुई। दुर्धर्ष पाण्डव और सृञ्जय रात्रि के समय श्रीकृष्ण आदि यादवों के साथ डेरे में बैठकर सम्मति करने लगे ॥८।१०॥ राजा युधिष्ठिर ने देर तक सोचकर श्रीकृष्ण की ओर देखकर कहा—हे वासुदेव! ये महाबली भीष्म मेरी सेना को वैसे ही नष्ट कर रहे हैं जैसे मत्त हाथी नरकुल के वन को रौंदता है। वे प्रज्वलित अग्नि की तरह मेरी सेना को भस्म कर रहे हैं ॥११।१४॥ तीक्ष्ण अस्त्र-शस्त्र चलाने में चतुर महाप्रतापी पितामह क्रोधपूर्वक धनुष हाथ में लेकर, महानाग तक्षक के समान, अमोघ बाण बरसाते हैं। हम लोगों को उनकी ओर देखने तक का साहस भी नहीं होता। क्रुद्ध यमराज, वज्रपाणि इन्द्र, पाशपाणि वरुण और गदापाणि कुबेर को चाहे कोई जीत भी ले, किन्तु शस्त्रपाणि क्रुद्ध भीष्म को कोई युद्ध में नहीं पराजित कर सकता है

वरुणः पाशभृच्चाऽपि सगदो वा धनेश्वरः ।
न तु भीष्मः सुसंक्रुद्धः शक्यो जेतुं महाहवे ॥ १७ ॥
सोऽहमेवं गते कृष्ण निमग्नः शोकसागरे ।
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य संयुगे ॥ १८ ॥
वनं यास्यामि दुर्धर्ष श्रेयो वै तत्र मे गतम् ।
न युद्धं रोचते कृष्ण हन्ति भीष्मो हि नः सदा ॥ १९ ॥
यथा प्रज्वलितं वह्निं पतङ्गः समभिद्रवन् ।
एकतो मृत्युमभ्येति तथाऽहं भीष्ममीयिवान् ॥ २० ॥
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
भ्रातरश्चैव मे शूराः सायकैर्भृशपीडिताः ॥ २१ ॥
मत्कृते भ्रातृसौहार्दाद्राज्यभ्रष्टा वनङ्गताः ।
परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन ॥ २२ ॥
जीवितं बहु मन्येऽहं जीवितं ह्यद्य दुर्लभम् ।
जीवितस्याऽद्य शेषेण चरिष्ये धर्ममुत्तमम् ॥ २३ ॥
यदि तेऽहमनुग्राह्यो भ्रातृभिः सह केशव ।
स्वधर्मस्याऽविरोधेन हितं व्याहर केशव ॥ २४ ॥
एवं श्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम् ।
प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरम् ॥ २५ ॥
धर्मपुत्र विषादं त्वं मा कृथाः सत्यसङ्गर ।
यस्य ते भ्रातरः शूरा दुर्जयाः शत्रुसूदनाः ॥ २६ ॥

॥१५।१७॥ इसलिए हे वासुदेव ! तुम बताओ, अब मैं क्या करूँ ? मैं भीष्म से बहुत भयभीत हो रहा हूँ। वे नित्य मेरी सेना नष्ट करते जा रहे हैं। मैं फिर वन में जाकर रहना ही अपने लिए श्रेष्ठ समझता हूँ। अब युद्ध करने को जी नहीं चाहता। जैसे पतङ्ग मरने के लिए ही जलती हुई अग्नि की ज्योति के ऊपर आक्रमण करते हैं, वैसे ही भीष्म से हमारा युद्ध करना है ॥१८।२०॥ हे यदुकुल-तिलक! राज्य के लोभ से युद्ध ठानकर मैं इस समय विनाश के मुख पर स्थित हूँ। मेरे ये शूर भाई भी भीष्म के बाणों से अत्यन्त पीड़ित हो रहे हैं। मेरे ही कारण, भ्रातृस्नेह के वश होकर, ये लोग भी राज्य से भ्रष्ट हुए और वन में रहे। हे मधुसूदन ! मेरे ही कारण द्रौपदी ने अब तक इतने क्लेश सहे। मैं इस समय जीवन को ही श्रेष्ठ और दुर्लभ समझता हूँ; अब इस शेष जीवन की अवस्था में कल्याण के निमित्त धर्माचरण करूँगा। हे माधव ! यदि मैं और मेरे भाई तुम्हारे अनुग्रह के पात्र हों तो तुम जिससे हम लोगों के धर्म में विरोध न हो, ऐसा हित का कार्य वर्णन करो, मैं उसका ही अनुष्ठान करूँगा ॥२१।२४॥ युधिष्ठिर के ये वचन सुनकर श्रीकृष्ण को दया आ गई। वे उन्हें समझाते हुए बोले—हे सत्यवादी धर्मपुत्र ! आप व्याकुल न हों। आपके चारों भाई बल और पराक्रम में श्रेष्ठ हैं। ये शत्रुओं को नष्ट करनेवाले

अर्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ ।
माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिवेश्वरौ ॥ २७ ॥
मां वा नियुंक्ष्व सौहार्दाद्योत्स्ये भीष्मेण पाण्डव ।
त्वत्प्रयुक्तो महाराज किं न कुर्यां महाहवे ॥ २८ ॥
हनिष्यामि रणे भीष्ममाहूय पुरुषर्षभम् ।
पश्यतां धार्तराष्ट्राणां यदि नेच्छति फाल्गुनः ॥ २९ ॥
यदि भीष्मे हते वीरे जयं पश्यसि पाण्डव ।
हन्ताऽस्म्येकरथेनाऽद्य कुरुवृद्धं पितामहम् ॥ ३० ॥
पश्य मे विक्रमं राजन्महेन्द्रस्येव संयुगे ।
विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात् ॥ ३१ ॥
यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः ।
मदर्था भवदीया ये ये मदीयास्तवैव ते ॥ ३२ ॥
तव भ्राता मम सखा सम्बन्धी शिष्य एव च ।
मांसान्युत्कृत्य दास्यामि फाल्गुनार्थे महीपते ॥ ३३ ॥
एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत् ।
एष नः समयस्तात तारयेम परस्परम् ॥ ३४ ॥
स मां नियुंक्ष्व राजेन्द्र यथा योद्धा भवाम्यहम् ।
प्रतिज्ञातमुपप्लव्ये यत्तत्पार्थेन पूर्वतः ॥ ३५ ॥
घातयिष्यामि गाङ्गेयमिति लोकस्य सन्निधौ ।
परिरक्ष्यमिदं तावद्वचः पार्थस्य धीमतः ॥ ३६ ॥

और दुर्जय हैं। अर्जुन और भीमसेन अग्नि तथा वायु के समान तेजस्वी हैं। नकुल और सहदेव ऐसे बलवान् हैं कि इन्द्र के समान देवताओं पर भी प्रभुता कर सकते हैं ॥२५।२७॥ इन पर भी आपको विजय का विश्वास न हो तो मुझे अपना सुहृद् और हितचिन्तक समझकर भीष्म से युद्ध करने की आज्ञा दीजिए। हे महाराज ! आपके कहने से ऐसा कौन कार्य है जिसे मैं महायुद्ध में नहीं कर सकता ? यदि अर्जुन स्वयं भीष्म को मारना नहीं चाहते तो मैं, दुर्योधन आदि के सामने ही, नरश्रेष्ठ भीष्म को मारूँगा। हे पाण्डव ! महावीर भीष्म के मरने से ही यदि विजय पा सकोगे तो मैं अकेला ही कुरुवृद्ध भीष्म को मार डालूँगा। हे राजेन्द्र ! युद्ध में मेरा इन्द्र के समान पराक्रम देखिएगा। महास्त्र छोड़ते हुए भीष्म को मैं रथ से गिरा दूँगा ॥२८।३१॥ जो व्यक्ति पाण्डवों का शत्रु है, वह मेरा भी शत्रु है। मुझे आप किसी बात में पृथक् न समझिए। आपके पक्ष के लोग मेरे हैं और मेरे पक्ष के लोग आपके अधीन हैं। विशेषकर अर्जुन के साथ मेरा विशेष सम्बन्ध है। अर्जुन मेरे भाई, सखा, सम्बन्धी और शिष्य हैं। मैं उनके लिए अपने शरीर का मांस तक भी काटकर दे सकता हूँ। वीर अर्जुन भी मेरे लिए प्राण तक दे सकते हैं। हम दोनों मित्रों की परस्पर यह प्रतिज्ञा है कि एक दूसरे को सङ्कट से उबारेगा ॥३२।३४॥ इसलिए [illegible]

अनुज्ञातं तु पार्थेन मया कार्यं न संशयः ।
अथवा फाल्गुनस्यैष भारः परिमितो रणे ॥ ३७ ॥
स हनिष्यति संग्रामे भीष्मं परपुरञ्जयम् ।
अशक्यमपि कुर्याद्धि रणे पार्थः समुद्यतः ॥ ३८ ॥
त्रिदशान्वा समुद्युक्तान्सहितान्दैत्यदानवैः ।
निहन्यादर्जुनः संख्ये किमु भीष्मं नराधिप ॥ ३९ ॥
विपरीतो महावीर्यो गतसत्त्वोऽल्पजीवनः ।
भीष्मः शान्तनवो नूनं कर्तव्यं नाऽवबुध्यते ॥ ४० ॥

युधिष्ठिर उवाच—एवमेतन्महाबाहो यथा वदसि माधव ।
सर्वं ह्येतेन पर्याप्तास्तव वेगविधारणे ॥ ४१ ॥
नियतं समवाप्स्यामि सर्वमेतद्यथेप्सितम् ।
यस्य मे पुरुषव्याघ्र भवान्पक्षे व्यवस्थितः ॥ ४२ ॥
सेन्द्रानपि रणे देवाञ्जयेयं जयतां वर ।
त्वया नाथेन गोविन्द किमु भीष्मं महारथम् ॥ ४३ ॥
न तु त्वामनृतं कर्तुमुत्सहे स्वात्मगौरवात् ।
अयुध्यमानः साहाय्यं यथोक्तं कुरु माधव ॥ ४४ ॥
समयस्तु कृतः कश्चिन्मम भीष्मेण संयुगे ।
मन्त्रयिष्ये तवाऽर्थाय न तु योत्स्ये कथञ्चन ॥ ४५ ॥
दुर्योधनार्थं योत्स्यामि सत्यमेतदिति प्रभो ।
स हि राज्यस्य मे दाता मन्त्रस्यैव च माधव ॥ ४६ ॥

राज ! मुझे आप आज्ञा दें, मैं समर के लिए प्रस्तुत हो जाऊँ। अर्जुन ने उपप्लव्य नगर में, उलूक दूत के आगे, प्रतिज्ञा की थी कि "मैं भीष्म को मारूँगा"। मुझे अर्जुन की यह प्रतिज्ञा सर्वथा पूर्ण करनी है। अर्जुन की अनुमति पाकर मैं अवश्य उसे पूर्ण कर सकता हूँ। अथवा युद्ध में यह कार्य करना अर्जुन के लिये कठिन नहीं है, इसलिए वही संग्राम में शत्रुदमन भीष्म को मारेंगे। अर्जुन उद्यत होकर रण में और के लिए असाध्य कर्म भी सहज ही कर सकते हैं ॥३५।३८॥ वे युद्ध में दैत्य-दानवों-सहित देवताओं को भी मार सकते हैं। फिर भीष्म को मार डालना कौन बड़ी बात है? भीष्म महावीर होने पर भी इस समय कर्तव्यज्ञान से शून्य हो रहे हैं। वे इस समय क्षुद्र सैनिकों पर अपना पराक्रम दिखाते हैं। उनकी बुद्धि भ्रष्ट-सी हो गई है, इसी से जान पड़ता है कि उनके जीवन की अवधि थोड़ी ही रह गई है ॥३९।४०॥

युधिष्ठिर ने कहा—हे वासुदेव ! तुम जो कह रहे हो सो उचित है। सब कौरव मिलकर भी तुम्हारे वेग को नहीं सह सकते। तुम हमारे पक्ष में हो, इसलिए अवश्य ही हमारी इच्छाएँ पूर्ण होंगी। हे गोविन्द ! तुमको हमने सहायक पाया है इसलिए भीष्म पितामह क्या हैं, हम इन्द्र सहित देवताओं को भी हरा सकते हैं। किन्तु हे माधव ! तुम युद्ध न करने की प्रतिज्ञा कर चुके हो इसलिए, आत्मगौरव की रक्षा का विचार करके

तस्माद्देवव्रतं भूयो वधोपायार्थमात्मनः ।
भवता सहिताः सर्वे प्रयाम मधुसूदन ॥ ४७ ॥
तद्वयं सहिता गत्वा भीष्ममाशु नरोत्तमम् ।
न चिरात्सर्वे वार्ष्णेय मन्त्रं पृच्छाम कौरवम् ॥ ४८ ॥
स वक्ष्यति हितं वाक्यं सत्यमस्माञ्जनार्दन ।
यथा च वक्ष्यते कृष्ण तथा कर्ताऽस्मि संयुगे ॥ ४९ ॥
स नो जयस्य दाता स्यान्मन्त्रस्य च दृढव्रतः ।
बालाः पित्रा विहीनाश्च तेन संवर्धिता वयम् ॥ ५० ॥
तं चेत्पितामहं वृद्धं हन्तुमिच्छामि माधव ।
पितुः पितरमिष्टं च धिगस्तु क्षत्रजीविकाम् ॥ ५१ ॥
सञ्जय उवाच— ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम् ।
रोचते मे महाप्राज्ञ राजेन्द्र तव भाषितम् ॥ ५२ ॥
देवव्रतः कृती भीष्मः प्रेक्षितेनाऽपि निर्दहेत् ।
गम्यतां स वधोपायं प्रष्टुं सागरगासुतः ॥ ५३ ॥
वक्तुमर्हति सत्यं स त्वया पृष्टो विशेषतः ।
ते वय तत्र गच्छामः प्रष्टुं कुरुपितामहम् ॥ ५४ ॥
गत्वा शान्तनवं वृद्धं मन्त्रं पृच्छाम भारत ।
स वो दास्यति मन्त्रं यं तेन योत्स्यामहे परान् ॥ ५५ ॥
एवमामन्त्र्य ते वीराः पाण्डवाः पाण्डुपूर्वजम् ।
जग्मुस्ते सहिताः सर्वे वासुदेवश्च वीर्यवान् ॥ ५६ ॥

मैं तुम्हें युद्ध में लिप्त करना और मिथ्यावादी बनाना उचित नहीं समझता। तुम युद्ध न करके यों ही मुझको उचित सहायता दो ॥४१।४४॥ मुझसे युद्ध के पहले भीष्म प्रतिज्ञा कर चुके हैं कि वे युद्ध तो दुर्योधन की ओर से करेंगे, परन्तु मुझे विजय की सम्मति देंगे। इसलिए हे माधव! वे अवश्य ही विजय की अच्छी सम्मति मुझे देंगे और उनकी कृपा से हमें राज्य प्राप्त होगा। हे वासुदेव! इस समय हम सब मिलकर उनके पास चलें। आओ, उन्हीं से चलकर उनके वध का उपाय पूछें। वे अवश्य हमको हमारे हित की बात बतावेंगे। जो तुमको यह सम्मति रुचे तो हम लोग उनके पास चलकर सम्मति लें। वे जैसा बतावेंगे वैसा ही हम लोग करेंगे ॥४५।४९॥ हे मधुसूदन! बाल्यावस्था में जब हमारे पिता का स्वर्गवास हो गया था तब उन्होंने हमारा लालन-पालन किया था। वे देवव्रत भीष्म इस समय अवश्य हमें अच्छी सम्मति देंगे। किन्तु हमारे इस क्षत्रिय-धर्म को धिक्कार है कि हम लोग उन्हीं वृद्ध पितामह, पिता के प्रिय पिता, को मारना चाहते हैं ॥५०।५१॥ सञ्जय कहते हैं कि हे महाराज! तब श्रीकृष्ण ने युधिष्ठिर से कहा—हे धर्मपुत्र! आपने जो कुछ कहा वह मुझे भी रुचिकर है। देवव्रत भीष्म समर में शत्रुओं को देखकर ही नष्ट कर सकते हैं। इस कारण उनके वध का उपाय जानने के लिए उन्हीं के पास जाना चाहिए। आप विशेष रूप से पूछेंगे

विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति ।
प्रविश्य च तदा भीष्मं शिरोभिः प्रणिपेदिरे ॥ ५७ ॥
पूजयन्तो महाराज पाण्डवा भरतर्षभम् ।
प्रणम्य शिरसा चैनं भीष्मं शरणमभ्ययुः ॥ ५८ ॥
तानुवाच महाबाहुर्भीष्मः कुरुपितामहः ।
स्वागतं तव वार्ष्णेय स्वागतं ते धनञ्जय ॥ ५९ ॥
स्वागतं धर्मपुत्राय भीमाय यमयोस्तथा ।
किं वा कार्यं करोम्यद्य युष्माकं प्रीतिवर्धनम् ॥ ६० ॥
सर्वात्मनाऽपि कर्तास्मि यदपि स्यात्सुदुष्करम् ।
तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनः पुनः ॥ ६१ ॥
उवाच राजा दीनात्मा प्रीतियुक्तमिदं वचः ।
कथं जयेम सर्वज्ञ कथं राज्यं लभेमहि ॥ ६२ ॥
प्रजानां संशयो न स्यात्कथं तन्मे वद प्रभो ।
भवान्हि नो वधोपायं ब्रवीतु स्वयमात्मनः ॥ ६३ ॥
भवन्तं समरे वीर विषहेम कथं वयम् ।
न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह ॥ ६४ ॥
मण्डलेनैव धनुषा दृश्यसे संयुगे सदा ।
आददानं सन्दधानं विकर्षन्तं धनुर्न च ॥ ६५ ॥
पश्यामस्त्वां महाबाहो रथे सूर्यमिवाऽपरम् ।
रथाश्वनरनागानां हन्तारं परवीरहन् ॥ ६६ ॥

---

तो वे अपने वध का उपाय बता देंगे। इसलिए आइए, हम सब कुरुपितामह से पूछने चलें। हम लोग उनकी बताई हुई सम्मति के अनुसार शत्रुओं से युद्ध करेंगे और विजय प्राप्त करेंगे ॥५२।५५॥ हे राजेन्द्र! महावीर पाण्डवगण और श्रीकृष्ण यह सम्मति करके, धनुष आदि शस्त्र और कवच त्यागकर, सब मिलकर भीष्म के शिविर में पहुँचे। सबने सिर झुकाकर प्रणाम और पूजा की। सब उनके शरणागत हुए ॥५६।५८॥ तब कुरुपितामह भीष्म ने प्रत्येक से स्वागत और कुशल पूछकर कहा—हे वीरो! बताओ, तुम्हारी प्रीति के लिए मैं क्या करूँ? वह कार्य दुष्कर होने पर भी मैं उसे सब प्रकार यत्नपूर्वक करने को प्रस्तुत हूँ ॥५९। ६१॥ पितामह ने जब प्रसन्नतापूर्वक बारम्बार इस प्रकार पूछा तब दीन भाव से, स्नेहपूर्ण स्वर से, युधिष्ठिर ने कहा—हे धर्मज्ञ पितामह! हम लोग जय और राज्य किस प्रकार पावेंगे? किस प्रकार हम अपने अधीन वीर क्षत्रियों को इस नाश से बचा सकेंगे? आप कृपाकर अपनी मृत्यु का उपाय हमको बता दीजिए। हे वीर! समर में हम किस प्रकार आपके वेग को सह सकते हैं? युद्ध में आप पर प्रहार करने का, आपको मारने का, साधारण अवसर भी हमें नहीं देख पड़ता। आप सदा समर में मण्डलाकार धनुष धारण किये बाण बरसाते देख पड़ते हैं ॥६२।६५॥ आप किस समय धनुष हाथ में लेते हैं,

कोऽथवोत्सहते जेतुं त्वां पुमान्भरतर्षभ ।
वर्षता शरवर्षाणि संयुगे वैशसं कृतम् ॥ ६७ ॥
क्षयं नीता हि पृतना संयुगे महती मम ।
यथा युधि जयेम त्वां यथा राज्यं भृशं मम ॥ ६८ ॥
मम सैन्यस्य च क्षेमं तन्मे ब्रूहि पितामह ।
ततोऽब्रवीच्छान्तनवः पाण्डवान्पाण्डुपूर्वजः ॥ ६९ ॥
न कथञ्चन कौन्तेय मयि जीवति संयुगे ।
जयो भवति सर्वज्ञ सत्यमेतद्‌ब्रवीमि ते ॥ ७० ॥
निर्जिते मयि युद्धेन रणे जेष्यथ पाण्डवाः ।
क्षिप्रं मयि प्रहरध्वं यदीच्छथ रणे जयम् ॥ ७१ ॥
अनुजानामि वः पार्थाः प्रहरध्वं यथासुखम् ।
एवं हि सुकृतं मन्ये भवतां विदितो ह्यहम् ॥ ७२ ॥
हते मयि हतं सर्वं तस्मादेवं विधीयताम् ।
युधिष्ठिर उवाच—ब्रूहि तस्मादुपायं नो यथा युद्धे जयेमहि ॥ ७३ ॥
भवन्तं समरे क्रुद्धं दण्डहस्तमिवाऽन्तकम् ।
शक्यो वज्रधरो जेतुं वरुणोऽथ यमस्तथा ॥ ७४ ॥
न भवान्समरे शक्यः सेन्द्रैरपि सुरासुरैः ।
भीष्म उवाच—सत्यमेतन्महाबाहो यथा वदसि पाण्डव ॥ ७५ ॥
नाऽहं जेतुं रणे शक्यः सेन्द्रैरपि सुरासुरैः ।
आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः ॥ ७६ ॥

कब डोरी खींचते हैं, कब बाण चढ़ाते और कब छोड़ते हैं, यह कुछ भी हम लोगों को नहीं देख पड़ता। रथ के ऊपर आप दूसरे सूर्य के समान देख पड़ते हैं। रथ, घोड़े, हाथी, मनुष्य आदि को आप निरन्तर अपने बाणों से गिराते ही रहते हैं। आपका भला कौन पुरुष समर में जीत सकता है? आपने निरन्तर बाण-वर्षा करके मेरी इतनी बड़ी सेना नष्ट कर दी है। इसलिए हे पितामह! इस समय आप वही उपाय बताइए जिससे हम युद्ध में आपको जीत सकें, राज्य प्राप्त कर सकें और मेरी सेना का विनाश भी न हो ॥६५।६९॥ हे राजेन्द्र! तब भीष्म ने पाण्डवों से कहा—हे कुन्तीनन्दन! मेरे जीवित रहते युद्ध में विजय प्राप्त करना तुम्हारे लिए सम्भव नहीं। युद्ध में मुझे मारने पर ही तुम लोग जय प्राप्त कर सकोगे। इसलिए यदि समर में जय प्राप्त करना चाहते हो तो शीघ्र ही मुझ पर कठोर प्रहार करो। मैं तुम को आज्ञा देता हूँ, जी भरकर मुझ पर बाण चलाओ। इसे मैं तुम्हारा सौभाग्य समझता हूँ कि तुम लोग यह जान गये कि मुझे मारे बिना तुम्हें जय नहीं प्राप्त हो सकती। मेरे मरने से ही सब कौरवों का मरना समझकर मुझे मारने का यत्न शीघ्र करो ॥६९। ७२॥ युधिष्ठिर ने कहा—हे पितामह! आप संग्राम में दण्डपाणि यमराज की तरह देख पड़ते हैं। इसलिए वह उपाय बताइए जिससे हम युद्ध में आपको जीत

ततो मां न्यस्तशस्त्रं तु एते हन्युर्महारथाः ।
निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे ॥ ७७ ॥
द्रवमाणे च भीते च तवाऽस्मीति च वादिनि ।
स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रिणि ॥ ७८ ॥
अप्रशस्ते नरे चैव न युद्धं रोचते मम ।
इमं मे शृणु राजेन्द्र सङ्कल्पं पूर्वचिन्तितम् ॥ ७९ ॥
अमङ्गल्यध्वजं दृष्ट्वा न युध्येयं कदाचन ।
य एष द्रौपदो राजंस्तव सैन्ये महारथः ॥ ८० ॥
शिखण्डी समरामर्षी शूरश्च समितिञ्जयः ।
यथाऽभवच्च स्त्री पूर्वं पश्चात्पुंस्त्वं समागतः ॥ ८१ ॥
जानन्ति च भवन्तोऽपि सर्वमेतद्यथातथम् ।
अर्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनम् ॥ ८२ ॥
मामेव विशिखैस्तीक्ष्णैरभिद्रवतु दंशितः ।
अमङ्गल्यध्वजे तस्मिन्स्त्रीपूर्वे च विशेषतः ॥ ८३ ॥
न प्रहर्तुमभीप्सामि गृहीतेषुः कथञ्चन ।
तदन्तरं समासाद्य पाण्डवो मां धनञ्जयः ॥ ८४ ॥
शरैर्घातयतु क्षिप्रं समन्ताद्भरतर्षभ ।
न तं पश्यामि लोकेषु मां हन्याद्यः समुद्यतम् ॥ ८५ ॥
ऋते कृष्णान्महाभागात्पाण्डवाद्वा धनञ्जयात् ।
एष तस्मात्पुरोधाय कश्चिदन्यं ममाऽग्रतः ॥ ८६ ॥

सकें । हम लोग समर में इन्द्र, वरुण और यमराज को भी जीत सकते हैं; किन्तु आपको तो इन्द्र सहित सब देवता और दैत्य भी नहीं जीत सकते, फिर हम हैं क्या वस्तु ! ॥७३।७५॥ भीष्म ने कहा—हे पाण्डव ! तुम उचित ही कह रहे हो । मैं संग्राम में यत्नपूर्वक धनुष-बाण लेकर खड़ा होऊँ तो इन्द्र सहित सब देवता और दैत्य भी मिलकर मुझे नहीं जीत सकते। मैं यदि अस्त्र-शस्त्र त्याग दूँ तभी वे मुझे मार सकते हैं । हे धर्मपुत्र ! शस्त्र का त्याग किये हुए, कवच-हीन, गिरे हुए, ध्वजाहीन, भागते हुए, भयभीत हुए, शरणागत, स्त्री-जाति, स्त्रियों का नाम रखनेवाले, विकलाङ्ग, अपने पिता के एकमात्र पुत्र, सन्तानहीन और नपुंसक आदि के साथ युद्ध करना मुझे रुचिकर नहीं है ॥७६।७९॥ हे राजेन्द्र ! मेरी पहले की प्रतिज्ञा स्मरण करो । मैं पुरुष-भाव को प्राप्त स्त्री जाति से या नपुंसक से कभी युद्ध नहीं कर सकता । जो महारथी युद्धनिपुण द्रुपद का पुत्र शिखण्डी तुम्हारी सेना में है वह पहले स्त्री था, पीछे यक्ष के वरदान से पुरुष हो गया है । यह वृत्तान्त तुम लोग भी अच्छी प्रकार जानते ही हो ॥७९।८२॥ इस समय महारथी अर्जुन उसी शिखण्डी को आगे करके मुझ-पर तीक्ष्ण बाण मारें । शिखण्डी अमाङ्गल्यध्वज और पहले का स्त्री है, इसलिए धनुष बाण हाथ में रहने पर भी मैं उस पर प्रहार नहीं करूँगा । अर्जुन उसी

आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः ।
मां पातयतु बीभत्सुरेवं तव जयो ध्रुवम् ॥ ८७ ॥
एतत्कुरुष्व कौन्तेय यथोक्तं मम सुव्रत ।
संग्रामे धार्तराष्ट्रांश्च हन्याः सर्वान्समागतान् ॥ ८८ ॥

सञ्जय उवाच—ते तु ज्ञात्वा ततः पार्था जग्मुः स्वशिबिरं प्रति ।
अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ॥ ८९ ॥
तथोक्तवति गाङ्गेये परलोकाय दीक्षिते ।
अर्जुनो दुःखसन्तप्तः सव्रीडमिदमब्रवीत् ॥ ९० ॥
गुरुणा कुरुवृद्धेन कृतप्रज्ञेन धीमता ।
पितामहेन संग्रामे कथं योद्धाऽस्मि माधव ॥ ९१ ॥
क्रीडता हि मया बाल्ये वासुदेव महामनाः ।
पांसुरूषितगात्रेण महात्मा परुषीकृतः ॥ ९२ ॥
यस्याऽहमधिरुह्याऽङ्कं बालः किल गदाग्रज ।
तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ॥ ९३ ॥
नाऽहं तातस्तव पितुस्तातोऽस्मि तव भारत ।
इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया ॥ ९४ ॥
कामं वध्यतु सैन्यं मे नाऽहं योत्स्ये महात्मना ।
जयो वाऽस्तु वधो वा मे कथं वा कृष्ण मन्यसे ॥ ९५ ॥
( कथमस्मद्विधःकृष्ण जानन्धर्मं सनातनम् ।
न्यस्तशस्त्रे च वृद्धे च प्रहरेद्धि पितामहे ॥ )

वासुदेव उवाच—प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे ।
क्षत्रधर्मे स्थितः पार्थ कथं नैनं हनिष्यसि ॥ ९६ ॥

---

शिखण्डी की आड़ में रहकर बारम्बार बाण मारें। युद्ध के लिए उद्यत मुझको महाभाग श्रीकृष्ण या महारथी अर्जुन के अतिरिक्त और कोई नहीं मार सकता ॥८२।८६॥ इसलिए वीर अर्जुन यत्नपूर्वक गाण्डीव धनुष हाथ में लेकर, शिखण्डी को आगे करके, मुझ पर प्रहार करें और मुझे गिरा दें। तब तुम अवश्य जय प्राप्त कर सकोगे। हे युधिष्ठिर! मेरी सम्मति के अनुसार कार्य करोगे तो कौरवों को जीत लोगे ॥८६।८८॥ सञ्जय कहते हैं—हे महाराज! महात्मा श्रीकृष्ण और पाण्डवगण पितामह भीष्म से उनकी मृत्यु का यह उपाय जानकर, उन्हें प्रणाम करके, अपने शिविर को लौट गये। अब भीष्म को प्राणत्याग के लिए उद्यत देखकर, दुःख और सन्ताप से खिन्न होकर, लज्जितभाव से अर्जुन ने श्रीकृष्ण से कहा—हे वासुदेव! मैं बाल्यावस्था में धूल में खेलते-खेलते जिनकी गोद में बैठकर जिन्हें धूल से भर देता था, जिन्हें पिता कहता था तो "मैं तुम्हारा पिता नहीं, तुम्हारे पिता का पिता हूँ" कहकर जो मुझसे स्नेह

पातयैनं रथात्पार्थ क्षत्रियं युद्धदुर्मदम् ।
नाऽहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ॥ ९७ ॥
दृष्टमेतत्पुरा देवैर्गमिष्यति यमक्षयम् ।
यद् दृष्टं हि पुरा पार्थ तत्तथा न तदन्यथा ॥ ९८ ॥
न हि भीष्मं दुराधर्षं व्यात्ताननमिवाऽन्तकम् ।
त्वदन्यः शक्नुयाद्योद्धुमपि वज्रधरः स्वयम् ॥ ९९ ॥
जहि भीष्मं स्थिरो भूत्वा शृणु चेदं वचो मम ।
यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः ॥ १०० ॥
ज्यायांसमपि चेद्वृद्धं गुणैरपि समन्वितम् ।
आततायिनमायान्तं हन्याद्घातकमात्मनः ॥ १०१ ॥
शाश्वतोऽयं स्थितो धर्मः क्षत्रियाणां धनञ्जय ।
योद्धव्यं रक्षितव्यं च यष्टव्यं चाऽनसूयुभिः ॥ १०२ ॥

अर्जुन उवाच—शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवम् ।
दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्तते ॥ १०३ ॥
ते वयं प्रमुखे तस्य पुरस्कृत्य शिखण्डिनम् ।
गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः ॥ १०४ ॥
अहमन्यान्महेष्वासान्वारयिष्यामि सायकैः ।
शिखण्ड्यपि युधां श्रेष्ठं भीष्ममेवाऽभियोधयेत् ॥ १०५ ॥
श्रुतं हि कुरुमुख्यस्य नाऽहं हन्यां शिखण्डिनम् ।
कन्याऽह्येषा पुरा भूत्वा पुरुषः समपद्यत ॥ १०६ ॥

---

करते थे, उन्हीं महात्मा वृद्ध पितामह से इस समय मैं कैसे युद्ध करूँगा ! किस प्रकार तीक्ष्ण बाण मारकर उनकी हत्या करूँगा ? हे वासुदेव ! महात्मा भीष्म मेरी समग्र सेना को भले ही नष्ट कर दें, किन्तु मैं उनसे कभी न युद्ध करूँगा। नाश हो और चाहे जय, मैं उन्हें नहीं मार सकता। हे श्रीकृष्ण ! आप ही कहिए, क्या मेरा यह कर्तव्य नहीं है? ॥८८।९५॥ श्रीकृष्ण ने कहा—सुनो अर्जुन ! तुम पहले युद्ध में भीष्म को मारने की प्रतिज्ञा कर चुके हो। क्षत्रिय होकर अब उस प्रतिज्ञा को असत्य कैसे करोगे ! हे पार्थ ! युद्धदुर्मद क्षत्रिय भीष्म को क्षत्रियधर्म के अनुसार मार गिराओ। उन्हें मार बिना तुमको जय नहीं प्राप्त हो सकती। यह बात, अर्थात् तुम्हारे हाथ से भीष्म की मृत्यु, पहले ही देवता निश्चित कर चुके हैं। तुम्हें विवश होकर वही करना होगा। देवताओं का निश्चय कभी टल नहीं सकता ॥९६।९८॥ मुख फैलाये हुए काल के समान दुर्द्धर्ष भीष्म का सामना तुम्हारे अतिरिक्त कोई नहीं कर सकता। यहाँ तक कि इन्द्र भी युद्ध में भीष्म को नहीं मार सकते। इसलिए मेरी बात सुनो, चित्त को स्थिर करके भीष्म को मारो। महामति बृहस्पति ने एक समय इन्द्र से कहा था कि अपना बड़ा, वृद्ध और गुणी पुरुष—गुरुजन होकर भी—यदि आततायी की तरह अपने को मारने आवे तो उसे मार डालना चाहिए। इसमें कोई दोष नहीं है। हे पार्थ ! क्षत्रियों का यही सनातन-

इत्येवं निश्चयं कृत्वा पाण्डवाः सहमाधवाः ।
अनुमान्य महात्मानं प्रययुर्हृष्टमानसाः ।
शयनानि यथास्वानि भेजिरे पुरुषर्षभाः ॥ १०७ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि नवमदिवसावहारोत्तरमन्त्रे सप्ताधिकशततमोऽध्याय ॥ १०७ ॥

धर्म है कि वे ईर्ष्या छोड़कर यज्ञ करें और शत्रुओं से युद्ध करें और प्रजा की रक्षा करें ॥९९।१०२॥ अर्जुन ने कहा —हे श्रीकृष्ण ! शिखण्डी के ही हाथ से भीष्म की मृत्यु होना निश्चित है, क्योंकि शिखण्डी को सन्मुख देखकर ही भीष्म युद्ध से विमुख हो जाते हैं । मैंने यही उपाय रचिकर समझा है कि मैं शिखण्डी को अपने आगे करके भीष्म को मारूँगा । केवल शिखण्डी भीष्म से युद्ध करेंगे, और मैं अन्य महारथियों को अपने बाणों से रोकूँगा । मैंने भीष्म के मुख से सुना है कि शिखण्डी पहले स्त्री थे । इसी कारण पितामह भीष्म उनसे युद्ध नहीं करेंगे । हे महाराज ! पाण्डवगण श्रीकृष्ण के साथ इस प्रकार भीष्म-वध का निश्चय करके प्रसन्नतापूर्वक अपने डेरों में आये और विश्राम करने लगे । ॥१०३।१०७॥

भीष्मपर्व का एक सौ सात अध्याय समाप्त हुआ ॥ १०७ ॥

---

अथ अष्टाधिकशततमोऽध्याय ॥ १०८ ॥

धृतराष्ट्र उवाच — कथं शिखण्डी गाङ्गेयमभ्यवर्तत संयुगे ।
पाण्डवांश्च कथं भीष्मस्तन्ममाऽऽचक्ष्व सञ्जय ॥ १ ॥

सञ्जय उवाच — ततस्ते पाण्डवाः सर्वे सूर्यस्योदयनं प्रति ।
ताड्यमानासु भेरीषु मृदङ्गेष्वानकेषु च ॥ २ ॥
ध्मायत्सु दधिवर्णेषु जलजेषु समन्ततः ।
शिखण्डिनं पुरस्कृत्य निर्याताः पाण्डवा युधि ॥ ३ ॥
कृत्वा व्यूहं महाराज सर्वशत्रुनिबर्हणम् ।
शिखण्डी सर्वसैन्यानामग्र आसीद्विशाम्पते ॥ ४ ॥
चक्ररक्षौ ततस्तस्य भीमसेनधनञ्जयौ ।
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्यवान् ॥ ५ ॥
सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः ।
धृष्टद्युम्नस्ततः पश्चात्पञ्चालैरभिरक्षितः ॥ ६ ॥

एक सौ आठ अध्याय ॥ १०८ ॥

धृतराष्ट्र ने पूछा — हे सञ्जय ! शिखण्डी ने भीष्म के साथ किस प्रकार संग्राम किया ? पितामह भीष्म ने पाण्डवों के साथ दसवें दिन कैसा युद्ध किया ? ॥१॥ सञ्जय ने कहा — हे राजेन्द्र ! सूर्योदय होने पर नगाड़े और भेरी, मृदङ्ग, तूर्य, शङ्ख आदि बाजे बजने लगे। पाण्डवगण उस दिन शिखण्डी को आगे करके युद्ध के लिए चले । शत्रुओं के लिए दुर्भेद्य महाव्यूह की रचना करके शिखण्डी उसके अग्रभाग में स्थित हुए। महावीर भीमसेन और अर्जुन उसके रथ के दोनों पहियों की रक्षा में नियुक्त हुए । द्रौपदी के पाँचों पुत्र और अभिमन्यु शिखण्डी के पृष्ठरक्षक हुए। सात्यकि आदि दुर्जेय योद्धाओं की रक्षा का कार्य करने लगे,

ततो युधिष्ठिरो राजा यमाभ्यां सहितः प्रभुः ।
प्रययौ सिंहनादेन नादयन्भरतर्षभ ॥ ७ ॥
विराटस्तु ततः पश्चात्स्वेन सैन्येन संवृतः ।
द्रुपदश्च महाबाहो ततः पश्चादुपाद्रवत् ॥ ८ ॥
केकया भ्रातरः पञ्च धृष्टकेतुश्च वीर्यवान् ।
जघनं पालयामासुः पाण्डुसैन्यस्य भारत ॥ ९ ॥
एवं व्यूह्य महासैन्यं पाण्डवास्तव वाहिनीम् ।
अभ्यद्रवन्त संग्रामे त्यक्त्वा जीवितमात्मनः ॥ १० ॥
तथैव कुरवो राजन्भीष्मं कृत्वा महारथम् ।
अग्रतः सर्वसैन्यानां प्रययुः पाण्डवान्प्रति ॥ ११ ॥
पुत्रैस्तव दुराधर्षो रक्षितः सुमहाबलैः ।
ततो द्रोणो महेष्वासः पुत्रश्चाऽस्य महाबलः ॥ १२ ॥
भगदत्तस्ततः पश्चाद्गजानीकेन संवृतः ।
कृपश्च कृतवर्मा च भगदत्तमनुव्रतौ ॥ १३ ॥
काम्बोजराजो बलवांस्ततः पश्चात्सुदक्षिणः ।
मागधश्च जयत्सेनः सौबलश्च बृहद्बलः ॥ १४ ॥
तथैवाऽन्ये महेष्वासाः सुशर्मप्रमुखा नृपाः ।
जघनं पालयामासुस्तव सैन्यस्य भारत ॥ १५ ॥
दिवसे दिवसे प्राप्ते भीष्मः शान्तनवो युधि ।
आसुरानकरोद्व्यूहान्पैशाचानथ राक्षसान् ॥ १६ ॥
ततः प्रववृते युद्धं तव तेषां च भारत ।
अन्योन्यं निघ्नतां राजन्यमराष्ट्रविवर्धनम् ॥ १७ ॥

---

चेकितान और महारथी धृष्टद्युम्न करने लगे। धृष्टद्युम्न की रक्षा के लिए पाञ्चाल नियुक्त हुए ॥२।६॥ हे भारत ! उनके पीछे राजा युधिष्ठिर, नकुल और सहदेव एकत्र होकर सिंहनाद करते हुए चले । उनके पीछे अपनी सारी सेना लेकर राजा विराट चले । विराट के पीछे राजा द्रुपद चले । पाँचा भाई कैकेय-कुमारों और महाबली धृष्टकेतु को उस व्यूह के जघनस्थल की रक्षा का भार सौंपा गया । हे महाराज ! पाण्डव-गण इस प्रकार अपनी सेना का व्यूह बनाकर, प्राणों की ममता छोड़कर, कौरव सेना के सामने चले ॥७। १०॥ इधर कौरवगण भी महारथी भीष्म को सब सेना के आगे करके पाण्डवों की सेना की ओर अग्रसर हुए। आपके महाबली पराक्रमी पुत्रगण चारों ओर से दुर्द्धर्ष वीर भीष्म की रक्षा करने लगे। भीष्म के पीछे क्रमश महाधनुर्द्धर द्रोणाचार्य गुरुपुत्र अश्वत्थामा, हाथियों की सेना साथ लिये राजा भगदत्त, कृपाचार्य कृतवर्मा आदि महारथी चले । काम्बोजपति सुदक्षिण, मगधराज जयसेन, शकुनि, बृहद्बल और सुशर्मा आदि अन्य

अर्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
भीष्मं युद्धेऽभ्यवर्तन्त किरन्तो विविधाञ्शरान् ॥ १८ ॥
तत्र भारत भीमेन ताडितास्तावकाः शरैः ।
रुधिरौघपरिक्लिन्नाः परलोकं ययुस्तदा ॥ १९ ॥
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
तव सैन्यं समासाद्य पीडयामासुरोजसा ॥ २० ॥
ते वध्यमानाः समरे तावका भरतर्षभ ।
नाऽशक्नुवन्वारयितुं पाण्डवानां महद्बलम् ॥ २१ ॥
ततस्तु तावकं सैन्यं वध्यमानं समन्ततः ।
सुसम्प्राप्तं दश दिशः काल्यमानं महारथैः ॥ २२ ॥
त्रातारं नाऽध्यगच्छन्त तावका भरतर्षभ ।
वध्यमानाः शितैर्बाणैः पाण्डवैः सह सृञ्जयैः ॥ २३ ॥
धृतराष्ट्र उवाच—पीड्यमानं बलं दृष्ट्वा पार्थैर्भीष्मः पराक्रमी ।
यदकार्षीद्रणे क्रुद्धस्तन्ममाऽऽचक्ष्व सञ्जय ॥ २४ ॥
कथं वा पाण्डवान्युद्धे प्रत्युद्यातः परन्तपः ।
विनिघ्नन्सोमकान्वीरस्तदाचक्ष्व ममाऽऽनघ ॥ २५ ॥
सञ्जय उवाच आचक्षे ते महाराज यदकार्षीत्पिता तव ।
पीडिते तव पुत्रस्य सैन्ये पाण्डव सृञ्जयैः ॥ २६ ॥
प्रहृष्टमनसः शूराः पाण्डवाः पाण्डुपूर्वज ।
अभ्यवर्तन्त निघ्नन्तस्तव पुत्रस्य वाहिनीम् ॥ २७ ॥

तं विनाशं मनुष्येन्द्र नरवारणवाजिनाम् ।
नाऽमृष्यत तदा भीष्मः सैन्यघातं रणे परैः ॥ २८ ॥
स पाण्डवान्महेष्वासः पञ्चालांश्चैव सृञ्जयान् ।
नाराचैर्वत्सदन्तैश्च शितैरञ्जलिकैस्तथा ॥ २९ ॥
अभ्यवर्षत दुर्धर्षस्त्यक्त्वा जीवितमात्मनः ।
स पाण्डवानां प्रवरान्पञ्च राजन्महारथान् ॥ ३० ॥
आत्तशस्त्रो रणे यत्नाद्वारयामास सायकैः ।
नानाशस्त्रास्त्रवर्षैस्तान्वीर्यामर्षप्रवेरितैः ॥ ३१ ॥
निजघ्ने समरे क्रुद्धो हस्त्यश्वं चाऽमितं बहु ।
रथिनोऽपातयद्राजन्रथेभ्यः पुरुषर्षभ ॥ ३२ ॥
सादिनश्चाऽश्वपृष्ठेभ्यः पादातांश्च समागतान् ।
गजारोहान्गजेभ्यश्च परेषां जयकारिणः ॥ ३३ ॥
तमेकं समरे भीष्मं त्वरमाणं महारथम् ।
पाण्डवाः समवर्तन्त वज्रहस्तमिवाऽसुराः ॥ ३४ ॥
शक्राशनिसमस्पर्शान्विमुञ्चन्निशिताञ्छरान् ॥ ३५ ॥
दिक्ष्वदृश्यत सर्वासु घोरं सन्धारयन्वपुः ।
मण्डलीभूतमेवाऽस्य नित्यं धनुरदृश्यत ॥ ३६ ॥
संग्रामे युद्ध्यमानस्य शक्रचापोपमं महत् ।
तद् दृष्ट्वा समरे कर्म पुत्रास्तव विशाम्पते ॥ ३७ ॥
विस्मयं परमं गत्वा पितामहमपूजयन् ।
पार्था विमनसो भूत्वा प्रैक्षन्त पितरं तव ॥ ३८ ॥

महाबली पाण्डवगण प्रसन्नतापूर्वक कौरवपक्ष की सेना को मारते हुए भीष्म के सन्मुख जाने लगे। महाधनुर्द्धर भीष्म अपने पक्ष के घोड़े, हाथी, मनुष्य आदि को शत्रुओं के बाणों से मरते देखकर क्रोध से अधीर हो उठे ॥२६।२८॥ वे जीवन की आशा छोड़कर नाराच, वत्सदन्त और अञ्जलिक बाणों से पाञ्चाल, सृञ्जय, पाण्डव आदि पर प्रहार करने लगे। उन्होंने निरन्तर बाण-वर्षा करके पाँचों पाण्डवों का आगे बढ़ना रोक दिया। वे क्रोध के आवेश से विविध अस्त्र-शस्त्र बरसाकर, असंख्य हाथियों और घोड़ों को गिराकर, भयानक रूप से शत्रुपक्ष पर आक्रमण करने लगे। उन्होंने घोड़े के सवार को घोड़े से, हाथी के सवार को हाथी से, रथ के सवार को रथ से और पैदल सैनिक को बाण मारकर भूमि पर गिरा दिया ॥२९।३३॥ असुरगण जैसे इन्द्र के सन्मुख युद्ध करने को उपस्थित हों, वैसे ही पाण्डवगण महारथी भीष्म को संग्राम-भूमि में आते देखकर उनके सन्मुख आये। महावीर भीष्म इन्द्र के वज्र ऐसे बाण छोड़ने लगे। उस समय उनका भयानक रूप और मण्डलाकार घूमता हुआ बड़ा धनुष ही चारों ओर सैनिकों को

युद्ध्यमानं रणे शूरं विप्रचित्तिमिवाऽमराः ।
न चैनं वारयामासुर्व्यात्ताननमिवाऽन्तकम् ॥ ३९ ॥
दशमेऽहनि सम्प्राप्ते रथानीकं शिखण्डिनः ।
अदहन्निशितैर्बाणैः कृष्णवर्त्मेव काननम् ॥ ४० ॥
तं शिखण्डी त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ।
आशीविषमिव क्रुद्धं कालसृष्टमिवाऽन्तकम् ॥ ४१ ॥
स तेनाऽतिभृशं विद्धः प्रेक्ष्य भीष्मः शिखण्डिनम् ।
अनिच्छन्निव संक्रुद्धः प्रहसन्निदमब्रवीत् ॥ ४२ ॥
काममभ्यस वा मा वा न त्वां योत्स्ये कथश्चन ।
यैव हि त्वं कृता धात्रा सैव त्वं हि शिखण्डिनी ॥ ४३ ॥
तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्छितः ।
उवाचैनं तथा भीष्मं सृक्किणी परिसंलिहन् ॥ ४४ ॥
जानामि त्वां महाबाहो क्षत्रियाणां क्षयङ्करम् ।
मया श्रुतं च ते युद्धं जामदग्न्येन वै सह ॥ ४५ ॥
दिव्यश्च ते प्रभावोऽयं मया च बहुशः श्रुतः ।
जानन्नपि प्रभावं ते योत्स्येऽद्याऽहं त्वया सह ॥ ४६ ॥
पाण्डवानां प्रियं कुर्वन्नात्मनश्च नरोत्तम ।
अद्य त्वां योधयिष्यामि रणे पुरुषसत्तम ॥ ४७ ॥
ध्रुवं च त्वां हनिष्यामि शपे सत्येन तेऽग्रतः ।
एतच्छ्रुत्वा च मद्वाक्यं यत्कृत्यं तत्समाचर ॥ ४८ ॥

देख पड़ने लगा ॥३४।३७॥ हे भारत ! आपके पुत्र-गण महावीर भीष्म का ऐसा अद्भुत विक्रम और पुरुषार्थ देखकर आश्चर्य के साथ उनकी प्रशंसा करने लगे। देवताओं ने जैसे अपने शत्रु विप्रचित्ति राक्षस को देखा था, वैसे ही पाण्डवगण व्याकुल दृष्टि से भीष्म की ओर देखने लगे। मुख फैलाये हुए यमराज के समान भयङ्कर भीष्म को देखकर सब भयभीत हो गये। कोई उन्हें रोक नहीं सका। हे राजेन्द्र ! दसवें दिन के युद्ध में महावीर भीष्म वन जलानेवाले दावानल के समान प्रज्वलित होकर शिखण्डी के साथ की रथ-सेना को भस्म करने लगे ॥३७।४०॥ कुपित सर्प और यमराज के समान भीष्म की छाती में शिखण्डी ने तीन तीक्ष्ण बाण मारे। महापराक्रमी भीष्म ने शिखण्डी की ओर देखकर, क्रोध की हँसी हँसकर, अनिच्छा के साथ कहा — हे शिखण्डी ! तुम मुझे बाण भले मारो, परन्तु मैं किसी प्रकार तुमसे युद्ध नहीं करूँगा, क्योंकि विधाता ने तुमको शिखण्डिनी के रूप में उत्पन्न किया है ॥४१।४३॥ भीष्म के ये वचन सुनकर, क्रोध से अत्यन्त अधीर होकर होंठ चाटते हुए शिखण्डी ने कहा — हे क्षत्रियकुल के काल भीष्म ! मैं तुमको अच्छी प्रकार जानता हूँ। तुमने परशुराम के साथ युद्ध किया था, यह भी मैं जानता हूँ। तुम्हारा दिव्य प्रभाव भी मुझे विदित है। तो भी मैं अपने और पाण्डवों के हित के लिए तुमसे

कामभ्यस वा मा वा न मे जीवन्प्रमोक्ष्यसे ।
सुदृष्टः क्रियतां भीष्म लोकोऽयं समितिञ्जयः ॥ ४९ ॥

सञ्जय उवाच—एवमुक्त्वा ततो भीष्मं पञ्चभिर्नतपर्वभिः ।
अविध्यत रणे भीष्मं प्रणुन्नं वाक्यसायकैः ॥ ५० ॥
तस्य तद्वचनं श्रुत्वा सव्यसाची महारथः ।
कालोऽयमिति सञ्चिन्त्य शिखण्डिनमचोदयत् ॥ ५१ ॥
अहं त्वामनुयास्यामि परान्विद्रावयञ्शरैः ।
अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रम ॥ ५२ ॥
न हि ते संयुगे पीडां शक्तः कर्तुं महाबलः ।
तस्मादद्य महाबाहो यत्नाद्भीष्ममभिद्रव ॥ ५३ ॥
अहत्वा समरे भीष्मं यदि यास्यसि मारिष ।
अवहास्योऽस्य लोकस्य भविष्यसि मया सह ॥ ५४ ॥
नाऽवहास्या यथा वीर भवेम परमाहवे ।
तथा कुरु रणे यत्नं साधयस्व पितामहम् ॥ ५५ ॥
अहं ते रक्षणं युद्धे करिष्यामि महाबल ।
वारयन्रथिनः सर्वान्साधयस्व पितामहम् ॥ ५६ ॥
द्रोणं च द्रोणपुत्रं च कृपं चाऽथ सुयोधनम् ।
चित्रसेनं विकर्णं च सैन्धवं च जयद्रथम् ॥ ५७ ॥
विन्दानुविन्दावावन्त्यौ काम्बोजं च सुदक्षिणम् ।
भगदत्तं तथा शूरं मागधं च महाबलम् ॥ ५८ ॥

संग्राम करूँगा ॥४४।४६॥ मैं सौगन्ध खाकर कहता हूँ कि तुमको अवश्य मारूँगा। हे भीष्म ! मेरी प्रतिज्ञा तुमने सुन ली। अब जो चाहे सो करो। यदि तुम मुझको बाण न मारोगे तो भी जब तक जीवित रहोगे तब तक किसी प्रकार छुटकारा न पाओगे। इसलिए इस संसार को एक बार अच्छी प्रकार देख लो ॥४७।४९॥ सञ्जय कहते हैं—अब शिखण्डी ने भीष्म को अत्यन्त कठोर पाँच बाण मारे। महारथी अर्जुन ने शिखण्डी के वचन सुनकर, यही ठीक अवसर समझकर, शिखण्डी से कहा—हे वीर शिखण्डी ! अब मैं तुम्हारी सहायता करूँगा, तुम बाण-वर्षा से शत्रुओं को मारकर क्रोधपूर्वक वेग से महावीर भीष्म पर आक्रमण करो। महारथी भीष्म तुमको पीड़ित नहीं करेंगे, मैं तुम्हारे साथ हूँ। आज तुम यत्नपूर्वक भीष्म से समर करने के लिए प्रस्तुत हो जाओ ॥५०।५३॥ जो तुम भीष्म को मारे बिना समर से लौटोगे तो लोग झूठी प्रतिज्ञा करनेवाला कहकर तुम्हारा उपहास करेंगे। इसलिए ऐसा उपाय करो जिससे समाज में हमारा उपहास न हो ॥५४।५६॥ तटभूमि जैसे समुद्र के वेग को रोकती है वैसे मैं द्रोणाचार्य, अश्वत्थामा, कृपाचार्य, दुर्योधन, चित्रसेन, विकर्ण, जयद्रथ, विन्द, अनुविन्द, काम्बोजराज सुदक्षिण, शूर भगदत्त, महारथी मगधराज जयसेन, वीर्यशाली भूरिश्रवा, राक्षस अलम्बुष, त्रिगर्तराज सुशर्मा और अन्य महा-

सौमदत्तिं तथा शूरमार्ष्यशृङ्गिं च राक्षसम् ।
त्रिगर्तराजं च रणे सह सर्वैर्महारथैः ॥ ५९ ॥
अहमावारयिष्यामि वेलेव मकरालयम् ।
कुरूंश्च सहितान्सर्वान्युध्यमानान्महाबलान् ।
निवारयिष्यामि रणे साधयस्व पितामहम् ॥ ६० ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मशिखण्डिसमागमे अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

रथी कौरवों को रोककर उनसे तुम्हारी रक्षा करूँगा। | तुम पितामह भीष्म को मारने की चेष्टा करो ॥५७।६०॥

भीष्मपर्व का एक सौ आठ अध्याय समाप्त हुआ ॥ १०८ ॥

अथ नवाधिकशततमोऽध्यायः ॥ १०९ ॥

धृतराष्ट्र उवाच—कथं शिखण्डी गाङ्गेयमभ्यधावत्पितामहम् ।
पाञ्चाल्यः समरे क्रुद्धो धर्मात्मानं यतव्रतम् ॥ १ ॥
केऽरक्षन्पाण्डवानीके शिखण्डिनमुदायुधाः ।
त्वरमाणास्त्वराकाले जिगीषन्तो महारथाः ॥ २ ॥
कथं शान्तनवो भीष्मः स तस्मिन्दशमेऽहनि ।
अयुध्यत महावीर्यः पाण्डवैः सह सृञ्जयैः ॥ ३ ॥
न मृष्यामि रणे भीष्मं प्रत्युद्यातं शिखण्डिना ।
कच्चिन्न रथभङ्गोऽस्य धनुर्वाऽशीर्यताऽस्यतः ॥ ४ ॥
सञ्जय उवाच—नाऽशीर्यत धनुश्चाऽस्य रथभङ्गो न चाऽप्यभूत् ।
युध्यमानस्य संग्रामे भीष्मस्य भरतर्षभ ॥ ५ ॥
निघ्नतः समरे शत्रूञ्शरैः सन्नतपर्वभिः ।
अनेकशतसाहस्रास्तावकानां महारथाः ॥ ६ ॥
तथा दन्तिगणा राजन्हयाश्चैव सुसज्जिताः ।
अभ्यवर्तन्त युद्धाय पुरस्कृत्य पितामहम् ॥ ७ ॥

एक सौ नौ अध्याय ॥ १०९ ॥

राजा धृतराष्ट्र ने कहा—हे सञ्जय ! पाञ्चालपुत्र शिखण्डी ने क्रुद्ध होकर पितामह भीष्म के साथ कैसे युद्ध किया ? किस प्रकार उन पर आक्रमण किया ? पाण्डव-सेना के किस-किस महारथी ने जय प्राप्त करने की इच्छा से अस्त्र शस्त्र लेकर शिखण्डी की रक्षा की ! उस दसवें दिन महावीर भीष्म ने पाण्डवों और सृञ्जयों से किस प्रकार युद्ध किया ? हे सञ्जय ! मुझे यह समाचार असह्य हो रहा है कि शिखण्डी ने भीष्म पर आक्रमण किया। जिस समय युद्ध से विमुख भीष्म पर आक्रमण किया गया उस समय उनसे भीष्म का रथ तो नहीं टूटा ! उनका धनुष तो नहीं कट गया ! ॥१।४॥ सञ्जय ने कहा—हे महाराज ! संग्राम के समय महारथी भीष्म का न तो रथ ही टूटा और न धनुष ही कटा। वे सन्नतपर्व तीक्ष्ण

यथाप्रतिज्ञं कौरव्य स चाऽपि समितिञ्जयः ।
पार्थानामकरोद्भीष्मः सततं समिति क्षयम् ॥ ८ ॥
युध्यमानं महेष्वासं विनिघ्नन्तं पराञ्शरैः ।
पञ्चालाः पाण्डवैः सार्धं सर्वे ते नाऽभ्यवारयन् ॥ ९ ॥
दशमेऽहनि सम्प्राप्ते ततस्तां रिपुवाहिनीम् ।
कीर्यमाणां शितैर्बाणैः शतशोऽथ सहस्रशः ॥ १० ॥
नहि भीष्मं महेष्वासं पाण्डवाः पाण्डुपूर्वज ।
अशक्नुवन्रणे जेतुं पाशहस्तमिवाऽन्तकम् ॥ ११ ॥
अथोपायान्महाराज सव्यसाची धनञ्जयः ।
त्रासयन्रथिनः सर्वान्बीभत्सुरपराजितः ॥ १२ ॥
सिंहवद्विनदन्नुच्चैर्धनुर्ज्यां विक्षिपन्मुहुः ।
शरौघान्विसृजन्पार्थो व्यचरत्कालवद्रणे ॥ १३ ॥
तस्य शब्देन वित्रस्तास्तावका भरतर्षभ ।
सिंहस्येव मृगा राजन्व्यद्रवन्त महाभयात् ॥ १४ ॥
जयन्तं पाण्डवं दृष्ट्वा स्वसैन्यं चाऽभिपीडितम् ।
दुर्योधनस्ततो भीष्ममब्रवीद्भृशपीडितः ॥ १५ ॥
एष पाण्डुसुतस्तात श्वेताश्वः कृष्णसारथिः ।
दहते मामकान्सर्वान्कृष्णवर्त्मेव काननम् ॥ १६ ॥
पश्य सैन्यानि गाङ्गेय द्रवमाणानि सर्वशः ।
पाण्डवेन युधां श्रेष्ठ काल्यमानानि संयुगे ॥ १७ ॥

---

विचित्र बाणों से शत्रुसेना को नष्ट करने लगे। हे राजेन्द्र! आपके पक्ष के बहुत से महारथी योद्धा हाथियों और घुड़सवार सेना को साथ लेकर, भीष्म को आगे करके, युद्ध करने लगे। समरविजयी भीष्म, अपनी प्रतिज्ञा के अनुसार, समर में निरन्तर शत्रुसेना का संहार करने लगे। वे महावीर दसवें दिन के युद्ध में जब शत्रुसेना का संहार करने लगे तब क्या पाञ्चालगण और क्या पाण्डवगण, कोई भी उनके प्रबल वेग और विक्रम को रोकने या सहने में समर्थ नहीं हुआ। वे सम्पूर्ण शत्रुदल पर सैकड़ों-सहस्रों तीक्ष्ण बाण बरसाने जाते थे। सारी शत्रुसेना एक साथ मिलकर भी पाशपाणि यमराज के समान भीष्म को समर में परास्त नहीं कर सकी—उनके वेग के आगे ठहर नहीं सकी ॥८।११॥ हे राजेन्द्र! उधर अजेय अर्जुन भी सब रथी लोगों के मन में भय उत्पन्न करके, युद्धभूमि में जाकर, जोर से सिंहनाद करने लगे। वे बारम्बार धनुष घुमाकर बाणों की वर्षा करते हुए साक्षात् काल की तरह विचरने लगे। उनके भयानक शब्द से आपके पक्ष के सैनिक लोग व्याकुल हो उठे। सिंह के खदेड़े हुए मृगों की तरह भयभीत होकर वे लोग अर्जुन के आगे से भागने लगे ॥१२।१४॥ तब राजा दुर्योधन ने विजयी अर्जुन को विजय प्राप्त करके सिंहनाद करते और अपनी सेना को व्याकुल होकर भागने देखकर, दुःखित हो,

यथा पशुगणान्पालः सङ्कालयति कानने ।
तथेदं मामकं सैन्यं काल्यते शत्रुतापन ॥ १८ ॥
धनञ्जयशरैर्भग्नं द्रवमाणं ततस्ततः ।
भीमोऽप्येवं दुराधर्षो विद्रावयति मे बलम् ॥ १९ ॥
सात्यकिश्चेकितानश्च माद्रीपुत्रौ च पाण्डवौ ।
अभिमन्युः सुविक्रान्तो वाहिनीं द्रवते मम ॥ २० ॥
धृष्टद्युम्नस्तथा शूरो राक्षसश्च घटोत्कचः ।
व्यद्रावयेतां सहसा सैन्यं मम महारणे ॥ २१ ॥
वध्यमानस्य सैन्यस्य सर्वैरेतैर्महारथैः ।
नाऽन्यां गतिं प्रपश्यामि स्थाने युद्धे च भारत ॥ २२ ॥
ऋते त्वां पुरुषव्याघ्र देवतुल्यपराक्रम ।
पर्याप्तस्तु भवाञ्शीघ्रं पीडितानां गतिर्भव ॥ २३ ॥
सञ्जय उवाच—एवमुक्तो महाराज पिता देवव्रतस्तव ।
चिन्तयित्वा मुहूर्तं तु कृत्वा निश्चयमात्मनः ॥ २४ ॥
तव सन्धारयन्पुत्रमब्रवीच्छान्तनोः सुतः ।
दुर्योधन विजानीहि स्थिरो भूत्वा विशाम्पते ॥ २५ ॥
पूर्वकालं तव मया प्रतिज्ञातं महाबल ।
हत्वा दशसहस्राणि क्षत्रियाणां महात्मनाम् ॥ २६ ॥
संग्रामाद्व्यपयातव्यमेतत्कर्म ममाऽऽह्निकम् ।
इति तत्कृतवांश्चाऽहं यथोक्तं भरतर्षभ ॥ २७ ॥

पितामह भीष्म के पास जाकर कहा—हे पितामह ! दावानल जैसे जङ्गल को भस्म कर देता है वैसे ही अर्जुन हमारी सेना को बाणों की वर्षा से भस्म कर रहे हैं। यह देखिए, मेरी सेना बारम्बार हर स्थान अर्जुन के प्रहार से पीड़ित होकर भाग रही है ॥१५।१७॥ हे शत्रुतापन ! पशुपाल जैसे वन में पशुओं को पीटता है वैसे ही अर्जुन मेरी सेना को पीड़ा पहुँचा रहे हैं। एक तो अर्जुन ही उनको मारकर भगा रहे हैं, उस पर भीमसेन, सात्यकि, चेकितान, नकुल, सहदेव, महारथी अभिमन्यु, महारथी धृष्टद्युम्न और राक्षस घटोत्कच भी उन्हें मार रहे हैं ॥१८।२१॥ हे महारथी ! आप देवतुल्य पराक्रमी हैं। आपके अतिरिक्त इस भागती हुई सेना को और कोई नहीं फेर सकता। न तो कोई इन्हें युद्ध में ठहरा सकता है, और न पाण्डवसेना के इन महारथियों से युद्ध ही कर सकता है। इसलिए आप शीघ्रता के साथ मेरी सेना की रक्षा कीजिए ॥२२।२३॥ हे राजेन्द्र ! देवव्रत भीष्म दुर्योधन के ये वचन सुनकर, क्षणभर विचारकर, उन्हें समझाते और धैर्य देते हुए बोले—हे दुर्योधन ! तुम ध्यान से मेरी बात सुनो। मैंने पहले तुम्हारे आगे प्रतिज्ञा की थी कि मैं प्रतिदिन दस सहस्र योद्धा मारकर युद्ध से लौटूँगा। हे पुत्र ! मैंने जो प्रतिज्ञा की थी, उसे पूर्ण करता रहा हूँ। मैं आज भी युद्ध में बहुत बड़ा कार्य करूँगा। आज

अद्य चाऽपि महत्कर्म प्रकरिष्ये महाबल ।
अहं वाऽद्य हतः शेष्ये हनिष्ये वाऽद्य पाण्डवान् ॥ २८ ॥
अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणं तव ।
भर्तृपिण्डकृतं राजन्निहतः पृतनामुखे ॥ २९ ॥
इत्युक्त्वा भरतश्रेष्ठ क्षत्रियान्प्रवपञ्छरैः ।
आससाद दुराधर्षः पाण्डवानामनीकिनीम् ॥ ३० ॥
अनीकमध्ये तिष्ठन्तं गाङ्गेयं भरतर्षभ ।
आशीविषमिव क्रुद्धं पाण्डवाः प्रत्यवारयन् ॥ ३१ ॥
दशमेऽहनि भीष्मस्तु दर्शयञ्शक्तिमात्मनः ।
राजञ्शतसहस्राणि सोऽवधीत्कुरुनन्दन ॥ ३२ ॥
पञ्चालानां च ये श्रेष्ठा राजपुत्रा महारथाः ।
तेषामादत्त तेजांसि जलं सूर्य इवांऽशुभिः ॥ ३३ ॥
हत्वा दशसहस्राणि कुञ्जराणां तरस्विनाम् ।
सारोहाणां महाराज हयानां चाऽयुतं तथा ॥ ३४ ॥
पूर्णे शतसहस्रे द्वे पादातानां नरोत्तमः ।
प्रजज्वाल रणे भीष्मो विधूम इव पावकः ॥ ३५ ॥
न चैनं पाण्डवेयानां केचिच्छेकुर्निरीक्षितुम् ।
उत्तरं मार्गमास्थाय तपन्तमिव भास्करम् ॥ ३६ ॥
ते पाण्डवेयाः संरब्धा महेष्वासेन पीडिताः ।
वधायाऽभ्यद्रवन्भीष्मं सृञ्जयाश्च महारथाः ॥ ३७ ॥

या तो मुझे पाण्डवगण मारेंगे और या मैं उनको मारूँगा। दो में एक बात तो अवश्य होगी। आज मैं युद्धभूमि की वीरशय्या पर सोकर, अथवा पाण्डवों को ही सुलाकर, प्रभु का ऋण चुकाऊँगा ॥२४।२९॥ महाबली भीष्म दुर्योधन से इतना कहकर क्षत्रियों पर बाण बरसाते हुए पाण्डवों की सेना पर वेग से आक्रमण करने चले। पाण्डवों की सेना उनके आक्रमण से तितर-बितर होने लगी। तब पाण्डवगण भी अपनी सेना के मध्य में प्रवेश होते हुए, क्रुद्ध नागराज के समान, भीष्म को घेरकर रोकने की चेष्टा करने लगे। हे कौरव! दसवें दिन भीष्म ने अपने पराक्रम के अनुसार देखते ही देखते शत सहस्र सेना का नाश कर डाला। जैसे सूर्य अपनी किरणों से पृथ्वी का रस (जल) खींचते हैं वैसे ही भीष्म अपने बाणों से पाञ्चालों के तेज, उत्साह और प्राणों को हरने लगे ॥३०।३३॥ हे राजेन्द्र! वे सवारों सहित दस सहस्र घोड़ों, इतने ही वेगशाली हाथियों और दो लाख पैदलों को मारकर युद्धभूमि में जलती हुई अग्नि के समान देख पड़ने लगे। पाण्डवों में से कोई भी उन उत्तरायण में तप रहे सूर्य के समान तेजस्वी प्रतापी भीष्म की ओर अच्छी प्रकार नेत्र उठाकर देख तक भी नहीं सकता था। महाधनुर्द्धर भीष्म के द्वारा इस प्रकार पीडित होने पर सब पाञ्चाल और पाण्डव मिलकर उन्हें मारने के लिए उनपर आक्रमण

संयुद्ध्यमानो वहुभिर्भीष्मः शान्तनवस्तथा ।
अवकीर्णो महामेरुः शैलो मेघैरिवाऽऽवृतः ॥ ३८ ॥
पुत्रास्तु तव गाङ्गेयं समन्तात्पर्यवारयन् ।
महत्या सेनया सार्द्धं ततो युद्धमवर्तत ॥ ३९ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मदुर्योधनसंवादे नवाधिकशततमोऽध्याय. ॥ १०९ ॥

करने दौड़े। उस समय योद्धाओं से घिरे हुए भीष्म काले मेघों से घिरे हुए स्वर्ण गिरि सुमेरु के समान शोभायमान हुए। आपके पुत्रगण भी भारी सेना के साथ एकत्र होकर भीष्म के चारों ओर आकर उनकी रक्षा करने लगे। इसके अनन्तर फिर घोर संग्राम होने लगा ॥३४।३९॥

भीष्मपर्व का एक सौ नौ अध्याय समाप्त हुआ ॥ १०९ ॥

अथ दशाधिकशततमोऽध्यायः ॥ ११० ॥

सञ्जय उवाच—अर्जुनस्तु रणे राजन्दृष्ट्वा भीष्मस्य विक्रमम् ।
शिखण्डिनमथोवाच समभ्येहि पितामहम् ॥ १ ॥
न चापि भीस्त्वया कार्या भीष्मादद्य कथञ्चन ।
अहमेनं शरैस्तीक्ष्णैः पातयिष्ये रथोत्तमात् ॥ २ ॥
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ ।
अभ्यद्रवत गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ३ ॥
धृष्टद्युम्नस्तथा राजन्सौभद्रश्च महारथः ।
हृष्टावाद्रवतां भीष्मं श्रुत्वा पार्थस्य भाषितम् ॥ ४ ॥
विराटद्रुपदौ वृद्धौ कुन्तिभोजश्च दंशितः ।
अभ्यद्रवत गाङ्गेयं पुत्रस्य तव पश्यतः ॥ ५ ॥
नकुलः सहदेवश्च धर्मराजश्च वीर्यवान् ।
तथेतराणि सैन्यानि सर्वाण्येव विशाम्पते ॥ ६ ॥
समाद्रवन्त गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ।
प्रत्युद्ययुस्तावकाश्च समेतांस्तान्महारथान् ॥ ७ ॥

एक सौ दस अध्याय ॥ ११० ॥

सञ्जय ने कहा कि हे महाराज ! अर्जुन ने संग्राम में भीष्म का पराक्रम देखकर शिखण्डी से कहा—हे शिखण्डी ! तुम भीष्म के साथ युद्ध करो। आज उनसे बिलकुल मत भयभीत होओ। मैं तीक्ष्ण बाण मारकर आज उन्हें श्रेष्ठ रथ पर से गिरा दूँगा ॥१।२॥ हे राजा धृतराष्ट्र ! तब शिखण्डी अर्जुन के ये वचन सुनकर भीष्म की ओर रथ बढ़ाकर शीघ्रता के साथ चले। सेनापति धृष्टद्युम्न और अभिमन्यु भी आगे बढ़े। वृद्ध राजा विराट, द्रुपद और कुन्तिभोज कवच पहनकर आपके पुत्र के सन्मुख ही पितामह भीष्म पर आक्रमण करने के लिए आगे बढ़े। नकुल, सहदेव, महावीर्यशाली धर्मराज और अन्य सब योद्धाओं

यथाशक्ति यथोत्साहं तन्मे निगदतः शृणु ।
चित्रसेनो महाराज चेकितानं समभ्ययात् ॥ ८ ॥
भीष्मप्रेप्सुं रणे यान्तं वृषं व्याघ्रशिशुर्यथा ।
धृष्टद्युम्नं महाराज भीष्मान्तिकमुपागतम् ॥ ९ ॥
त्वरमाणं रणे यत्तं कृतवर्मा न्यवारयत् ।
भीमसेनं सुसंक्रुद्धं गाङ्गेयस्य वधैषिणम् ॥ १० ॥
त्वरमाणो महाराज सौमदत्तिर्न्यवारयत् ।
तथैव नकुलं शूरं किरन्तं सायकान्बहून् ॥ ११ ॥
विकर्णो वारयामास इच्छन्भीष्मस्य जीवितम् ।
सहदेवं तथा राजन्यांतं भीष्मरथं प्रति ॥ १२ ॥
वारयामास संक्रुद्धः कृपः शारद्वतो युधि ।
राक्षसं क्रूरकर्माणं भैमसेनिं महाबलम् ॥ १३ ॥
भीष्मस्य निधनं प्रेप्सुं दुर्मुखोऽभ्यद्रवद्बली ।
सात्यकिं समरे यान्तं तव पुत्रो न्यवारयत् ॥ १४ ॥
अभिमन्युं महाराज यान्तं भीष्मरथं प्रति ।
सुदक्षिणो महाराज काम्बोजः प्रत्यवारयत् ॥ १५ ॥
विराटद्रुपदौ वृद्धौ समेतावरिमर्दनौ ।
अश्वत्थामा ततः क्रुद्धो वारयामास भारत ॥ १६ ॥
तथा पाण्डुसुतं ज्येष्ठं भीष्मस्य वधकांक्षिणं ।
भारद्वाजो रणे यत्तो धर्मपुत्रमवारयत् ॥ १७ ॥
अर्जुनं रभसं युद्धे पुरस्कृत्य शिखण्डिनम् ।
भीष्मप्रेप्सुं महाराज भासयन्तं दिशो दश ॥ १८ ॥

ने मिलकर भीष्म पर आक्रमण किया ॥३।७॥ हे राजेन्द्र ! आपके पक्ष के सब योद्धाओं ने शत्रुपक्ष के वीरों को जिस प्रकार रोका, जिस प्रकार उन पर यथाशक्ति उत्साह के साथ आक्रमण किया, सो सुनिए। भीष्म से युद्ध करने के लिए जानेवाले चेकितान को, बैल को व्याघ्र बालक के समान, चित्रसेन ने रोका। भीष्म के पास शीघ्रता से जानेवाले और उन पर प्रहार करने का यत्न कर रहे धृष्टद्युम्न को कृतवर्मा ने रोका। भीष्म के वध की इच्छा से आगे जानेवाले क्रुद्ध भीमसेन को भूरिश्रवा ने स्फूर्ति के साथ रोका। अनेक बाण बरसाते हुए शूर नकुल को भीष्म का जीवन चाहनेवाले विकर्ण ने रोका ॥७।१२॥ भीष्म के रथ के पास जाते हुए सहदेव को कुपित कृपाचार्य ने रोका। क्रूरकर्मा महाबली घटोत्कच को भीष्म के मारने के लिए उद्यत देखकर बली राजकुमार दुर्मुख ने आगे बढ़कर रोक लिया। क्रुद्ध सात्यकि को दुर्योधन ने रोका। भीष्म के रथ के पास जानेवाले अभिमन्यु को काम्बोजनरेश सुदक्षिण

दुःशासनो महेष्वासो वारयामास संयुगे ।
अन्ये च तावका योधाः पाण्डवानां महारथान् ॥ १९ ॥
भीष्मस्याऽभिमुखान्यातान्वारयामासुराहवे ।
धृष्टद्युम्नस्तु सैन्यानि प्राक्रोशंस्तु पुनः पुनः ॥ २० ॥
अभ्यद्रवत संरब्धो भीष्ममेकं महारथः ।
एषोऽर्जुनो रणे भीष्मं प्रयाति कुरुनन्दन ॥ २१ ॥
अभ्यद्रवत मा भैष्ट भीष्मो हि प्राप्स्यते न वः ।
अर्जुनं समरे योद्धुं नोत्सहेतापि वासवः ॥ २२ ॥
किमु भीष्मो रणे वीरा गतसत्त्वोऽल्पजीवितः ।
इति सेनापतेः श्रुत्वा पाण्डवानां महारथाः ॥ २३ ॥
अभ्यद्रवन्त संहृष्टा गाङ्गेयस्य रथं प्रति ।
आगच्छमानान्समरे वार्योघान्प्रलयानिव ॥ २४ ॥
अवारयन्त संहृष्टास्तावकाः पुरुषर्षभाः ।
दुःशासनो महाराज भयं त्यक्त्वा महारथः ॥ २५ ॥
भीष्मस्य जीविताकांक्षी धनञ्जयमुपाद्रवत् ।
तथैव पाण्डवाः शूरा गाङ्गेयस्य रथं प्रति ॥ २६ ॥
अभ्यद्रवन्त संग्रामे तव पुत्रान्महारथाः ।
तत्राऽद्भुतमपश्याम चित्ररूपं विशाम्पते ॥ २७ ॥
दुःशासनरथं प्राप्य यत्पार्थो नाऽत्यवर्तत ।
यथा वारयते वेला क्षुब्धतोयं महार्णवम् ॥ २८ ॥

ने रोका ॥१३।१५॥ शत्रुदमन राजा विराट और
वृद्ध द्रुपद को अश्वत्थामा ने रोका । भीष्म का वध
चाहनेवाले ज्येष्ठ पाण्डव युधिष्ठिर को द्रोणाचार्य ने
रोका । अपने तेज से दसों दिशाओं को प्रकाशित
कर रहे और शिखण्डी को आगे करके वेग से भीष्म
के सन्मुख जाते हुए अर्जुन को महाधनुर्द्धर दु शासन
ने रोका । इसी प्रकार भीष्म के सन्मुख जानेवाले
पाण्डव पक्ष के अन्य महारथियों को भी आपके
पक्ष के अन्य योद्धाओं ने भी रोका ॥१६।२०॥
हे महाराज ! अब धृष्टद्युम्न भी सब सैनिकों से यह
पुकारकर कहते हुए अकेले महारथी भीष्म की ओर
दौड़े कि "हे वीरो ! देखो ये अर्जुन भीष्म से युद्ध
करने जा रहे हैं; तुम लोग निर्भय होकर चलो और
आक्रमण करो । भीष्म के बाण तुम्हारे अङ्ग को छू भी
न सकेंगे । समर में अर्जुन से युद्ध करने का साहस
इन्द्र भी नहीं कर सकते, फिर भ्रष्टबुद्धि, क्षीणबल,
अल्प जीवनवाले भीष्म क्या उनका सामना कर सकेंगे ?"
॥२०।२३॥ पाण्डव पक्ष के महारथी लोग धृष्टद्युम्न
के ये वचन सुनकर प्रसन्नतापूर्वक भीष्म के रथ की
ओर दौड़े । आपके पक्ष के पुरुषश्रेष्ठ वीर भी प्रसन्नता
के साथ प्रवाह की तरह आते हुए शत्रुओं के वेग
को रोकने लगे । हे राजेन्द्र ! भीष्म के जीवन की रक्षा
करने के लिए महारथी दु:शासन निर्भय होकर अर्जुन
के सन्मुख आये । शूर पाण्डव भी उधर से भीष्म के

तथैव पाण्डवं क्रुद्धं तव पुत्रो न्यवारयत् ।
उभौ तौ रथिनां श्रेष्ठावुभौ भारत दुर्जयौ ॥ २९ ॥
उभौ चन्द्रार्कसदृशौ कान्त्या दीप्त्या च भारत ।
तथा तौ जातसंरम्भावन्योन्यवधकांक्षिणौ ॥ ३० ॥
समीयतुर्महासंख्ये मयशक्रौ यथा पुरा ।
दुःशासनो महाराज पाण्डवं विशिखैस्त्रिभिः ॥ ३१ ॥
वासुदेवं च विंशत्या ताडयामास संयुगे ।
ततोऽर्जुनो जातमन्युर्वार्ष्णेयं वीक्ष्य पीडितम् ॥ ३२ ॥
दुःशासनं शतेनाऽऽजौ नाराचानां समार्पयत् ।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ॥ ३३ ॥
दुःशासनस्त्रिभिः क्रुद्धः पार्थं विव्याध पत्रिभिः ।
ललाटे भरतश्रेष्ठ शरैः सन्नतपर्वभिः ॥ ३४ ॥
ललाटस्थैस्तु तैर्बाणैः शुशुभे पाण्डवो रणे ।
यथा मेरुर्महाराज श‍ृङ्गैरत्यर्थमुच्छ्रितैः ॥ ३५ ॥
सोऽतिविद्धो महेष्वासः पुत्रेण तव धन्विना ।
व्यराजत रणे पार्थः किंशुकः पुष्पवानिव ॥ ३६ ॥
दुःशासनं ततः क्रुद्धः पीडयामास पाण्डवः ।
पर्वणीव सुसंक्रुद्धो राहुः पूर्णं निशाकरम् ॥ ३७ ॥
पीड्यमानो बलवता पुत्रस्तव विशाम्पते ।
विव्याध समरे पार्थं कङ्कपत्रैः शिलाशितैः ॥ ३८ ॥

रथ के पास पहुँचने के लिए आपके पुत्रों पर आक्रमण करने को बढ़े। ॥२३।२७॥ उस समय वहाँ पर हमने यह एक विचित्र बात देखी कि दुःशासन के रथ के पास पहुँचकर अर्जुन फिर आगे नहीं बढ़ सके। जैसे तटभूमि क्षोभ को प्राप्त समुद्र के वेग को रोक लेती है, वैसे ही वीर दुःशासन ने क्रुद्ध अर्जुन को रोक लिया। वे दोनों ही श्रेष्ठ रथी, दुर्जय, चन्द्र के समान सुन्दर और सूर्य के समान तेजस्वी थे। दोनों ही कुपित होकर परस्पर मार डालने की इच्छा से मयासुर और इन्द्र के समान आक्रमण करने लगे। ॥२७।३१॥ हे महाराज! दुःशासन ने अर्जुन को तीन और श्रीकृष्ण को बीस तीक्ष्ण बाण मारे। अर्जुन ने श्रीकृष्ण को पीडित देखकर क्रोध करके दुःशासन को एक सौ नाराच बाण मारे। वे नाराच बाण दुःशासन के सुदृढ कवच को तोड़कर उनके शरीर का रक्त पीने लगे। तब दुःशासन ने अत्यन्त कुपित होकर तीक्ष्ण तीन बाण अर्जुन के मस्तक में मारे। ॥३२।३४॥ मस्तक में प्रवेश हुए हुए उन तीन बाणों से वीर अर्जुन उन्नत शिखरवाले सुमेरु पर्वत, अथवा फूले हुए ढाक के पेड़ के समान बहुत ही शोभायमान हुए। राहु जैसे पर्व के समय चन्द्रमा को सताता है, वैसे ही अर्जुन भी दुःशासन को बाणवर्षा में छिपाकर पीड़ा पहुँचाने लगे। ॥३५।३७॥ उन बाणों से पीडित होकर दुःशासन ने बहुत से कङ्कपत्रयुक्त, शिला पर रगड़-

तस्य पार्थो धनुश्छित्त्वा रथं चाऽस्य त्रिभिः शरैः ।
आजघान ततः पश्चात्पुत्रं ते निशितैः शरैः ॥ ३९ ॥
सोऽन्यत्कार्मुकमादाय भीष्मस्य प्रमुखे स्थितः ।
अर्जुनं पञ्चविंशत्या बाह्वोरुरसि चाऽर्पयत् ॥ ४० ॥
तस्य क्रुद्धो महाराज पाण्डवः शत्रुतापनः ।
अप्रैषीद्विशिखान्घोरान्यमदण्डोपमान्बहून् ॥ ४१ ॥
अप्राप्तानेव तान्बाणांश्चिच्छेद तनयस्तव ।
यतमानस्य पार्थस्य तदद्भुतमिवाऽभवत् ॥ ४२ ॥
पार्थं च निशितैर्बाणैरविध्यत्तनयस्तव ।
ततः क्रुद्धो रणे पार्थः शरान्सन्धाय कार्मुके ॥ ४३ ॥
प्रेषयामास समरे स्वर्णपुङ्खाञ्छिलाशितान् ।
न्यमज्जंस्ते महाराज तस्य काये महात्मनः ॥ ४४ ॥
यथा हंसा महाराज तडागं प्राप्य भारत ।
पीडितश्चैव पुत्रस्ते पाण्डवेन महात्मना ॥ ४५ ॥
हित्वा पार्थं रणे तूर्णं भीष्मस्य रथमाव्रजत् ।
अगाधे मज्जतस्तस्य द्वीपो भीष्मोऽभवत्तदा ॥ ४६ ॥
प्रतिलभ्य ततः संज्ञां पुत्रस्तव विशाम्पते ।
अवारयत्ततः शूरो भूय एव पराक्रमी ॥ ४७ ॥
शरैः सुनिशितैः पार्थं यथा वृत्रं पुरन्दरः ।
निर्बिभेद महाकायो विव्यथे नैव चाऽर्जुनः ॥ ४८ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि अर्जुनदुःशासनसमागमे दशाधिकशततमोऽध्यायः ॥ ११० ॥

पर तीक्ष्ण किये गये बाणों से अर्जुन को घायल किया । अर्जुन ने तीन बाणों से दुःशासन का धनुष काटकर रथ भी काट डाला । तब दुःशासन ने दूसरा धनुष लेकर पचीस बाण अर्जुन के हाथों और वक्षःस्थल में मारे । ॥३८।४०॥ इसके अनन्तर अर्जुन क्रुद्ध होकर यमदण्डतुल्य असह्य असह्य बाण दुःशासन को मारने लगे । किन्तु वे बाण पास तक नहीं पहुँचने पाये और दुःशासन ने उन्हें काट डाला । इस प्रकार अर्जुन को विस्मित करके वे तीक्ष्ण बाणों से उनको पीड़ा पहुँचाने लगे । तब अर्जुन ने क्रोध से अधीर होकर असह्य सुवर्णपुङ्ख तीक्ष्ण बाण बरसाना प्रारम्भ किया । ॥४१।४४॥ अर्जुन के छोड़े हुए वे बाण तालाब में प्रवेश हो रहे हंसों के समान दुःशासन के दृढ़ शरीर में प्रवेश हो गये । दुःशासन बहुत ही पीड़ित और अचेत से होकर शीघ्रता के साथ, अर्जुन को छोड़कर भीष्म के रथ के पास चले गये । उस अथाह विपत्ति में डूब रहे दुःशासन के लिए भीष्म पितामह आश्रयस्वरूप द्वीप हो गये । महापराक्रमी दुःशासन क्षणभर में सचेत होकर उसी प्रकार तीक्ष्ण बाण बरसाकर अर्जुन को रोकने लगे, जैसे इन्द्र ने वृत्रासुर को रोका था । किन्तु इससे अर्जुन न तो तनिक भी व्यथित ही हुए और न संग्राम से विमुख हुए ॥४४।४८॥

भीष्मपर्व का एक सौ दस अध्याय समाप्त हुआ ॥ ११० ॥

अथ एकादशाधिकशततमोऽध्याय ॥ १११ ॥

सञ्जय उवाच—सात्यकिं दंशितं युद्धे भीष्मायाऽभ्युद्यतं रणे ।
आर्ष्यश्रृङ्गिर्महेष्वासो वारयामास संयुगे ॥ १ ॥
माधवस्तु सुसंक्रुद्धो राक्षसं नवभिः शरैः ।
आजघान रणे राजन्प्रहसन्निव भारत ॥ २ ॥
तथैव राक्षसो राजन्माधवं नवभिः शरैः ।
अर्दयामास राजेन्द्र संक्रुद्धः शिनिपुङ्गवम् ॥ ३ ॥
शैनेयः शरसङ्घं तु प्रेषयामास संयुगे ।
राक्षसाय सुसंक्रुद्धो माधवः परवीरहा ॥ ४ ॥
ततो रक्षो महाबाहुं सात्यकिं सत्यविक्रमम् ।
विव्याध विशिखैस्तीक्ष्णैः सिंहनादं ननाद च ॥ ५ ॥
माधवस्तु भृशं विद्धो राक्षसेन रणे तदा ।
धार्यमाणश्च तेजस्वी जहास च ननाद च ॥ ६ ॥
भगदत्तस्ततः क्रुद्धो माधवं निशितैः शरैः ।
ताडयामास समरे तोत्रैरिव महागजम् ॥ ७ ॥
विहाय राक्षसं युद्धे शैनेयो रथिनां वरः ।
प्राग्ज्योतिषाय चिक्षेप शरान्सन्नतपर्वणः ॥ ८ ॥
तस्य प्राग्ज्योतिषो राजा माधवस्य महद्धनुः ।
चिच्छेद शतधारेण भल्लेन कृतहस्तवत् ॥ ९ ॥
अथाऽन्यद्धनुरादाय वेगवत्परवीरहा ।
भगदत्तं रणे क्रुद्धं विव्याध निशितैः शरैः ॥ १० ॥

---

एक सौ ग्यारह अध्याय ॥ १११ ॥

सञ्जय कहते हैं—हे महाराज ! कवचधारी वीर सात्यकि को भीष्म पर आक्रमण करने के लिए उद्यत देखकर महाधनुर्द्धर राक्षस अलम्बुष उन्हें रोकने लगा। सात्यकि ने अत्यन्त क्रुद्ध होकर नव बाण अलम्बुष को मारे। तब राक्षस ने भी अत्यन्त कुपित होकर सात्यकि को नव बाण मारे ॥१।३॥ सात्यकि ने क्रुद्ध होकर राक्षस के ऊपर असंख्य बाण छोड़े। हे महाराज ! अलम्बुष भी तीक्ष्ण बाणों से सात्यकि को पीडित करके सिंहनाद करने लगा। राक्षस के बाणों से अत्यन्त पीडित होकर भी तेजस्वी सात्यकि धैर्य धारण करके हँसते हुए सिंहनाद करने लगे। जैसे गजराज को कोई बारम्बार अङ्कुश का प्रहार करे वैसे ही क्रुद्ध भगदत्त आकर सात्यकि को अनेक तीक्ष्ण बाण मारने लगे ॥४।७॥ तब रथियों में श्रेष्ठ सात्यकि उस राक्षस को छोड़कर प्राग्ज्योतिषपति भगदत्त के ऊपर सुतीक्ष्ण शीघ्रगामी बाण बरसाने लगे। भगदत्त ने हाथ की स्फूर्त्ति दिखाकर तीक्ष्ण भल्ल बाण से सात्यकि का बड़ा भारी धनुष काट डाला। शत्रुनाशन सात्यकि उसी क्षण दूसरा धनुष लेकर भगदत्त को अति तीक्ष्ण बाणों से घायल करने

सोऽतिविद्धो महेष्वासः सृक्किणी परिसंलिहन् ।
शक्तिं कनकवैदूर्यभूषितामायसीं दृढाम् ॥ ११ ॥
यमदण्डोपमां घोरां चिक्षेप परमाहवे ।
तामापतन्तीं सहसा तस्य बाहुबलेरिताम् ॥ १२ ॥
सात्यकिः समरे राजन्द्विधा चिच्छेद सायकैः ।
ततः पपात सहसा महोल्केव हतप्रभा ॥ १३ ॥
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते ।
महता रथवंशेन वारयामास माधवम् ॥ १४ ॥
तथा परिवृतं दृष्ट्वा वार्ष्णेयानां महारथम् ।
दुर्योधनो भृशं क्रुद्धो भ्रातॄन्सर्वानुवाच ह ॥ १५ ॥
तथा कुरुत कौरव्या यथा वः सात्यको युधि ।
न जीवन्प्रतिनिर्याति महतोऽस्माद्रथव्रजात् ॥ १६ ॥
तस्मिन्हते हतं मन्ये पाण्डवानां महद्बलम् ।
तथेति च वचस्तस्य परिगृह्य महारथाः ॥ १७ ॥
शैनेयं योधयामासुर्भीष्मायाऽभ्युद्यतं रणे ।
काम्बोजराजो बलवान्वारयामास संयुगे ॥ १८ ॥
आर्जुनिं नृपतिर्विद्ध्वा शरैः सन्नतपर्वभिः ।
पुनरेव चतुःषष्ट्या राजन्विव्याध तं नृप ॥ १९ ॥
सुदक्षिणस्तु समरे पुनर्विव्याध पञ्चभिः ।
सारथिं चाऽस्य नवभिरिच्छन्भीष्मस्य जीवितम् ॥ २० ॥

लगे ॥८।१०॥ महाधनुर्धर भगदत्त का शरीर सात्यकि के बाणों से जर्जर हो गया । वे क्रोध के मारे होंठ चाटने लगे । सुवर्ण और वैदूर्यमणि से शोभित, यमदण्डसदृश भयङ्कर एक लोहमयी शक्ति उन्होंने तानकर सात्यकि को मारी । महावीर सात्यकि ने उसी क्षण एक तीक्ष्ण बाण से उसके दो टुकड़े कर डाले । यह कटी हुई शक्ति प्रभाहीन महाउल्का की तरह पृथ्वी पर गिर पड़ी ॥११।१३॥ महाराज दुर्योधन ने भगदत्त की शक्ति को व्यर्थ होते देखकर असंख्य रथसेना से सात्यकि को घेरकर भाइयों से कहा—हे भाइयो ! ऐसा यत्न करो कि सात्यकि जीते-जी इस रथ-घेरे से बाहर न निकलने पावे । मैं समझता हूँ, सात्यकि के मरने पर पाण्डवों के बल का बहुत बड़ा भाग नष्ट हो जायगा ॥१४।१७॥ हे राजेन्द्र ! यह सुनकर आपके सब महारथी कुमार, बड़े भाई की आज्ञा के अनुसार, भीष्म से युद्ध करने के लिए उद्यत सात्यकि के साथ युद्ध करने लगे । काम्बोजराज महावीर सुदक्षिण पितामह भीष्म के सम्मुख जाते हुए अभिमन्यु को रोकने लगे । अमित पराक्रमी अभिमन्यु ने पहले बहुत से बाण मारकर पीछे चौंसठ तीक्ष्ण बाण सुदक्षिण को मारे । सुदक्षिण ने भी, भीष्म के प्राणों की रक्षा के अभिप्राय से अभिमन्यु को रोकने के लिए पाँच बाण उनको और नव बाण सारथी को मारे ॥१७।२०॥ हे राजेन्द्र ! वे दोनों [illegible]

तद्युद्धमासीत्सुमहत्तयोस्तत्र समागमे ।
यदाऽभ्यधावद्गाङ्गेयं शिखण्डी शत्रुकर्शनः ॥ २१ ॥
विराटद्रुपदौ वृद्धौ वारयन्तौ महाचमूम् ।
भीष्मं च युधि संरब्धावाद्रवन्तौ महारथौ ॥ २२ ॥
अश्वत्थामा रणे क्रुद्धः समियाद्रथसत्तमः ।
ततः प्रववृते युद्धं तयोस्तस्य च भारत ॥ २३ ॥
विराटो दशभिर्भल्लैराजघान परन्तप ।
यतमानं महेष्वासं द्रौणिमाहवशोभिनम् ॥ २४ ॥
द्रुपदश्च त्रिभिर्बाणैर्विव्याध निशितैस्तदा ।
गुरुपुत्रं समासाद्य प्रहरन्तौ महाबलौ ॥ २५ ॥
अश्वत्थामा ततस्तौ तु विव्याध बहुभिः शरैः ।
विराटद्रुपदौ वीरौ भीष्मं प्रति समुद्यतौ ॥ २६ ॥
तत्राऽद्भुतमपश्याम वृद्धयोश्चरितं महत् ।
यद् द्रौणिसायकान्घोरान्प्रत्यवारयतां युधि ॥ २७ ॥
सहदेवं तथा यान्तं कृपः शारद्वतोऽभ्ययात् ।
यथा नागो वने नागं मत्तो मत्तमुपाद्रवत् ॥ २८ ॥
कृपश्च समरे शूरो माद्रीपुत्रं महारथम् ।
आजघान शरैस्तूर्णं सप्तत्या रुक्मभूषणैः ॥ २९ ॥
तस्य माद्रीसुतश्चापं द्विधा चिच्छेद सायकैः ।
अथैनं छिन्नधन्वानं विव्याध नवभिः शरैः ॥ ३० ॥
सोऽन्यत्कार्मुकमादाय समरे भारसाधनम् ।
माद्रीपुत्रं सुसंहृष्टो दशभिर्निशितैः शरैः ॥ ३१ ॥

प्रकार भयङ्कर संग्राम करने लगे। जब भीष्म पर आक्रमण करने को शिखण्डी आगे बढ़े तब महारथी विराट और द्रुपद क्रोध से अधीर होकर कौरवों की भारी सेना को छिन्न भिन्न करते हुए भीष्म की ओर चले। उधर से महावीर अश्वत्थामा कुपित होकर उनके सन्मुख आये। उक्त दोनों वीर राजाओं के साथ अश्वत्थामा घोर संग्राम करने लगे ॥२१।२३॥ विराट ने दस भल्ल बाण और द्रुपद ने तीन तीक्ष्ण बाण अश्वत्थामा को मारे। अश्वत्थामा भी दोनों वीर राजाओं को निरन्तर असंख्य बाणों से घायल कर रहे थे। परन्तु आश्चर्य की बात यह है कि दोनों वीर राजा, वृद्ध होने पर भी अनायास अश्वत्थामा के शीघ्रगामी दारुण बाणों को काटते ही चले जाते थे ॥२४।२७॥ मदोन्मत्त जङ्गली हाथी जैसे दूसरे जङ्गली हाथी पर आक्रमण करता है, वैसे ही वीर कृपाचार्य ने महारथी सहदेव के पास जाकर उनको सुवर्णभूषित सत्तर बाण मारे। सहदेव ने बाणों से कृपाचार्य का धनुष काट डाला और नव बाण मारे ॥२८।३०॥ महावीर कृपाचार्य ने भीष्म

आजघानोरसि क्रुद्ध इच्छन्भीष्मस्य जीवितम् ।
तथैव पाण्डचो राजञ्छारद्वतममर्पणम् ॥ ३२ ॥
आजघानोरसि क्रुद्धो भीष्मस्य वधकांक्षया ।
तयोर्युद्धं समभवद्धोररूपं भयावहम् ॥ ३३ ॥
नकुलं तु रणे क्रुद्धो विकर्णः शत्रुतापनः ।
विव्याध सायकैः षष्ट्या रक्षन्भीष्मं महाबलम् ॥ ३४ ॥
नकुलोऽपि भृशं विद्धस्तव पुत्रेण धीमता ।
विकर्णं सप्तसप्तत्या निर्बिभेद शिलीमुखैः ॥ ३५ ॥
तत्र तौ नरशार्दूलौ भीष्महेतोः परन्तपौ ।
अन्योन्यं जघ्नतुर्वीरौ गोष्ठे गोवृषभाविव ॥ ३६ ॥
घटोत्कचं रणे यान्तं निघ्नन्तं तव वाहिनीम् ।
दुर्मुखः समरे प्रायाद्भीष्महेतोः पराक्रमी ॥ ३७ ॥
हैडिम्बस्तु रणे राजन्दुर्मुखं शत्रुतापनम् ।
आजघानोरसि क्रुद्धः शरेणाऽऽनतपर्वणा ॥ ३८ ॥
भीमसेनसुतं चापि दुर्मुखः सुमुखैः शरैः ।
षष्ट्या वीरो नदन्हृष्टो विव्याध रणमूर्धनि ॥ ३९ ॥
धृष्टद्युम्नं तथा यान्तं भीष्मस्य वधकांक्षिणम् ।
हार्दिक्यो वारयामास रथश्रेष्ठं महारथः ॥ ४० ॥
हार्दिक्यः पार्षतं चापि विध्वा पञ्चभिरायसैः ।
पुनः पञ्चाशता तूर्णं तिष्ठ तिष्ठेति चाऽब्रवीत् ॥ ४१ ॥
आजघान महाबाहुः पार्षतं तं महारथम् ।
तं चैव पार्षतो राजन्हार्दिक्यं नवभिः शरैः ॥ ४२ ॥

का जीवन बचाने के लिए उसी क्षण दूसरा दृढ धनुष लेकर सहदेव की छाती में दस बाण मारे। सहदेव ने भी भीष्मवध की इच्छा से, आगे बढ़ने के लिए, कृपाचार्य की छाती में कई बाण मारे। हे भारत! इस प्रकार वे दोनों वीर परस्पर कठिन युद्ध करने लगे ॥३१।३३॥ शत्रुनाशन विकर्ण ने क्रोध से उन्मत्त होकर नकुल को साठ बाण मारे। महात्मा नकुल ने इस प्रकार से अत्यन्त व्यथित होकर विकर्ण को बड़े वेग से सतत्तर बाण मारे। इस प्रकार दोनों वीर भीष्म की रक्षा और वध के लिए, मैदान में युद्ध करते हुए दो सांडों के समान, परस्पर प्रहार करने लगे ॥३५।३६॥ घटोत्कच भी कौरवसेना को मारकर भीष्म की ओर बढ़ रहा था, इसी समय पराक्रमी दुर्मुख राजकुमार उसके सन्मुख पहुँचे। घटोत्कच ने क्रोधवश होकर दुर्मुख की छाती में एक तेज बाण मारा। उसके बदले में दुर्मुख ने साठ बाण घटोत्कच की छाती में मारे ॥३७।३९॥ महात्मा धृष्टद्युम्न भी बड़े वेग के साथ भीष्म की ओर बढ़ते जा रहे थे।

विव्याध निशितैस्तीक्ष्णैः कङ्कपत्रैरजिह्मगैः ।
तयोः समभवद्युद्धं भीष्महेतोर्महाहवे ॥ ४३ ॥
अन्योन्यातिशये युक्तं यथा वृत्रमहेन्द्रयोः ।
भीमसेनं तथा यान्तं भीष्मं प्रति महारथम् ॥ ४४ ॥
भूरिश्रवाऽभ्ययात्तूर्णं तिष्ठ तिष्ठेति चाऽब्रवीत् ।
सौमदत्तिरथो भीममाजघान स्तनान्तरे ॥ ४५ ॥
नाराचेन सुतीक्ष्णेन रुक्मपुङ्खेन संयुगे ।
उरःस्थेन बभौ तेन भीमसेनः प्रतापवान् ॥ ४६ ॥
स्कन्दशक्त्या यथा क्रौञ्चः पुरा नृपतिसत्तम ।
तौ शरान्सूर्यसङ्काशान्कर्मारपरिमार्जितान् ॥ ४७ ॥
अन्योन्यस्य रणे क्रुद्धौ चिक्षिपाते नरर्षभौ ।
भीमो भीष्मवधाकांक्षी सौमदत्तिं महारथम् ॥ ४८ ॥
तथा भीष्मजये गृध्नुः सौमदत्तिस्तु पाण्डवम् ।
कृतप्रतिकृते यत्तौ योधयामासतू रणे ॥ ४९ ॥
युधिष्ठिरं तु कौन्तेयं महत्या सेनया वृतम् ।
भीष्माभिमुखमायान्तं भारद्वाजो न्यवारयत् ॥ ५० ॥
द्रोणस्य रथनिर्घोषं पर्जन्यनिनदोपमम् ।
श्रुत्वा प्रभद्रका राजन्समकम्पन्त मारिष ॥ ५१ ॥
सा सेना महती राजन्पाण्डुपुत्रस्य संयुगे ।
द्रोणेन वारिता यत्ता न चचाल पदात्पदम् ॥ ५२ ॥

---

महारथी कृतवर्मा ने सन्मुख आकर उनको रोका। धृष्टद्युम्न को कृतवर्मा ने पहले लोहमय पाँच बाण मारे, फिर पचास बाण उनकी छाती में मारे। अब धृष्टद्युम्न ने कृतवर्मा को कङ्कपत्रयुक्त नव बाण मारे ॥४०।४३॥ इस प्रकार भीष्म की रक्षा और वध के लिए वे दोनों वीर परस्पर घोर संग्राम करने लगे। महाबली भीमसेन भी शीघ्रता के साथ पितामह की ओर जा रहे थे। इसी समय "ठहरो, ठहरो" कहते हुए भूरिश्रवा स्फूर्त्ति के साथ उनके सन्मुख आये। उन्होंने आते ही तीक्ष्ण सुवर्णपुङ्ख नाराच बाण उनकी छाती में मारा। महाप्रतापी भीमसेन उस बाण से अत्यन्त पीड़ित होकर स्कन्द की शक्ति से विदीर्ण क्रौञ्च पर्वत के समान देख पड़े ॥४३।४७॥ इसके पश्चात् भीष्मवध के लिए उद्योग करनेवाले भीमसेन कुपित होकर सूर्य के समान चमकीले तीक्ष्ण बाण भूरिश्रवा को और भूरिश्रवा, भीष्म की रक्षा की इच्छा से, वैसे ही बाण भीमसेन को मारने लगे। इसी प्रकार यत्न के साथ दोनों वीर परस्पर युद्ध करने लगे ॥४७।४९॥ उधर राजा युधिष्ठिर भी सेना साथ लिये हुए भीष्म के सन्मुख जा रहे थे। उन्हें द्रोणाचार्य ने आकर रोका। प्रभद्रकगण द्रोणाचार्य के रथ का मेघगर्जन-सम शब्द सुनकर काँपने लगे। वह भारी सेना द्रोणाचार्य के बाणों से पीड़ित होकर पग भर भी आगे न बढ़ सकी ॥५०।५२॥ हे

चेकितानं रणे यत्तं भीष्मं प्रति जनेश्वर ।
चित्रसेनस्तव सुतः क्रुद्धरूपमवारयत् ॥ ५३ ॥
भीष्महेतोः पराक्रान्तश्चित्रसेनः पराक्रमी ।
चेकितानं परं शक्त्या योधयामास भारत ॥ ५४ ॥
तथैव चेकितानोऽपि चित्रसेनमवारयत् ।
तद्युद्धमासीत्सुमहत्तयोस्तत्र समागमे ॥ ५५ ॥
अर्जुनो वार्यमाणस्तु बहुशस्तत्र भारत ।
विमुखीकृत्य पुत्रं ते सेनां तव ममर्द ह ॥ ५६ ॥
दुःशासनोऽपि परया शक्त्या पार्थमवारयत् ।
कथं भीष्मं न नो हन्यादिति निश्चित्य भारत ॥ ५७ ॥
सा वध्यमाना समरे पुत्रस्य तव वाहिनी ।
लोड्यते रथिभिः श्रेष्ठैस्तत्र तत्रैव भारत ॥ ५८ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि द्वन्द्वयुद्धे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

राजेन्द्र ! आपके पुत्र चित्रसेन ने चेकितान का मार्ग रोका । दोनों वीर अपनी-अपनी शक्ति की पराकाष्ठा दिखाते हुए भयङ्कर संग्राम करने लगे ॥५३।५५॥ इधर दुःशासन भी यह चिन्ता करते हुए, कि किस प्रकार भीष्म के जीवन की रक्षा होगी, अर्जुन को रोकने की जी-जान से चेष्टा करने लगे। किन्तु बार-बार रोके जाने पर भी अन्त में दुःशासन को हटाकर अर्जुन आगे बढ़ ही गये और कौरवसेना को नष्ट-भ्रष्ट करने लगे । दुर्योधन की सेना भी इसी प्रकार स्थान-स्थान पर पराक्रम दिखाकर भी पाण्डव पक्ष की सेना के हाथों सताई जाने लगी ॥५६।५८॥

—०—

भीष्मपर्व का एक सौ ग्यारह अध्याय समाप्त हुआ ॥ १११ ॥

अथ द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

सञ्जय उवाच
अथ वीरो महेष्वासो मत्तवारणविक्रमः ।
समादाय महच्चापं मत्तवारणवारणम् ॥ १ ॥
विधुन्वानो नरश्रेष्ठो द्रावयाणो वरूथिनीम् ।
पृतनां पाण्डवेयानां गाहमानो महाबलः ॥ २ ॥
निमित्तानि निमित्तज्ञः सर्वतो वीक्ष्य वीर्यवान् ।
प्रतपन्तमनीकानि द्रोणः पुत्रमभाषत ॥ ३ ॥

अयं हि दिवसस्तात यत्र पार्थो महाबलः ।
जिघांसुः समरे भीष्मं परं यत्नं करिष्यति ॥ ४ ॥
उत्पतन्ति हि मे बाणा धनुः प्रस्फुरतीव च ।
योगमस्त्राणि गच्छन्ति क्रूरे मे वर्तते मतिः ॥ ५ ॥
दिक्ष्वशान्तानि घोराणि व्याहरन्ति मृगद्विजाः ।
नीचैर्गृध्रा निलीयन्ते भारतानां चमूं प्रति ॥ ६ ॥
नष्टप्रभ इवाऽऽदित्यः सर्वतो लोहिता दिशः ।
रसते व्यथते भूमिः कम्पतीव च सर्वशः ॥ ७ ॥
कङ्कगृध्रा बलाकाश्च व्याहरन्ति मुहुर्मुहुः ।
शिवाश्चैवाऽशिवा घोरा वेदयन्त्यो महद्भयम् ॥ ८ ॥
पपात महती चोल्का मध्येनाऽऽदित्यमण्डलात् ।
सकबन्धश्च परिघो भानुमावृत्य तिष्ठति ॥ ९ ॥
परिवेषस्तथा घोरश्चन्द्रभास्करयोरभूत् ।
वेदयानो भयं घोरं राज्ञां देहावकर्तनम् ॥ १० ॥
देवतायतनस्थाश्च कौरवेन्द्रस्य देवताः ।
कम्पन्ते च हसन्ते च नृत्यन्ति च रुदन्ति च ॥ ११ ॥
अपसव्यं ग्रहाश्चक्रुरलक्ष्माणं दिवाकरम् ।
अवाक्शिराश्च भगवानुपातिष्ठत चन्द्रमाः ॥ १२ ॥
वपूंषि च नरेन्द्राणां विगताभानि लक्षये ।
धार्तराष्ट्रस्य सैन्येषु न च भ्राजन्ति दंशिताः ॥ १३ ॥

प्रवृत्त अपने पुत्र अश्वत्थामा से कहा—हे बेटा ! यह वही दिन जान पड़ता है जिस दिन भीष्म को मारने के लिए महाबली अर्जुन परम यत्न करेंगे। क्योंकि आज मेरे बाण तरकस के भीतर से स्वयं बाहर निकले पड़ते हैं, धनुष फड़क रहा है। सब अस्त्र-शस्त्र प्रयोग करने पर भी प्रयुक्त नहीं होते और मेरी बुद्धि क्रूर कर्म में अनुरक्त हो रही है ॥३।५॥ सब दिशाओं में मृग और पक्षी अशान्त होकर घोर शब्द कर रहे हैं। गिद्ध नीचे होकर कौरवसेना के ऊपर मँडलाते हैं। सूर्य-मण्डल की प्रभा फीकी सी पड़ गई है। दिशाओं का रङ्ग लाल देख पड़ता है। पृथ्वी सब ओर शब्दायमान, व्यथित और कम्पित सी हो रही है। कङ्क, गिद्ध, बगले आदि पक्षी बारम्बार बोल रहे हैं। अशुभरूप गिदड़ियों और गीदड़ों के दल महाभय की सूचना देते हुए घोर शब्द कर रहे हैं ॥५।८॥ सूर्यमण्डल के मध्य से बड़ी-बड़ी उल्काएँ गिर रही हैं। कबन्ध चिह्नयुक्त मण्डल सूर्यबिम्ब के चारों ओर देख पड़ता है। यह उत्पात घोर भय की सूचना देता हुआ यह जता रहा है कि आज असंख्य राजा मारे जायँगे। चन्द्र और सूर्य के बिम्ब में मण्डल पड़ा हुआ है। धृतराष्ट्र के देव-मन्दिरों की देवमूर्तियाँ काँपती, हँसती नाचती और रोती सी हैं। प्रचण्ड लक्षणयुक्त सूर्य के बायें सब ग्रह स्थित हैं। चन्द्रमा औंधे उदित हुए हैं ॥८।१२॥ सब राजाओं के शरीर तेज और कान्ति

सेनयोरुभयोश्चापि समन्ताच्छ्रूयते महान् ।
पाञ्चजन्यस्य निर्घोषो गाण्डीवस्य च निःस्वनः ॥ १४ ॥
ध्रुवमास्थाय बीभत्सुरुत्तमास्त्राणि संयुगे ।
अपास्याऽन्यान्रणे योधानभ्येष्यति पितामहम् ॥ १५ ॥
हृष्यन्ति रोमकूपाणि सीदतीव च मे मनः ।
चिन्तयित्वा महाबाहो भीष्मार्जुनसमागमम् ॥ १६ ॥
तं चेह निकृतिप्रज्ञं पाञ्चाल्यं पापचेतसम् ।
पुरस्कृत्य रणे पार्थो भीष्मस्याऽऽयोधनं गतः ॥ १७ ॥
अब्रवीच्च पुरा भीष्मो नाऽहं हन्यां शिखण्डिनम् ।
स्त्री ह्येषा विहिता धात्रा दैवाच्च स पुनः पुमान् ॥ १८ ॥
अमङ्गल्यध्वजश्चैव याज्ञसेनिर्महाबलः ।
न चाऽमङ्गलिके तस्मिन्प्रहरेदापगासुतः ॥ १९ ॥
एतद्विचिन्तयानस्य प्रज्ञा सीदति मे भृशम् ।
अभ्युद्यतो रणे पार्थः कुरुवृद्धमुपाद्रवत् ॥ २० ॥
युधिष्ठिरस्य च क्रोधो भीष्मश्चाऽर्जुनसङ्गतः ।
मम चाऽस्त्रसमारम्भः प्रजानामशिवं ध्रुवम् ॥ २१ ॥
मनस्वी बलवाञ्शूरः कृतास्त्रो लघुविक्रमः ।
दूरपाती दृढेपुश्च निमित्तज्ञश्च पाण्डवः ॥ २२ ॥
अजेयः समरे चाऽपि देवैरपि सवासवैः ।
बलवान्बुद्धिमांश्चैव जितक्लेशो युधां वरः ॥ २३ ॥

से हीन देख पड़ते हैं। दुर्योधन की सेना में कवच-
धारी वीर शोभा को नहीं प्राप्त होते। दोनों सेनाओं
में चारों ओर पाञ्चजन्य शङ्ख और गाण्डीव धनुष
का भारी शब्द सुन पड़ता है। यह निश्चय है कि
आज अर्जुन युद्ध में दिव्य अस्त्रों के बल से सब
राजाओं को हराकर भीष्म के ऊपर आक्रमण करेंगे।
॥१३।१५॥ हे वत्स! महावीर भीष्म और अर्जुन
के युद्ध का विचार करने से मेरे रोंगटे खड़े हो रहे
हैं और मन में खेद की गहरी छाया पड़ रही है।
इस पाप विचारवाले, कपट में प्रवीण शिखण्डी को
आगे करके अर्जुन भीष्म से युद्ध करने गये हैं।
भीष्म की प्रतिज्ञा है कि वे अमङ्गलध्वज शिखण्डी
पर प्रहार नहीं करेंगे। क्योंकि शिखण्डी को विधाता
ने स्त्री रूप में उत्पन्न किया था, पीछे दैवयोग से
वह पुरुष हो गया। इसी से भीष्म उस पर प्रहार
नहीं करेंगे। [किन्तु वही शिखण्डी आज क्रुद्ध
होकर भीष्म पर आक्रमण कर रहा है।] यही सोचने
में मैं मूढ़ सा हो रहा हूँ ॥१६।१९॥ अर्जुन भीष्म
से युद्ध करने को चढ़ दौड़े हैं। युधिष्ठिर का कुपित
होना, भीष्म और अर्जुन का युद्ध होना और अस्त्रों
के प्रयोग के लिए मेरा उद्यम मात्र करना, किन्तु
पहले की तरह अस्त्रों का उपस्थित न होना, सूचित
करता है कि प्रजा का अमङ्गल अवश्य होगा। वीर
अर्जुन उत्साही, बलवान्, शूर, अस्त्रविद्या में निपुण,

विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः ।
तस्य मार्गं परिहरन्द्रुतं गच्छ यतव्रत ॥ २४ ॥
पश्याऽद्यैतन्महाघोरे संयुगे वैशसं महत् ।
हेमचित्राणि शूराणां महान्ति च शुभानि च ॥ २५ ॥
कवचान्यवदीर्यन्ते शरैः सन्नतपर्वभिः ।
छिद्यन्ते च ध्वजाग्राणि तोमराश्च धनूंषि च ॥ २६ ॥
प्रासाश्च विमलास्तीक्ष्णाः शक्त्यश्च कनकोज्ज्वलाः।
वैजयन्त्यश्च नागानां संक्रुद्धेन किरीटिना ॥ २७ ॥
नाऽयं संरक्षितुं कालः प्राणान्पुत्रोपजीविभिः ।
याहि स्वर्गं पुरस्कृत्य यशसे विजयाय च ॥ २८ ॥
रथनागहयावर्तां महाघोरां सुदुर्गमाम् ।
रथेन संग्रामनदीं तरत्येष कपिध्वजः ॥ २९ ॥
ब्रह्मण्यता दमो दानं तपश्च चरितं महत् ।
इहैव दृश्यते पार्थे भ्राता यस्य धनञ्जयः ॥ ३० ॥
भीमसेनश्च बलवान्माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवश्च वार्ष्णेयो यस्य नाथो व्यवस्थितः ॥ ३१ ॥
तस्यैष मन्युप्रभवो धार्तराष्ट्रस्य दुर्मतेः ।
तपोदग्धशरीरस्य कोपो दहति भारतीम् ॥ ३२ ॥
एष सन्दृश्यते पार्थो वासुदेवव्यपाश्रयः ।
दारयन्सर्वसैन्यानि धार्तराष्ट्राणि सर्वशः ॥ ३३ ॥

महापराक्रमी, स्फूर्तिशाली, दूर तक लक्ष्यभेदने में प्रवीण और दृढ़ धनुष-बाण धारण करनेवाले हैं; वे बल-बुद्धि से युक्त, निमित्तज्ञ, इन्द्र सहित सब देवताओं के लिए भी अजेय, क्लेश को जीते हुए, श्रेष्ठ योद्धा, सदा रण में विजय पानेवाले और भयानक अस्त्रों के ज्ञाता हैं। तुम शीघ्र ही जाकर उन्हें रोकने का यत्न करो ॥२०।२४॥ देखो, आज के इस घोर संग्राम में भयानक हत्याकाण्ड होगा। अर्जुन क्रोध से विह्वल होकर सन्नतपर्व सुवर्णभूषित विचित्र बाणों से वीरों के सुवर्णचित्रित सुदृढ़ कवच, ध्वजाएँ, तोमर, धनुष, उज्ज्वल प्रास, तीक्ष्ण शक्तियाँ और हाथियों के ऊपर के झण्डे काट-काटकर गिरा रहे हैं। हे पुत्र ! हम लोग राजा दुर्योधन के अधीन हैं, वही हमें जीविका देते हैं ॥२५।२७॥ इस समय हमें अपने प्राणों की रक्षा का विचार छोड़कर युद्ध करना चाहिए। हे बेटा ! स्वर्गप्राप्ति की ओर लक्ष्य रखकर यश और विजय प्राप्त करने जाओ। वह देखो, वीर अर्जुन रथ की नौका पर बैठकर रथ हाथी-घोड़ों की चाल के आवर्त से पूर्ण, महाघोर, अत्यन्त दुर्गम युद्ध-नदी के पार जा रहे हैं। युधिष्ठिर के ब्राह्मणभक्ति, इन्द्रिय-दमन, दान (त्याग), तप और श्रेष्ठ उच्च चरित्र आदि सद्गुणों का फल इसी लोक में दिखाई दे रहा है। जिनके भाई बलवान् भीमसेन, अर्जुन, नकुल और सहदेव हैं; जिनके सहायक और सुहृद् साक्षात्

एतदालोक्यते सैन्यं क्षोभ्यमाणं किरीटिना ।
महोर्मिनद्धं सुमहत्तिमिनेव महाजलम् ॥ ३४ ॥
हाहाकिलकिलाशब्दाः श्रूयन्ते च चमूमुखे ।
याहि पाञ्चालदायादमहं यास्ये युधिष्ठिरम् ॥ ३५ ॥
दुर्गमं ह्यन्तरं राज्ञो व्यूहस्याऽमिततेजसः ।
समुद्रकुक्षिप्रतिमं सर्वतोऽतिरथैः स्थितैः ॥ ३६ ॥
सात्यकिश्चाऽभिमन्युश्च धृष्टद्युम्नवृकोदरौ ।
पर्यरक्षन्त राजानं यमौ च मनुजेश्वरम् ॥ ३७ ॥
उपेन्द्रसदृशः श्यामो महाशाल इवोद्गतः ।
एष गच्छत्यनीकाग्रे द्वितीय इव फाल्गुनः ॥ ३८ ॥
उत्तमास्त्राणि चाऽऽधत्स्व गृहीत्वा च महद्धनुः ।
पार्षतं याहि राजानं युध्यस्व च वृकोदरम् ॥ ३९ ॥
को हि नेच्छेत्प्रियं पुत्रं जीवन्तं शाश्वतीः समाः ।
क्षत्रधर्मं तु सम्प्रेक्ष्य ततस्त्वां नियुनज्म्यहम् ॥ ४० ॥
एष चाति रणे भीष्मो दहते वै महाचमूम् ।
युद्धेषु सदृशस्तात यमस्य वरुणस्य च ॥ ४१ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि द्रोणाश्वत्थामसंवादे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

---

वासदेव हैं उन्हीं तपस्वी युधिष्ठिर का कष्ट से रजनित क्रोध दुर्मति दुर्योधन की सेना को भस्म कर रहा है ॥२८।३२॥ श्रीकृष्ण की सहायता से सब ओर दुर्योधन की सेना को छिन्न भिन्न और नष्ट भ्रष्ट करते हुए अर्जुन देख पड़ रहे हैं। तिमि और घड़ियाल आदि जल जन्तुओं से भयानक और बड़ी बड़ी लहरों से पूर्ण महासागर के समान क्षोभ को प्राप्त कौरवसेना में अर्जुन ने हलचल डाल दी है। सर्वत्र हाहाकार और किलकिलारव सुन पड़ता है। हे बेटा! तुम पाञ्चालराज धृष्टद्युम्न को रोकने के लिए जाओ और मैं राजा युधिष्ठिर पर, सम्मुख जाकर, आक्रमण करता हूँ ॥३३।३५॥ अमित तेजस्वी महाराज युधिष्ठिर की सेना का भीतरी भाग, समुद्र के भीतरी भाग की तरह, सुरक्षित और सब ओर से दुर्गम है। चारों ओर से अतिरथी, श्रेष्ठ, योद्धा उसकी रक्षा कर रहे हैं। सात्यकि, अभिमन्यु, धृष्टद्युम्न, भीमसेन, नकुल और सहदेव राजा युधिष्ठिर की रक्षा कर रहे हैं। वह देखो, श्रीकृष्ण के समान लम्बे-चौड़े, महाशाल वृक्ष के तुल्य ऊँचे, श्यामवर्ण, महाबली अभिमन्यु दूसरे अर्जुन के समान सेना के आगे आ रहे हैं। तुम शीघ्र ही श्रेष्ठ धनुष और उत्तम अस्त्र-शस्त्रों से सुसज्जित होकर धृष्टद्युम्न और भीमसेन से जाकर युद्ध करो। हे पुत्र! इस संसार में कौन नहीं चाहता कि मेरा प्रिय पुत्र बहुत दिनों तक जीवित रहे? किन्तु मैं क्षत्रिय-धर्म के अनुसार तुम्हें ऐसे भयानक युद्ध में मरने-मारने के लिए भेजने को विवश हूँ। वह देखो, यमराज और वरुण के समान पराक्रमी योद्धा भीष्म भारी सेना का संहार कर रहे हैं ॥३६।४१॥

भीष्मपर्व का एक सौ बारह अध्याय समाप्त हुआ ॥ ११२ ॥

अथ त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

सञ्जय उवाच—भगदत्तः कृपः शल्यः कृतवर्मा तथैव च ।
विन्दानुविन्दावावन्त्यौ सैन्धवश्च जयद्रथः ॥ १ ॥
चित्रसेनो विकर्णश्च तथा दुर्मर्षणादयः ।
दशैते तावका योधा भीमसेनमयोधयन् ॥ २ ॥
महत्या सेनया युक्ता नानादेशसमुत्थया ।
भीष्मस्य समरे राजन्प्रार्थयाना महद्यशः ॥ ३ ॥
शल्यस्तु नवभिर्बाणैर्भीमसेनमताडयत् ।
कृतवर्मा त्रिभिर्बाणैः कृपश्च नवभिः शरैः ॥ ४ ॥
चित्रसेनो विकर्णश्च भगदत्तश्च मारिष ।
दशभिर्दशभिर्बाणैर्भीमसेनमताडन् ॥ ५ ॥
सैन्धवश्च त्रिभिर्बाणैर्भीमसेनमताडयत् ।
विन्दानुविन्दावावन्त्यौ पञ्चभिः पञ्चभिः शरैः ॥ ६ ॥
दुर्मर्षणस्तु विंशत्या पाण्डवं निशितैः शरैः ।
स तान्सर्वान्महाराज राजमानान्पृथक् पृथक् ॥ ७ ॥
प्रवीरान्सर्वलोकस्य धार्तराष्ट्रान्महारथान् ।
जघान समरे वीरः पाण्डवः परवीरहा ॥ ८ ॥
सप्तभिः शल्यमाविध्यत्कृतवर्माणमष्टभिः ।
कृपस्य सशरं चापं मध्ये चिच्छेद भारत ॥ ९ ॥
अथैनं छिन्नधन्वानं पुनर्विव्याध सप्तभिः ।
विन्दानुविन्दौ च तथा त्रिभिस्त्रिभिरताडयत् ॥ १० ॥

एक सौ तेरह अध्याय ॥ ११३ ॥

सञ्जय ने कहा – हे महाराज ! भगदत्त, कृपाचार्य, शल्य, कृतवर्मा, विन्द, अनुविन्द, जयद्रथ, चित्रसेन, विकर्ण और दुर्मर्षण, ये आपके पक्ष के दस योद्धा अनेक देशों की भारी सेना साथ लेकर उस युद्ध में भीष्म के लिए यश की प्रत्याशा से भीमसेन के साथ युद्ध करने लगे ॥१।३॥ शल्य ने नव, कृतवर्मा ने तीन और कृपाचार्य ने नव बाण भीमसेन को मारे । चित्रसेन, विकर्ण और भगदत्त ने दस दस बाण भीमसेन को मारे । जयद्रथ ने तीन, विन्द और अनुविन्द ने पाँच पाँच और दुर्मर्षण ने बीस बाण भीमसेन को मारे ॥४।७॥ हे राजेन्द्र ! तब महाबली भीमसेन ने भी सबके सन्मुख ही धृतराष्ट्रपक्ष के इन महारथियों में से हर एक को अलग-अलग बाण मारे । उन्होंने शल्य को सात और कृतवर्मा को आठ बाण मारकर कृपाचार्य का बाणयुक्त धनुष भी मध्य से काट डाला । इसके पश्चात् धनुष न रहने पर रिक्त हाथ खड़े हुए कृपाचार्य को सात बाणों से घायल किया ॥७।१०॥ फिर विन्द और अनुविंद

दुर्मर्षणं च विंशत्या चित्रसेनं च पञ्चभिः ।
विकर्णं दशभिर्बाणैः पञ्चभिश्च जयद्रथम् ॥ ११ ॥
विध्वा भीमो नदद्धृष्टः सैन्धवं च पुनस्त्रिभिः ।
अथाऽन्यद्धनुरादाय गौतमो रथिनां वरः ॥ १२ ॥
भीमं विव्याध संरब्धो दशभिर्निशितैः शरैः ।
स विद्धो दशभिर्बाणैस्तोत्रैरिव महाद्विपः ॥ १३ ॥
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
गौतमं ताडयामास शरैर्बहुभिराहवे ॥ १४ ॥
सैन्धवस्य तथाऽश्वांश्च सारथिं च त्रिभिः शरैः ।
प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः ॥ १५ ॥
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
शरांश्चिक्षेप निशितान्भीमसेनस्य संयुगे ॥ १६ ॥
तस्य भीमो धनुर्मध्ये द्वाभ्यां चिच्छेद मारिष ।
भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य महात्मनः ॥ १७ ॥
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
चित्रसेनरथं राजन्नारुरोह त्वरान्वितः ॥ १८ ॥
अत्यद्भुतं रणे कर्म कृतवांस्तत्र पाण्डवः ।
महारथाञ्शरैर्विध्वा वारयित्वा च मारिष ॥ १९ ॥
विरथं सैन्धवं चक्रे सर्वलोकस्य पश्यतः ।
तदा न ममृषे शल्यो भीमसेनस्य विक्रमम् ॥ २० ॥

को तीन-तीन बाणों से पीडित करके दुर्मर्षण को बीस, चित्रसेन को पाँच, विकर्ण को दस और जयद्रथ को पहले पाँच और फिर तीन बाण मारे। महाबली भीमसेन इस प्रकार सबको घायल करके आनन्द के साथ सिंहनाद करने लगे। महारथी कृपाचार्य ने दूसरा धनुष लेकर भीमसेन को सुतीक्ष्ण दस बाणों से पीडित किया। अङ्कुश की चोट खाये हुए मस्त गजराज की तरह उन बाणों की चोट खाकर महाबाहु भीमसेन अत्यन्त कुपित हो उठे। उन्होंने कृपाचार्य को एक साथ बहुत से बाण मारे ॥१०।१४॥ इसके पश्चात् साक्षात् काल के समान भीमसेन ने जयद्रथ के चारों घोड़े मारकर तीन बाणों से सारथी को भी मार डाला। महारथी जयद्रथ बिना घोड़े और सारथी के रथ पर से नीचे कूदकर भीमसेन के ऊपर तीक्ष्ण बाण बरसाने लगे। उन्होंने दो भल्ल बाणों से जयद्रथ का धनुष काट डाला। सारथी और घोड़ों को मरा और धनुष तथा रथ को कटा देखकर जयद्रथ शीघ्रता से चित्रसेन के रथ पर चढ़ गये। इस प्रकार महावीर भीमसेन अकेले ही अपने बाणों से सब महारथियों को पीडित और जयद्रथ को रथहीन करके सबके सन्मुख ही अद्भुत कार्य करने लगे ॥१५।१९॥ हे राजेन्द्र! भीमसेन के इस पराक्रम को शल्य न सह सके। वे "ठहरो, ठहरो" कहकर, तीक्ष्ण धार वाले चमकीले बाण धनुष पर चढ़ाकर, भीमसेन को

स सन्धाय शरांस्तीक्ष्णान्कर्मारपरिमार्जितान् ।
भीमं विव्याध समरे तिष्ठ तिष्ठेति चाऽब्रवीत् ॥ २१ ॥
कृपश्च कृतवर्मा च भगदत्तश्च वीर्यवान् ।
विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे ॥ २२ ॥
दुर्मर्षणो विकर्णश्च सिन्धुराजश्च वीर्यवान् ।
भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिन्दमाः ॥ २३ ॥
स च तान्प्रतिविव्याध पञ्चभिः पञ्चभिः शरैः ।
शल्यं विव्याध सप्तत्या पुनश्च दशभिः शरैः ॥ २४ ॥
तं शल्यो नवभिर्भित्त्वा पुनर्विव्याध पञ्चभिः ।
सारथिं चाऽस्य भल्लेन गाढं विव्याध मर्मणि ॥ २५ ॥
विशोकं प्रेक्ष्य निर्भिन्नं भीमसेनः प्रतापवान् ।
मद्रराजं त्रिभिर्बाणैर्बाह्वोरुरसि चाऽर्पयत् ॥ २६ ॥
तथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ।
ताडयामास समरे सिंहवद्विननाद च ॥ २७ ॥
ते हि यत्ता महेष्वासाः पाण्डवं युद्धकोविदम् ।
त्रिभिस्त्रिभिरकुण्ठाग्रैर्भृशं मर्मस्वताडयन् ॥ २८ ॥
सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे ।
पर्वतो वारिधाराभिर्वर्षमाणैरिवाऽम्बुदैः ॥ २९ ॥
स तु क्रोधसमाविष्टः पाण्डवानां महारथः ।
मद्रेश्वरं त्रिभिर्बाणैर्भृशं विध्वा महायशाः ॥ ३० ॥
कृपं च नवभिर्बाणैर्भृशं विध्वा समन्ततः ।
प्राग्ज्योतिषं शतैराजौ राजन्विव्याध सायकैः ॥ ३१ ॥

---

पीड़ित करने लगे । तब शल्य की सहायता के लिए कृपाचार्य, कृतवर्मा, महावीर भगदत्त, विन्द, अनुविन्द, चित्रसेन, दुर्मर्षण, विकर्ण, पराक्रमी जयद्रथ, ये सब मिलकर स्फूर्त्ति के साथ भीमसेन को बाण मारने लगे। भीमसेन ने उनमें से प्रत्येक को पाँच-पाँच बाण मारे । इसके पश्चात् शल्य को पहले सत्तर और फिर दस बाण मारे । शल्य ने भी भीमसेन को पहले नव और फिर पाँच बाण मारे । फिर एक भल्ल बाण उनके सारथी को मारा । महारथी प्रतापी भीमसेन अपने सारथी विशोक को बाण की चोट से विह्वल देखकर क्रोध से अधीर हो उठे । उन्होंने शल्य के दोनों हाथों में और छाती मे तीन बाण मारे । उसके पश्चात् अन्य धनुर्द्धरों को तीन-तीन बाणों से घायल करके वे सिंहनाद करने लगे ॥२०।२७॥ तब वे सब महारथी मिलकर यत्नपूर्वक महाबली भीमसेन से युद्ध करने लगे। सबने भीमसेन के मर्मस्थलों में एक साथ तीन-तीन बाण मारे । जैसे पर्वत मेघों की जलवर्षा से व्यथित नहीं होता, वैसे ही महारथी भीम उन वीरों के बाणों से अत्यन्त ही

ततस्तु सशरं चापं सात्वतस्य महात्मनः ।
क्षुरप्रेण सुतीक्ष्णेन चिच्छेद कृतहस्तवत् ॥ ३२ ॥
तथाऽन्यद्धनुरादाय कृतवर्मा वृकोदरम् ।
आजघान भ्रुवोर्मध्ये नाराचेन परन्तपः ॥ ३३ ॥
भीमस्तु समरे विध्वा शल्यं नवभिरायसैः ।
भगदत्तं त्रिभिश्चैव कृतवर्माणमष्टभिः ॥ ३४ ॥
द्वाभ्यां द्वाभ्यां तु विव्याध गौतमप्रभृतीन्रथान् ।
तेऽपि तं समरे राजन्विव्यधुर्निशितैः शरैः ॥ ३५ ॥
स तथा पीड्यमानोऽपि सर्वशस्त्रैर्महारथैः ।
मत्वा तृणेन तांस्तुल्यान्विचचार गतव्यथः ॥ ३६ ॥
ते चापि रथिनां श्रेष्ठा भीमाय निशिताञ्शरान् ।
प्रेषयामासुरव्यग्राः शतशोऽथ सहस्रशः ॥ ३७ ॥
तस्य शक्तिं महावेगां भगदत्तो महारथः ।
चिक्षेप समरे वीरः स्वर्णदण्डां महामते ॥ ३८ ॥
तोमरं सैन्धवो राजा पट्टिशं च महाभुजः ।
शतघ्नीं च कृपो राजञ्छरं शल्यश्च संयुगे ॥ ३९ ॥
अथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान् ।
भीमसेनं समुद्दिश्य प्रेषयामासुरोजसा ॥ ४० ॥
तोमरं च द्विधा चक्रे क्षुरप्रेणाऽनिलात्मजः ।
पट्टिशं च त्रिभिर्बाणैश्चिच्छेद तिलकाण्डवत् ॥ ४१ ॥

घायल होकर रत्ती भर भी व्यथित नहीं हुए ॥२८। २९॥ उन्होंने क्रुद्ध होकर फिर शल्य को तीन, कृपाचार्य को नव और भगदत्त को सैकड़ों बाण मारकर एक तीक्ष्ण क्षुरप्र बाण से वीर कृतवर्मा का बाणयुक्त धनुष काट डाला ॥३०।३२॥ शत्रुओं को पीड़ा पहुंचानेवाले कृतवर्मा ने दूसरा धनुष लेकर एक नाराच बाण भीमसेन की भौंहों के मध्य में मारा। तब भीमसेन ने फिर शल्य को नव, भगदत्त को तीन, कृतवर्मा को आठ और कृपाचार्य आदि महारथियों को दो-दो बाण मारे। वे लोग भी सुतीक्ष्ण दृढ़ बाणों से भीमसेन को पीड़ा पहुंचाने लगे ॥३३। ३५॥ उन महारथियों के द्वारा अत्यन्त पीड़ित होकर भी भीमसेन विचलित नहीं हुए। वे उन लोगों को और उनके प्रहारों को तृण के समान तुच्छ समझकर युद्धभूमि में विचरने लगे। वे सब महारथी भी एकाग्र होकर भीमसेन के ऊपर सैकड़ों-हजारों बाण बरसाने लगे। हे राजेन्द्र ! महारथि भगदत्त ने सुवर्णदण्डयुक्त भयङ्कर महाशक्ति भीमसेन को मारी। महाबाहु जयद्रथ ने तोमर और पट्टिश, कृपाचार्य ने शतघ्नी, शल्य ने बाण और अन्य धनुर्धरों में से हर एक ने पाँच-पाँच शिलीमुख नाम के उग्र बाण भीमसेन को मारे ॥३६।४०॥ तब वायुपुत्र भीमसेन ने क्षुरप्र बाण से तोमर, तीन बाणों से पट्टिश और कङ्कपत्रयुक्त नव बाणों से शतघ्नी को तिल के [illegible]

स विभेद शतघ्नीं च नवभिः कङ्कपत्रिभिः ।
मद्रराजप्रयुक्तं च शरं छित्त्वा महारथः ॥ ४२ ॥
शक्तिंचिच्छेद सहसा भगदत्तेरितां रणे ।
तथेतराञ्शरान्घोराञ्शरैः सन्नतपर्वभिः ॥ ४३ ॥
भीमसेनो रणश्लाघी त्रिधैकैकं समाच्छिनत् ।
तांश्च सर्वान्महेष्वासांस्त्रिभिस्त्रिभिरताडयत् ॥ ४४ ॥
ततो धनञ्जयस्तत्र वर्त्तमाने महारणे ।
आजगाम रथेनाऽऽजौ भीमं दृष्ट्वा महारथम् ॥ ४५ ॥
निघ्नन्तं समरे शत्रून्योधयानं च सायकैः ।
तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ ॥ ४६ ॥
न शशंसुर्जयं तत्र तावकाः पुरुषर्षभाः ।
अथाऽर्जुनो रणे भीमं योधयन्तं महारथान् ॥ ४७ ॥
भीष्मस्य निधनाकांक्षी पुरस्कृत्य शिखण्डिनम् ।
आससाद रणे वीरांस्तावकान्दश भारत ॥ ४८ ॥
ये स्म भीमं रणे राजन्योधयन्तो व्यवस्थिताः ।
बीभत्सुस्तानथाऽविध्यद्भीमस्य प्रियकाम्यया ॥ ४९ ॥
ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
अर्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ॥ ५० ॥
सुशर्मन्गच्छ शीघ्रं त्वं बलौघैः परिवारितः ।
जहि पाण्डुसुतावेतौ धनञ्जयवृकोदरौ ॥ ५१ ॥
तच्छ्रुत्वा वचनं तस्य त्रैगर्तः प्रस्थलाधिपः ।
अभिद्रुत्य रणे भीममर्जुनं चैव धन्विनौ ॥ ५२ ॥

की तरह काटकर टुकड़े टुकड़े कर दिया। राजा भगदत्त की चलाई हुई शक्ति को भी उन्होंने काट गिराया। उनकी ओर जो अन्य भयानक बाण आ रहे थे, उन्हें अपने शीघ्रगामी बाणों से काटकर उन्होंने व्यर्थ कर दिया। यह सब अद्भुत कर्म करके प्रत्येक महारथी को उन्होंने तीन-तीन बाण मारे ॥४१।४४॥ उधर महारथी अर्जुन भीमसेन को अकेले कई महारथियों से युद्ध करते और उनके प्रहारों को व्यर्थ करके उन्हें पीडित करते देखकर शीघ्रता के साथ अपना रथ उनके पास ले आये। उन दोनों महारथियों को एकत्र होते देखकर दुर्योधन आदि को जय प्राप्त करने की आशा छोड़ देनी पड़ी। भीष्म को मारने और भीमसेन को सहायता पहुँचाने के लिए महारथी अर्जुन उन दसों महारथियों को, जिनसे भीमसेन युद्ध कर रहे थे, विविध बाणों से पीडित करने लगे। इसके पश्चात् वे शिखण्डी को आगे करके भीष्म के पास जाने को प्रस्तुत हुए ॥४५।४९॥ तब राजा दुर्योधन ने अर्जुन और भीमसेन को मार डालने

रथैरनेकसाहस्रैः समन्तात्पर्यवारयत् ।
ततः प्रववृते युद्धमर्जुनस्य परैः सह ॥ ५३ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीमसेनपराक्रमे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

के लिए राजा सुशर्मा से कहा—हे त्रिगर्तराज ! तुम शीघ्र ही अपनी सारी सेना साथ लेकर अर्जुन और भीमसेन के पास पहुँचो और उन्हें मार डालने की चेष्टा करो । राजा दुर्योधन की आज्ञा के अनुसार त्रिगर्तराज सुशर्मा सहस्रों रथों की सेना साथ लेकर आगे बढ़े । उन्होंने भीमसेन और अर्जुन को चारों ओर से घेर लिया । अब कौरवों के साथ अर्जुन का घोर संग्राम होने लगा ॥५०।५३॥

भीष्मपर्व का एक सौ तेरह अध्याय समाप्त हुआ ॥ ११३ ॥

---

अथ चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

सञ्जय उवाच—अर्जुनस्तु रणे शल्यं यतमानं महारथम् ।
छादयामास समरे शरैः सन्नतपर्वभिः ॥ १ ॥
सुशर्माणं कृपं चैव त्रिभिस्त्रिभिरविध्यत ।
प्राग्ज्योतिषं च समरे सैन्धवं च जयद्रथम् ॥ २ ॥
चित्रसेनं विकर्णं च कृतवर्माणमेव च ।
दुर्मर्षणं च राजेन्द्र ह्यावन्त्यौ च महारथौ ॥ ३ ॥
एकैकं त्रिभिरानर्च्छत्कङ्कबर्हिणवाजितैः ।
शरैरतिरथो युद्धे पीडयन्वाहिनीं तव ॥ ४ ॥
जयद्रथो रणे पार्थं विद्ध्वा भारत सायकैः ।
भीमं विव्याध तरसा चित्रसेनरथे स्थितः ॥ ५ ॥
शल्यश्च समरे जिष्णुं कृपश्च रथिनां वरः ।
विव्यधाते महाराज बहुधा मर्मभेदिभिः ॥ ६ ॥
चित्रसेनादयश्चैव पुत्रास्तव विशाम्पते ।
पञ्चभिः पञ्चभिस्तूर्णं संयुगे निशितैः शरैः ॥ ७ ॥
आजघ्नुरर्जुनं संख्ये भीमसेनं च मारिष ।
तौ तत्र रथिनांश्रेष्ठौ कौन्तेयौ भरतर्षभौ ॥ ८ ॥

एक सौ चौदह अध्याय ॥ ११४ ॥

सञ्जय ने कहा—हे महाराज ! अतिरथी अर्जुन आपके पक्ष की सेना को पीड़ा पहुँचाते हुए शल्य के पास पहुँचे । उन्होंने अगम्य सुवर्णपुङ्ख तीक्ष्ण बाणों से अपना मार्ग रोकने की चेष्टा करने वाले शल्य का रथ ढक दिया । इसके अनन्तर सुशर्मा, कृपाचार्य, भगदत्त, जयद्रथ, चित्रसेन, विकर्ण, कृतवर्मा, दुर्मर्षण, विन्द और अनुविन्द आदि महारथियों में से प्रत्येक को तीन-तीन कङ्कपत्रयुक्त बाण मारे ॥१।४॥ जयद्रथ चित्रसेन के रथ पर चढ़ गये । वहाँ से उन्होंने अर्जुन और भीमसेन को बहुत बाण मारे ।

अपीडयेतां समरे त्रिगर्तानां महद्बलम् ।
सुशर्माऽपि रणे पार्थं शरैर्नवभिराशुगैः ॥ ९ ॥
ननाद बलवन्नादं त्रासयानो महद्बलम् ।
अन्ये च रथिनः शूरा भीमसेनधनञ्जयौ ॥ १० ॥
विव्यधुर्निशितैर्बाणै रुक्मपुङ्खैरजिह्मगैः ।
तेषां च रथिनां मध्ये कौन्तेयौ भरतर्षभौ ॥ ११ ॥
क्रीडमानौ रथोदारौ चित्ररूपौ व्यदृश्यताम् ।
आमिषेप्सू गवां मध्ये सिंहाविव मदोत्कटौ ॥ १२ ॥
छित्त्वा धनूंषि शूराणां शरांश्च बहुधा रणे ।
पातयामासतुर्वीरौ शिरांसि शतशो नृणाम् ॥ १३ ॥
रथाश्च बहवो भग्ना हयाश्च शतशो हताः ।
गजाश्च सगजारोहाः पेतुरुर्व्यां महाहवे ॥ १४ ॥
रथिनः सादिनश्चापि तत्र तत्र निषूदिताः ।
दृश्यन्ते बहवो राजन्वेपमानाः समन्ततः ॥ १५ ॥
हतैर्गजपदात्योघैर्वाजिभिश्च निषूदितैः ।
रथैश्च बहुधा भग्नैः समास्तीर्यत मेदिनी ॥ १६ ॥
छत्रैश्च बहुधा छिन्नैर्ध्वजैश्च विनिपातितैः ।
अंकुशैरपविद्धैश्च परिस्तोमैश्च भारत ॥ १७ ॥
केयूरैरङ्गदैर्हारैराङ्कवैर्मृदितैस्तथा ।
उष्णीषैर्ऋष्टिभिश्चैव चामरव्यजनैरपि ॥ १८ ॥
तत्रतत्राऽपविद्धैश्च बाहुभिश्चन्दनोक्षितैः ।
ऊरुभिश्च नरेन्द्राणां समास्तीर्यत मेदिनी ॥ १९ ॥

---

शल्य और महारथी कृपाचार्य ने बहुत से मर्मभेदी बाण मारकर अर्जुन को पीड़ित किया। हे भारत! चित्रसेन आदि आपके पुत्रों में से प्रत्येक ने भीमसेन और अर्जुन को पाँच-पाँच तीक्ष्ण बाण मारे ॥५।८॥ उधर महारथी अर्जुन और भीमसेन त्रिगर्तदेश की भारी सेना को विकट बाणों से पीड़ित और उन्माथित करने लगे। त्रिगर्तराज सुशर्मा अर्जुन को नव बाण मारकर, शत्रुसेना को त्रास पहुँचाकर, ऊँचे स्वर से सिंहनाद करने लगे। रथों पर स्थित अन्य योद्धा भी बाण बरसाकर भीमसेन और अर्जुन को घायल करने लगे। श्रेष्ठ रथी और उदार-प्रकृति भीमसेन और अर्जुन, गायों के झुण्ड में मांसलोलुप दो सिंहों की तरह, कौरव पक्ष की रथसेना के मध्य उसका संहार करते हुए विचित्र रूप से विचरने लगे ॥८।१२॥ वे युद्ध-भूमि के मध्य सैकड़ों शूरों के बाण सहित धनुष काटकर उनके सिरों को धड़ से अलग करने लगे। उस युद्ध में सैकड़ों घोड़े मरे और घायल हुए; सहस्रों हाथी और उनके सवार मर-मरकर पृथ्वी पर गिर

तत्राऽद्भुतमपश्याम रणे पार्थस्य विक्रमम् ।
शरैः संवार्य तान्वीरान्यज्जघान महाबलः ॥ २० ॥
पुत्रस्तु तव तं दृष्ट्वा भीमार्जुनपराक्रमम् ।
गाङ्गेयस्य रथाभ्याशमुपजग्मे महाबलः ॥ २१ ॥
कृपश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
विन्दानुविन्दावावन्त्यौ नाऽजहुः संयुगं तदा ॥ २२ ॥
ततो भीमो महेष्वासः फाल्गुनश्च महारथः ।
कौरवाणां चमूं घोरां भृशं दुद्रुवतू रणे ॥ २३ ॥
ततो बर्हिणवाजानामयुतान्यर्बुदानि च ।
धनञ्जयरथे तूर्णं पातयन्ति स्म भूमिपाः ॥ २४ ॥
ततस्ताञ्शरजालेन सन्निवार्य महारथान् ।
पार्थः समन्तात्समरे प्रेषयामास मृत्यवे ॥ २५ ॥
शल्यस्तु समरे जिष्णुं क्रीडन्निव महारथः ।
आजघानोरसि क्रुद्धो भल्लैः सन्नतपर्वभिः ॥ २६ ॥
तस्य पार्थो धनुश्छित्वा हस्तावापं च पञ्चभिः ।
अथैनं सायकैस्तीक्ष्णैर्भृशं विव्याध मर्मणि ॥ २७ ॥
अथाऽन्यद्धनुरादाय समरे भारसाधनम् ।
मद्रेश्वरो रणे जिष्णुं ताडयामास रोषितः ॥ २८ ॥
त्रिभिः शरैर्महाराज वासुदेवं च पञ्चभिः ।
भीमसेनं च नवभिर्बाह्वोरुरसि चाऽर्पयत् ॥ २९ ॥

---

पड़े। बहुत से रथ भी टूट गये। सैकड़ों रथी और घुड़सवार मारे गये। लाखों शूर भी भय के मारे काँपते हुए देख पड़े ॥१३।१५॥ रण में मारे गये हाथियों, घोड़ों, पैदलों और टूटे हुए रथों से सारी युद्ध-भूमि पूर्ण हो उठी ॥१६।१७॥ हे भारत ! इस युद्ध में मैंने अर्जुन का एक अद्भुत पराक्रम देखा। वे अपने बाणों से उन असंख्य वीरों को अनायास हटा और आहत कर रहे थे। कटे हुए छत्र, ध्वजा, अंकुश, परिस्तोम, केयूर, अङ्गद, हार, कम्बल, पगड़ी, ऋष्टि, पताका-व्यजन, राजाओं के कटे हुए चन्दनचर्चित हाथ और जंघा आदि अङ्ग भी गिरे हुए देख पड़ते थे। हे महाराज ! आपके पुत्र राजा दुर्योधन भीमसेन और अर्जुन का वेग। अर्जुन का बल और पराक्रम देखकर भीष्म पितामह के पास गये। कृपाचार्य, कृतवर्मा, जयद्रथ, विन्द और अनुविन्द उस समय भी युद्ध में विमुख न होकर दोनों पाण्डवों का सामना करते रहे ॥२०।२२॥ महाधनुर्धर अर्जुन और महारथी भीमसेन उसी प्रकार कौरव-सेना को पीड़ित करने लगे। कौरव पक्ष के वीरगण भी महारथी के ... महारथी अर्जुन के रथ के ऊपर सहस्रों-लाखों-करोड़ों मयूरपंख-शोभित तीक्ष्ण बाण बरसाने लगे। महावीर अर्जुन अपने बाणों से उन बाणों को निवारण करके महारथी क्षत्रियों को मृत्यु के मुख में पहुँचाने लगे ॥२३।२५॥ इतने में महारथी शल्य ने कुपित

ततो द्रोणो महाराज मागधश्च महारथः ।
दुर्योधनसमादिष्टौ तं देशमुपजग्मतुः ॥ ३० ॥
यत्र पार्थो महाराज भीमसेनश्च पाण्डवः ।
कौरव्यस्य महासेनां जघ्नतुः सुमहारथौ ॥ ३१ ॥
जयत्सेनस्तु समरे भीमं भीमायुधं युधि ।
विव्याध निशितैर्बाणैरष्टाभिर्भरतर्षभ ॥ ३२ ॥
तं भीमो दशभिर्विध्वा पुनर्विव्याध पञ्चभिः ।
सारथिं चाऽस्य भल्लेन रथनीडादपातयत् ॥ ३३ ॥
उद्भ्रान्तैस्तुरगैः सोऽथ द्रवमाणैः समन्ततः ।
मागधोऽपहृतो राजा सर्वसैन्यस्य पश्यतः ॥ ३४ ॥
द्रोणश्च विवरं दृष्ट्वा भीमसेनं शिलीमुखैः ।
विव्याध बाणैर्निशितैः पञ्चषष्टिभिरायसैः ॥ ३५ ॥
तं भीमः समरश्लाघी गुरुं पितृसमं रणे ।
विव्याध पञ्चभिर्भल्लैस्तथा षष्ट्या च भारत ॥ ३६ ॥
अर्जुनस्तु सुशर्माणं विध्वा बहुभिरायसैः ।
व्यधमत्तस्य तत्सैन्यं महाभ्राणि यथाऽनिलः ॥ ३७ ॥
ततो भीष्मश्च राजा च कौसल्यश्च बृहद्बलः ।
समवर्तन्त संक्रुद्धा भीमसेनधनञ्जयौ ॥ ३८ ॥
तथैव पाण्डवाः शूरा धृष्टद्युम्नश्च पार्षतः ।
अभ्यद्रवन्रणे भीष्मं व्यादितास्यमिवाऽन्तकम् ॥ ३९ ॥

---

होकर अर्जुन की छाती में कई भल्ल बाण मारे। अर्जुन ने उन बाणों से तनिक भी व्यथित न होकर पाँच बाणों से शल्य का धनुष और हस्तावाप काट डाला। फिर बहुत से बाण उनके मर्मस्थल में मारे। तब शल्य क्रुद्ध हो उठे। उन्होंने और एक दृढ़ धनुष लेकर तीन बाण अर्जुन को, पाँच बाण वासुदेव को और नव बाण भीमसेन की दोनों भुजाओं और छाती में मारे ॥२६।२९॥ हे भारत ! इसी समय मगधराज जयत्सेन और द्रोणाचार्य, दुर्योधन की आज्ञा से, उसी स्थान पर आये जहाँ भीमसेन और अर्जुन कौरवों की बहुत बड़ी सेना को मार रहे थे। महारथी मगधराज ने भीमायुधधारी भीमसेन को आठ बाण मारे। पराक्रमी भीमसेन ने भी पहले दस और फिर पाँच बाण जयत्सेन को मारे। इसके पश्चात् एक भल्ल बाण मारकर उनके सारथी को रथ से नीचे गिरा दिया। सारथी के मृत्यु को प्राप्त हो जाने पर मगधराज के घोड़े इधर-उधर दौड़ते हुए सब सेना के सन्मुख ही उनका रथ युद्धस्थल से ले भागे ॥३०।३४॥ इसी अवसर में महावीर द्रोणाचार्य ने सन्मुख आकर पैंसठ बाणों से भीमसेन को घायल किया। महापराक्रमी भीमसेन ने भी पैंसठ तीक्ष्ण भल्ल बाण द्रोणाचार्य को मारे। प्रचण्ड आँधी जैसे मेघों को छिन्न-भिन्न कर देती है वैसे ही अर्जुन भी बाणों से सेना सहित सुशर्मा को क्षत-विक्षत करने लगे ॥३५।३७॥ महारथी भीष्म पितामह, राजा

शिखण्डी तु समासाद्य भरतानां पितामहम् ।
अभ्यद्रवत संहृष्टो भयं त्यक्त्वा महारथात् ॥ ४० ॥
युधिष्ठिरमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
अयोधयन्रणे भीष्मं सहिताः सर्वसृञ्जयैः ॥ ४१ ॥
तथैव तावकाः सर्वे पुरस्कृत्य यतव्रतम् ।
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ॥ ४२ ॥
ततः प्रववृते युद्धं कौरवाणां भयावहम् ।
तत्र पाण्डुसुतैः सार्धं भीष्मस्य विजयं प्रति ॥ ४३ ॥
तावकानां जये भीष्मो ग्लह आसीद्विशांपते ।
तत्र हि द्यूतमासक्तं विजयायेतराय वा ॥ ४४ ॥
धृष्टद्युम्नस्तु राजेन्द्र सर्वसैन्यान्यचोदयत् ।
अभ्यद्रवत गाङ्गेयं मा भैष्ट रथसत्तमाः ॥ ४५ ॥
सेनापतिवचः श्रुत्वा पाण्डवानां वरूथिनी ।
भीष्मं समभ्ययात्तूर्णं प्राणांस्त्यक्त्वा महाहवे ॥ ४६ ॥
भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम् ।
आपतन्तीं महाराज वेलामिव महोदधिः ॥ ४७ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मार्जुनपराक्रमे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

दुर्योधन और कोशलनरेश बृहद्बल, तीनों वीर क्रुद्ध होकर भीमसेन और अर्जुन के समीप गये। इधर पाण्डवगण भी धृष्टद्युम्न के साथ भीष्म के सम्मुख आये। भीष्म उस समय मुख फैलाये हुए यमराज के समान जान पड़ते थे। शिखण्डी ने महारथी भीष्म को सम्मुख पाते ही निर्भय भाव से उनपर आक्रमण किया। हे महाराज! इस प्रकार राजा युधिष्ठिर आदि पाण्डव और सृञ्जयगण शिखण्डी को और कौरवगण भीष्म को आगे करके युद्ध करने लगे ॥३८-४१॥ वे कौरव लोग भीष्म की जय चाहते हुए पाण्डवों के साथ घोरतर संग्राम करने लगे। वे लोग समररूपी द्यूतक्रीडा में प्रवृत्त होकर जयलाभ के लिए भीष्म के जीवन का दाँव लगाकर युद्ध करने लगे ॥४२-४४॥ हे राजेन्द्र! उस समय धृष्टद्युम्न ने अपने सैनिकों को आज्ञा देते हुए पुकारकर कहा — हे वीरश्रेष्ठ रथी योद्धाओ! तुम लोग निर्भय होकर भीष्म पर आक्रमण करो। सेनापति धृष्टद्युम्न के ये वचन सुनकर पाण्डवों की सेना, प्राणों का मोह छोड़कर, भीष्म पर आक्रमण करने के लिए आगे बढ़ी। जैसे महासमुद्र तटभूमि का वारण करता है, वैसे ही श्रेष्ठ रथी भीष्म ने उस सेना का आक्रमण किया ॥४५-४७॥

भीष्मपर्व का एक सौ चौदह अध्याय समाप्त हुआ ॥ ११४ ॥

अथ पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

धृतराष्ट्र उवाच — कथं शान्तनवो भीष्मो दशमेऽहनि सञ्जय ।
अयुध्यत महावीर्यः पाण्डवैः सह सृञ्जयैः ॥ १ ॥

कुरवश्च कथं युद्धे पाण्डवान्प्रत्यवारयन् ।
आचक्ष्व मे महायुद्धं भीष्मस्याऽऽहवशोभिनः ॥ २ ॥

सञ्जय उवाच — कुरवः पाण्डवैः सार्धं यदयुध्यन्त भारत ।
यथा च तदभूद्युद्धं तत्तु वक्ष्यामि साम्प्रतम् ॥ ३ ॥
गमिताः परलोकाय परमास्त्रैः किरीटिना ।
अहन्यहनि संक्रुद्धास्तावकानां महारथाः ॥ ४ ॥
यथाप्रतिज्ञं कौरव्यः स चापि समितिञ्जयः ।
पार्थानामकरोद्भीष्मः सततं समितिक्षयम् ॥ ५ ॥
कुरुभिः सहितं भीष्मं युध्यमानं परन्तप ।
अर्जुनं च सपाञ्चाल्यं संशयो विजयेऽभवत् ॥ ६ ॥
दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे ।
अवर्तत महारौद्रः सततं समितिक्षयः ॥ ७ ॥
तस्मिन्नयुतशो राजन्भूयशश्च परन्तपः ।
भीष्मः शान्तनवो योधाञ्जघान परमास्त्रवित् ॥ ८ ॥
येषामज्ञातकल्पानि नामगोत्राणि पार्थिव ।
ते हतास्तत्र भीष्मेण शूराः सर्वेऽनिवर्तिनः ॥ ९ ॥
दशाहानि ततस्तप्त्वा भीष्मः पाण्डववाहिनीम् ।
निरविद्यत धर्मात्मा जीवितेन परन्तप ॥ १० ॥
स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिमुखो रणे ।
न हन्यां मानवश्रेष्ठान्संग्रामे सुबहूनिति ॥ ११ ॥

एक सौ पन्द्रह अध्याय ॥ ११५ ॥

राजा धृतराष्ट्र ने कहा—हे सञ्जय! महावीर्य-शाली शान्तनु-नन्दन पितामह भीष्म ने दसवें दिन पाण्डवों और सृञ्जयों से किस प्रकार से युद्ध किया? कौरवों ने किस प्रकार से पाण्डवों के आक्रमण को रोका? यह सब वृत्तान्त आप मुझसे कहो ॥१।२॥ सञ्जय ने कहा—हे राजेन्द्र! मैं आपके आगे कौरवों और पाण्डवों के दारुण युद्ध का वृत्तान्त कहता हूँ, आप मन लगाकर सुनिए। महारथी अर्जुन के दिव्य अस्त्र-शस्त्रों के प्रहार से जैसे आपके पक्ष के वीर नित्य मरते थे वैसे ही पाण्डवों की महासेना को भीष्म भी अपनी पूर्वोक्त प्रतिज्ञा के अनुसार, नित्य मारते थे ॥३।५॥ कौरवों सहित भीष्म को एक ओर, और पाञ्चालों सहित अर्जुन को दूसरी ओर, युद्ध करते देखकर लोग यह सन्देह करने लगे कि किस पक्ष की जय होगी। सब यही समझने लगे कि आज प्रलय हो जायगा। दसवें दिन अर्जुन और भीष्म के भयङ्कर युद्ध में घोर हत्याकाण्ड होते देख पड़ा। हे राजेन्द्र! उस भयानक संग्राम में महारथी, श्रेष्ठ अस्त्रों के ज्ञाता, भीष्म पितामह नित्य दस हजार योद्धाओं को मारते थे। जिनके नाम और गोत्र भी नहीं मालूम थे, ऐसे अन्यान्य देशों के शूर और युद्ध में पीठ न दिखाने-वाले योद्धा भीष्म के हाथों मारे गये ॥६।९॥ इस

चिन्तयित्वा महाबाहुः पिता देवव्रतस्तव ।
अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् ॥ १२ ॥
युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
शृणुष्व वचनं तात धर्म्यं स्वर्ग्यं च जल्पतः ॥ १३ ॥
निर्विण्णोऽस्मि भृशं तात देहेनाऽनेन भारत ।
घ्नतश्च मे गतः कालः सुबहून्प्राणिनो रणे ॥ १४ ॥
तस्मात्पार्थं पुरोधाय पञ्चालान्सृञ्जयांस्तथा ।
मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् ॥ १५ ॥
तस्य तन्मतमाज्ञाय पाण्डवः सत्यदर्शनः ।
भीष्मं प्रति ययौ राजा संग्रामे सह सृञ्जयैः ॥ १६ ॥
धृष्टद्युम्नस्ततो राजन्पाण्डवश्च युधिष्ठिरः ।
श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्बलम् ॥ १७ ॥
अभिद्रवध्वं युद्ध्यध्वं भीष्मं जयत संयुगे ।
रक्षिताः सत्यसन्धेन जिष्णुना रिपुजिष्णुना ॥ १८ ॥
अयं चापि महेष्वासः पार्षतो वाहिनीपतिः ।
भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् ॥ १९ ॥
मा वो भीष्माद्भयं किञ्चिदस्त्वद्य युधि सृञ्जयाः ।
ध्रुवं भीष्मं विजेष्यामः पुरस्कृत्य शिखण्डिनम् ॥ २० ॥
ते तथा समयं कृत्वा दशमेऽहनि पाण्डवाः ।
ब्रह्मलोकपरा भूत्वा सञ्जग्मुः क्रोधमूर्छिताः ॥ २१ ॥

प्रकार दस दिन तक पाण्डव-सेना का संहार करने से अन्त को धर्मात्मा भीष्म अपने जीवन से ऊब गये । उनके मन में यह इच्छा उत्पन्न हुई कि मैंने बहुत लोगों की हत्या की है । अब मुझे मर ही जाना श्रेष्ठ है । अतएव अपनी मृत्यु की इच्छा करके, और "अब मनुष्य-हत्या नहीं करूंगा" ऐसा विचार करके भीष्म ने युधिष्ठिर से कहा हे पाण्डव ! तुम सब शास्त्रों के जाननेवाले हो, इसलिए मैं जो धर्मवर्द्धक और स्वर्गदायक वचन कहता हूँ, उन्हें सुनो ॥१०।१३॥ हे पुत्र ! मैंने बहुत से प्राणियों को रण में मारा है । मेरे बहुत बड़े जीवन का अधिक अंश इसी क्रूर कर्म के करने में व्यतीत हुआ है । इस समय जीवन से मेरा जी ऊब गया है । मैं अब जीवित रहना नहीं चाहता । इसलिए जो तुम मेरा प्रिय करना चाहते हो तो पाञ्चालों और सृञ्जयों सहित अर्जुन को आगे करके मुझे मारने का यत्न करो ॥१४।१५॥ प्रियदर्शन पाण्डवश्रेष्ठ युधिष्ठिर ने देवव्रत भीष्म की यह इच्छा जानकर उसी समय सृञ्जयों के साथ उन पर आक्रमण किया । धृष्टद्युम्न और युधिष्ठिर यह कह कर अपनी सब सेना को आक्रमण के लिए उत्साहित करने लगे कि "हे सैनिक वीरो ! दौड़ो, आक्रमण करो, युद्ध करो और भीष्म को जीत लो । शत्रुदमन सत्यप्रतिज्ञ अर्जुन और महाबाहु भीमसेन तुम्हारी रक्षा करेंगे ॥१६।१७॥ हे सृञ्जयगण ! संग्राम में

शिखण्डिनं पुरस्कृत्य पाण्डवं च धनञ्जयम् ।
भीष्मस्य पातने यत्नं परमं ते समास्थिताः ॥ २२ ॥
ततस्तव सुतादिष्टा नानाजनपदेश्वराः ।
द्रोणेन सह पुत्रेण सहसेना महाबलाः ॥ २३ ॥
दुःशासनश्च बलवान्सह सर्वैः सहोदरैः ।
भीष्मं समरमध्यस्थं पालयाञ्चक्रिरे तदा ॥ २४ ॥
ततस्तु तावकाः शूराः पुरस्कृत्य महाव्रतम् ।
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ॥ २५ ॥
चेदिभिस्तु सपञ्चालैः सहितो वानरध्वजः ।
ययौ शान्तनवं भीष्मं पुरस्कृत्य शिखण्डिनम् ॥ २६ ॥
द्रोणपुत्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवम् ।
अभिमन्युः सहामात्यं दुर्योधनमयोधयत् ॥ २७ ॥
विराटस्तु सहानीकः सहसेनं जयद्रथम् ।
वृद्धक्षत्रस्य दायादमाससाद परन्तप ॥ २८ ॥
मद्रराजं महेष्वासं सहसैन्यं युधिष्ठिरः ।
भीमसेनोऽभिगुप्तस्तु नागानीकमुपाद्रवत् ॥ २९ ॥
अप्रधृष्यमनावार्यं सर्वशस्त्रभृतां वरम् ।
द्रौणिं प्रतिययौ यत्तः पाञ्चाल्यः सह सोदरैः ॥ ३० ॥
कर्णिकारध्वजं चैव सिंहकेतुररिन्दमः ।
प्रत्युज्जगाम सौभद्रं राजपुत्रो बृहद्बलः ॥ ३१ ॥

---

भीष्म से तुम्हें किञ्चित्मात्र भी भय नहीं है । हम लोग शिखण्डी को आगे करके आज भीष्म को अवश्य मार लेंगे ।" हे महाराज ! दसवें दिन इस प्रकार प्रतिज्ञा करके, ब्रह्मलोक अथवा विजय की प्राप्ति के लिए यत्न करते हुए पाण्डवगण, कुपित शिखण्डी और अर्जुन को आगे करके भीष्म की ओर बढ़े ॥२०।२२॥ हे राजेन्द्र ! तब आपकी और दुर्योधन की आज्ञा से अनेक देशों के महाबली राजा लोग, द्रोणाचार्य, अश्वत्थामा, सब भाइयों के साथ बलवान् दुःशासन और कौरव पक्ष की सेना, सब लोग मिलकर समरभूमि के मध्य भीष्म की रक्षा करने लगे । आपके पक्ष के शूर योद्धा लोग महाव्रत भीष्म के अनुगामी होकर शिखण्डी को आगे करके आते हुए पाण्डवों से घोर युद्ध करने लगे ॥२३।२५॥ उधर चेदि और पाञ्चाल-देश के श्रेष्ठ वीरों को साथ लेकर कपिध्वज महारथी अर्जुन, शिखण्डी को आगे रखकर, भीष्म से युद्ध करने लगे । सात्यकि अश्वत्थामा से, धृष्टकेतु पौरव से, युधामन्यु अनुचरों सहित दुर्योधन से, सेना सहित राजा विराट सेना सहित महारथी जयद्रथ से, महाराज युधिष्ठिर सेना सहित महाधनुर्धर शल्य से, सुरक्षित भीमसेन गजारोही सेना से और भाइयों सहित सेनापति धृष्टद्युम्न अधृष्य, अनिवार्य, सब शस्त्रधारियों में श्रेष्ठ द्रोणाचार्य से युद्ध करने लगे ॥२६।३०॥ कर्णिकारचिह्नयुक्त ध्वजावाले रथ पर स्थित वीर अभिमन्यु से युद्ध करने

शिखण्डिनं च पुत्रास्ते पाण्डवं च धनञ्जयम् ।
राजभिः समरे पार्थमभिपेतुर्जिघांसवः ॥ ३२ ॥
तस्मिन्नतिमहाभीमे सेनयोर्वै पराक्रमे ।
सम्प्रधावत्स्वनीकेषु मेदिनी समकम्पत ॥ ३३ ॥
तान्यनीकान्यनीकेषु समसज्जन्त भारत ।
तावकानां परेषां च दृष्ट्वा शान्तनवं रणे ॥ ३४ ॥
ततस्तेषां प्रतप्तानामन्योन्यमभिधावताम् ।
प्रादुरासीन्महाशब्दो दिक्षु सर्वासु भारत ॥ ३५ ॥
शङ्खदुन्दुभिघोषश्च वारणानां च बृंहितैः ।
सिंहनादश्च सैन्यानां दारुणः समपद्यत ॥ ३६ ॥
सा च सर्वनरेन्द्राणां चन्द्रार्कसदृशी प्रभा ।
वीराङ्गदकिरीटेषु निष्प्रभा समपद्यत ॥ ३७ ॥
रजोमेघास्तु सञ्जज्ञुः शस्त्रविद्युद्भिरावृताः ।
धनुषां चापि निर्घोषो दारुणः समपद्यत ॥ ३८ ॥
बाणशङ्खप्रणादाश्च भेरीणां च महास्वनाः ।
रथघोषश्च सञ्जज्ञे सेनयोरुभयोरपि ॥ ३९ ॥
प्रासशक्त्यृष्टिसङ्घैश्च बाणौघैश्च समाकुलम् ।
निष्प्रकाशमिवाऽऽकाशं सेनयोः समपद्यत ॥ ४० ॥
अन्योन्यं रथिनः पेतुर्वाजिनश्च महाहवे ।
कुञ्जरान्कुञ्जरा जघ्नुः पादातांश्च पदातयः ॥ ४१ ॥

के लिए सिंहकेतुवाले रथ पर स्थित राजकुमार बृहद्बल आगे बढ़े। आपके अन्य पुत्र और अन्य राजा लोग शिखण्डी और अर्जुन को मार डालने की इच्छा से उन पर आक्रमण करने चले ॥३१।३२॥ इस प्रकार दोनों ओर की भारी सेनाएँ अपना पराक्रम दिखाती हुई इधर से उधर परस्पर आक्रमण करने के लिए दौड़ीं। उस समय उनके वेग से पृथ्वी काँपने लगी। संग्राम में भीष्म को युद्ध करते देखकर आपकी और पाण्डवों की सेना दोनों, प्राणों का मोह छोड़कर, घोर युद्ध करने लगीं। प्रहार के लिए चेष्टा करते हुए और परस्पर आक्रमण के लिए दौड़ते हुए वीरों का घोर कोलाहल दसों दिशाओं में व्याप्त हो गया। शङ्ख-नगाड़े आदि का शब्द, हाथियों का शब्द और सब सैनिकों का दारुण सिंहनाद चारों ओर सुन पड़ने लगा ॥३३।३६॥ वीरों के उत्कृष्ट हार, अङ्गद और किरीट आदि की प्रभा के आगे सब राजाओं की चन्द्र-सूर्य के समान प्रभा फीकी पड़ गई। उड़ी हुई धूल मेघ की घटा सी छा गई। उसके मध्य शस्त्रों की चमक बिजली सी जान पड़ती थी। दोनों दलों के योद्धा जो धनुष चढ़ाते थे उसका शब्द, बाणों का शब्द नगाड़े आदि का शब्द और चलते हुए रथों की घरघराहट का शब्द मेघगर्जन सा प्रतीत होता था। ॥३७।३९॥ प्रास, शक्ति, ऋष्टि और बाण आदि असंख्य शस्त्रों से परिपूर्ण आकाशमण्डल प्रकाश-हीन सा हो

तत्राऽऽसीत्सुमहद्युद्धं कुरूणां पाण्डवैः सह ।
भीष्महेतोर्नरव्याघ्र श्येनयोरामिषे यथा ॥ ४२ ॥
तेषां समागमो घोरो बभूव युधि सङ्गतः ।
अन्योन्यस्य वधार्थाय जिगीषूणां महाहवे ॥ ४३ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मोपदेशे पञ्चादशाधिकशततमोऽध्यायः ॥ ११५ ॥

गया। रथी लोग रथी वीरों को और घुड़सवार योद्धा घुड़सवार योद्धाओं को मार-मारकर गिराने लगे। हाथियों को हाथी और पैदलों को पैदल मारने लगे। हे महाराज! जैसे मास के लिए दो श्येन (बाज) युद्ध करते है वैसे ही भीष्म के जीवन के लिए कौरव और पाण्डव तुमुल युद्ध करने लगे। वे एक दूसरे को मारने और जीतने के लिए घोर युद्ध कर रहे थे ॥४०।४३॥

भीष्मपर्व का एक सौ पन्द्रह अध्याय समाप्त हुआ ॥ ११५ ॥

अथ षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

सञ्जय उवाच—अभिमन्युर्महाराज तव पुत्रमयोधयत् ।
महत्या सेनया युक्तं भीष्महेतोः पराक्रमी ॥ १ ॥
दुर्योधनो रणे कार्ष्णि नवभिर्नतपर्वभिः ।
आजघानोरसि क्रुद्धः पुनश्चैनं त्रिभिः शरैः ॥ २ ॥
तस्य शक्तिं रणे कार्ष्णिर्मृत्योर्घोरां स्वसामिव ।
प्रेषयामास संक्रुद्धो दुर्योधनरथं प्रति ॥ ३ ॥
तामापतन्तीं सहसा घोररूपां विशाम्पते ।
द्विधा चिच्छेद ते पुत्रः क्षुरप्रेण महारथः ॥ ४ ॥
तां शक्तिं पतितां दृष्ट्वा कार्ष्णिः परमकोपनः ।
दुर्योधनं त्रिभिर्बाणैर्बाह्वोरुरसि चाऽर्पयत् ॥ ५ ॥
पुनश्चैनं शरैर्घोरैराजघान स्तनान्तरे ।
दशभिर्भरतश्रेष्ठ भरतानां महारथः ॥ ६ ॥
तद्युद्धमभवद्घोरं चित्ररूपं च भारत ।
इन्द्रियप्रीतिजननं सर्वपार्थिवपूजितम् ॥ ७ ॥

एक सौ सोलह अध्याय ॥ ११६ ॥

सञ्जय ने कहा—हे राजेन्द्र! महापराक्रमी अभिमन्यु भीष्म को मारने के लिए असंख्य सेना-परिवृत राजा दुर्योधन से युद्ध करने लगे। राजा दुर्योधन ने अति तीक्ष्ण नव बाण अभिमन्यु को मारे। फिर कुपित होकर तीन बाण और भी उनकी छाती में मारे। ॥१।२॥ तब अभिमन्यु ने क्रोध करके मृत्यु की जिह्वा के समान भयङ्कर लोहमयी शक्ति दुर्योधन के रथ पर फेंकी। हे राजेन्द्र! आपके पुत्र दुर्योधन ने उस भयानक शक्ति को आते देखकर तीक्ष्ण क्षुरप्र बाण से उसके दो टुकड़े कर डाले ॥३।४॥ हे भारत! महा-

भीष्मस्य निधनार्थाय पार्थस्य विजयाय च ।
युयुधाते रणे वीरौ सौभद्रकुरुपुङ्गवौ ॥ ८ ॥
सात्यकिं रभसं युद्धे द्रौणिर्ब्राह्मणपुङ्गवः ।
आजघानोरसि क्रुद्धो नाराचेन परन्तपः ॥ ९ ॥
शैनेयोऽपि गुरोः पुत्रं सर्वमर्मसु भारत ।
अताडयदमेयात्मा नवभिः कङ्कवाजितैः ॥ १० ॥
अश्वत्थामा तु समरे सात्यकिं नवभिः शरैः ।
त्रिंशता च पुनस्तूर्णं बाह्वोरुरसि चाऽपर्यत् ॥ ११ ॥
सोऽतिविद्धो महेष्वासो द्रोणपुत्रेण सात्वतः ।
द्रोणपुत्रं त्रिभिर्बाणैराजघान महायशाः ॥ १२ ॥
पौरवो धृष्टकेतुं च शरैराच्छाद्य संयुगे ।
बहुधा दारयाञ्चक्रे महेष्वासं महारथः ॥ १३ ॥
तथैव पौरवं युद्धे धृष्टकेतुर्महारथः ।
त्रिंशता निशितैर्बाणैर्विव्याधाऽऽशु महाभुजः ॥ १४ ॥
पौरवस्तु धनुश्छित्वा धृष्टकेतोर्महारथः ।
ननाद बलवन्नादं विव्याध च शितैः शरैः ॥ १५ ॥
सोऽन्यत्कार्मुकमादाय पौरवं निशितैः शरैः ।
आजघान महाराज त्रिसप्तत्या शिलीमुखैः ॥ १६ ॥
तौ तु तत्र महेष्वासौ महामात्रौ महारथौ ।
महता शरवर्षेण परस्परमविध्यताम् ॥ १७ ॥
अन्योन्यस्य धनुश्छित्वा हयान्हत्वा च भारत ।
विरथावसियुद्धाय समीयतुरमर्षणौ ॥ १८ ॥

वीर अभिमन्यु ने दुर्योधन की छाती और भुजाओं में पहले तीन और फिर दस बाण मारे। उन दोनों वीरों का वह घोर और विचित्र युद्ध देखकर सब दर्शक बहुत प्रसन्न हुए और राजा लोग उनकी प्रशंसा करने लगे। भीष्म को मारने और अर्जुन की विजय के लिए वीर अभिमन्यु दुर्योधन से घोर युद्ध करने लगे ॥५।८॥ उधर शत्रुनाशन ब्राह्मणश्रेष्ठ अश्वत्थामा ने कुपित होकर सात्यकि की छाती में एक नाराच बाण मारा। सात्यकि ने भी गुरुपुत्र अश्वत्थामा के मर्मस्थलों में कङ्कपत्र-भूषित नव बाण मारे। उन्होंने भी सात्यकि के दोनों हाथों और छाती में पहले नव और फिर तीस बाण मारे। महायशस्वी सात्यकि ने अश्वत्थामा के बाणों से बहुत घायल और व्यथित होकर उनको फिर तीन बाण मारे ॥९।१२॥ पौरव ने धृष्टकेतु के ऊपर असंख्य बाण बरसाये, तब धृष्टकेतु ने तीस बाणों से पौरव को घायल किया। महारथी पौरव ने धृष्टकेतु का धनुष काट डाला और अनेक तीक्ष्ण बाणों से शत्रु को पीड़ित करके घोर सिंहनाद किया ॥१३।१५॥

आर्षभे चर्मणी चित्रे शतचन्द्रपुरस्कृते ।
तारकाशतचित्रे च निस्त्रिंशौ सुमहाप्रभौ ॥ १९ ॥
प्रगृह्य विमलौ राजंस्तावन्योन्यमभिद्रुतौ ।
वासितासङ्गमे यत्तौ सिंहाविव महावने ॥ २० ॥
मण्डलानि विचित्राणि गतप्रत्यागतानि च ।
चेरतुर्दर्शयन्तौ च प्रार्थयन्तौ परस्परम् ॥ २१ ॥
पौरवो धृष्टकेतुं तु शङ्खदेशे महासिना ।
ताडयामास संक्रुद्धस्तिष्ठ तिष्ठेति चाऽब्रवीत् ॥ २२ ॥
चेदिराजोऽपि समरे पौरवं पुरुषर्षभम् ।
आजघान शिताग्रेण जत्रुदेशे महासिना ॥ २३ ॥
तावन्योन्यं महाराज समासाद्य महाहवे ।
अन्योन्यवेगाभिहतौ निपेततुररिन्दमौ ॥ २४ ॥
ततः स्वरथमारोप्य पौरवं तनयस्तव ।
जयत्सेनो रथेनाऽऽजावपोवाह रणाजिरात् ॥ २५ ॥
धृष्टकेतुं तु समरे माद्रीपुत्रः प्रतापवान् ।
अपोवाह रणे क्रुद्धः सहदेवः पराक्रमी ॥ २६ ॥
चित्रसेनः सुशर्माणं विध्वा बहुभिरायसैः ।
पुनर्विव्याध तं षष्ट्या पुनश्च नवभिः शरैः ॥ २७ ॥
सुशर्मा तु रणे क्रुद्धस्तव पुत्रं विशाम्पते ।
दशभिर्दशभिश्चैव विव्याध निशितैः शरैः ॥ २८ ॥

धृष्टकेतु ने शीघ्रता से दूसरा धनुष लेकर पौरव को निहत्तर तीक्ष्ण बाण मारे। इसी प्रकार वे दोनों महा-वीर महारथी एक-दूसरे पर असह्य बाण बरसाते हुए घोर युद्ध करने लगे। दोनों ने दोनों के धनुष काट डाले और रथ तथा घोड़े भी नष्ट कर दिये॥१६।१८॥ इसके पश्चात् रथहीन दोनों योद्धा खड्ग-युद्ध करने के लिए प्रस्तुत हुए। जैसे महावन में एक सिंहनी के लिए दो सिंह परस्पर झपटें, वैसे ही वे दोनों वीर शतचन्द्रयुक्त ढालें और शततारकाचित्रित उत्कृष्ट खड्ग लेकर एक दूसरे पर झपटे। वे आगे बढ़कर, पीछे हटकर, अनेक प्रकार के पैंतरे दिखाते हुए परस्पर आक्रमण और युद्ध करने लगे॥१९।२१॥ अत्यन्त कुपित पौरव ने "ठहर-ठहर" कहकर धृष्टकेतु के सिर पर खड्ग का प्रहार किया। चेदिराज धृष्टकेतु ने भी बढ़कर पुरुषश्रेष्ठ पौरव के कन्धे पर तीक्ष्ण खड्ग मारा। हे महाराज! वे दोनों वीर इस प्रकार वेग से परस्पर प्रहार करके अचेत होकर पृथ्वी पर गिर पड़े। तब आपके पुत्र जयत्सेन पौरव को, अपने रथ पर बिठाकर, समर-भूमि से हटा ले गये। क्रुद्ध पराक्रमी सहदेव धृष्टकेतु को लेकर समर से हट गया॥२२।२६॥ हे राजेन्द्र! आपके पुत्र चित्रसेन ने पाण्डवपक्ष के सुशर्मा नामक राजा को लोहमय बाणों से घायल कर दिया। इसके अनन्तर साठ बाण, फिर नौ बाण और मारे। सुशर्मा ने भी क्रुद्ध होकर

चित्रसेनश्च तं राजंस्त्रिंशता नतपर्वभिः ।
आजघान रणे क्रुद्धः स च तं प्रत्यविध्यत ॥ २९ ॥
भीष्मस्य समरे राजन्यशो मानं च वर्धयन् ।
सौभद्रो राजपुत्रं तु बृहद्बलमयोधयत् ॥ ३० ॥
पार्थहेतोः पराक्रान्तो भीष्मस्याऽऽयोधनं प्रति ।
आर्जुनिं कोसलेन्द्रस्तु विध्वा पञ्चभिरायसैः ॥ ३१ ॥
पुनर्विव्याध विंशत्या शरैः सन्नतपर्वभिः ।
सौभद्रः कोसलेन्द्रं तु विव्याधाऽष्टभिरायसैः ॥ ३२ ॥
नाऽकम्पयत संग्रामे विव्याध च पुनः शरैः ।
कौसल्यस्य धनुश्चापि पुनश्चिच्छेद फाल्गुनिः ॥ ३३ ॥
आजघान शरैश्चापि त्रिंशता कङ्कपत्रिभिः ।
सोऽन्यत्कार्मुकमादाय राजपुत्रो बृहद्बलः ॥ ३४ ॥
फाल्गुनिं समरे क्रुद्धो विव्याध बहुभिः शरैः ।
तयोर्युद्धं समभवद्भीष्महेतोः परन्तप ॥ ३५ ॥
संरब्धयोर्महाराज समरे चित्रयोधिनोः ।
यथा देवासुरे युद्धे बलिवासवयोरभूत् ॥ ३६ ॥
भीमसेनो गजानीकं योधयन्बह्वशोभत ।
यथा शक्रो वज्रपाणिर्दारयन्पर्वतोत्तमान् ॥ ३७ ॥
ते वध्यमाना भीमेन मातङ्गा गिरिसन्निभाः ।
निपेतुरुर्व्यां सहिता नादयन्तो वसुन्धराम् ॥ ३८ ॥

चित्रसेन को दश बाण मारे । फिर तीस बाण और मारे । हे महाराज ! उस भीष्म सम्बन्धी समर में अपने यश और कुल के मान को बढ़ाते हुए कुमार अभिमन्यु राजा बृहद्बल से घोर युद्ध करने लगे॥२७। ३०॥ अर्जुन जिसमें अनायास भीष्म को मार सकें, इसलिए पराक्रमी अभिमन्यु भी उनका सहायता कर रहे थे । कोशलेश वीर बृहद्बल ने अभिमन्यु को पहले लोहमय पाँच बाण मारे, उसके अनन्तर फिर बीस तीक्ष्ण बाण मारे । अभिमन्यु ने उस प्रहार से तनिक भी विचलित न होकर बृहद्बल को आठ लोहमय बाण मारे । उसके अनन्तर शत्रु का धनुष काटकर कङ्क पत्रयुक्त तीस विकट बाण और मारे॥३०।३४॥ राजपुत्र बृहद्बल भी दूसरा धनुष लेकर अभिमन्यु को अनेक प्रकार के बाणों से पीड़ित करने लगे । जैसे देवासुर युद्ध में बलि और इन्द्र युद्ध करते थे वैसे ही दोनों वीर क्षत्रिय कुपित होकर, भीष्म के वध और रक्षा के लिए, परस्पर घोर और विचित्र युद्ध कर रहे थे । हे महाराज ! उधर भीमसेन हाथियों के दल में प्रवेश होकर उनका सहार करने लगे । जैसे वज्र पाणि इन्द्र पर्वतों को तोड़ रहे हों वैसे ही गदा हाथ में लेकर हाथियों को मारते हुए भीमसेन शोभायमान हुए । उनके प्रहार से पर्वततुल्य हाथी घोर चीत्कार से पृथ्वी को कँपाते हुए गिरने लगे । अञ्जन के समान काले रङ्ग के, पर्वत जैसे ऊँचे,

गिरिमात्रा हि ते नागा भिन्नाञ्जनचयोपमाः ।
विरेजुर्वसुधां प्राप्ता विकीर्णा इव पर्वताः ॥ ३९ ॥
युधिष्ठिरो महेष्वासो मद्रराजानमाहवे ।
महत्या सेनया गुप्तं पीडयामास सङ्गतम् ॥ ४० ॥
मद्रेश्वरश्च समरे धर्मपुत्रं महारथम् ।
पीडयामास संरब्धो भीष्महेतोः पराक्रमी ॥ ४१ ॥
विराटं सैन्धवो राजा विध्वा सन्नतपर्वभिः ।
नवभिः सायकैस्तीक्ष्णैस्त्रिंशता पुनरार्पयत् ॥ ४२ ॥
विराटश्च महाराज सैन्धवं वाहिनीपतिः ।
त्रिंशद्भिर्निशितैर्बाणैराजघान स्तनान्तरे ॥ ४३ ॥
चित्रकार्मुकनिस्त्रिंशौ चित्रवर्मायुधध्वजौ ।
रेजतुश्चित्ररूपौ तौ संग्रामे मत्स्यसैन्धवौ ॥ ४४ ॥
द्रोणः पाञ्चालपुत्रेण समागम्य महारणे ।
महासमुदयं चक्रे शरैः सन्नतपर्वभिः ॥ ४५ ॥
ततो द्रोणो महाराज पार्षतस्य महद्धनुः ।
छित्त्वा पञ्चाशतेषूणां पार्षतं समविध्यत ॥ ४६ ॥
सोऽन्यत्कार्मुकमादाय पार्षतः परवीरहा ।
द्रोणस्य मिषतो युद्धे प्रेषयामास सायकान् ॥ ४७ ॥
ताञ्छराञ्छरघातेन चिच्छेद स महारथः ।
द्रोणो द्रुपदपुत्राय प्राहिणोत्पञ्च सायकान् ॥ ४८ ॥
ततः क्रुद्धो महाराज पार्षतः परवीरहा ।
द्रोणाय चिक्षेप गदां यमदण्डोपमां रणे ॥ ४९ ॥

---

गजराज पृथ्वी पर गिरकर इधर उधर बिखरे हुए पर्वतों के समान जान पड़ते थे ॥२४।३९॥ महाधनुर्द्धर राजा युधिष्ठिर, अपनी सेना के द्वारा सुरक्षित होकर, समर के लिए उद्यत मद्रराज शल्य को पीड़ित करने लगे। शल्य भी भीष्म की रक्षा के लिए पराक्रम दिखाकर महारथी युधिष्ठिर को पीड़ा पहुँचाते हुए युद्ध करने लगे। उधर सिन्धुराज जयद्रथ ने राजा विराट को पहले तीक्ष्ण नव बाणों से पीड़ित करके फिर तीस तीक्ष्ण बाण उनकी छाती में मारे। राजा विराट ने क्रुद्ध होकर जयद्रथ की छाती में तीस तीक्ष्ण बाण मारे। विचित्र धनुष, खड्ग, कवच, शस्त्र, ध्वजा आदि से सुशोभित दोनों वीर राजा इस प्रकार घोर संग्राम करने लगे ॥४०।४४॥ हे राजेन्द्र! महात्मा द्रोणाचार्य राजकुमार धृष्टद्युम्न के सम्मुख जाकर घोर और अद्भुत युद्ध करने लगे। उन्होंने धृष्टद्युम्न का धनुष काटकर स्फूर्ति के साथ पचास बाण मारे। शत्रुनाशन धृष्टद्युम्न ने दूसरा धनुष लेकर द्रोणाचार्य के ऊपर अनेक बाण छोड़े। महारथी द्रोणाचार्य ने

तामापतन्तीं सहसा हेमपट्टविभूषिताम् ।
शरैः पञ्चाशता द्रोणो वारयामास संयुगे ॥ ५० ॥
सा छिन्ना बहुधा राजन्द्रोणचापच्युतैः शरैः ।
चूर्णीकृता विशीर्यन्ती पपात वसुधातले ॥ ५१ ॥
गदां विनिहतां दृष्ट्वा पार्षतः शत्रुतापनः ।
द्रोणाय शक्तिं चिक्षेप सर्वपारसवीं शुभाम् ॥ ५२ ॥
तां द्रोणो नवभिर्बाणैश्चिच्छेद युधि भारत ।
पार्षतं च महेष्वासं पीडयामास संयुगे ॥ ५३ ॥
एवमेतन्महायुद्धं द्रोणपार्षतयोरभूत् ।
भीष्मं प्रति महाराज घोररूपं भयानकम् ॥ ५४ ॥
अर्जुनः प्राप्य गाङ्गेयं पीडयन्निशितैः शरैः ।
अभ्यद्रवत संयत्तो वने मत्तमिव द्विपम् ॥ ५५ ॥
प्रत्युद्ययौ च तं राजा भगदत्तः प्रतापवान् ।
त्रिधा भिन्नेन नागेन मदान्धेन महाबलः ॥ ५६ ॥
तमापतन्तं सहसा महेन्द्रगजसन्निभम् ।
परं यत्नं समास्थाय बीभत्सुः प्रत्यपद्यत ॥ ५७ ॥
ततो गजगतो राजा भगदत्तः प्रतापवान् ।
अर्जुनं शरवर्षेण वारयामास संयुगे ॥ ५८ ॥
अर्जुनस्तु ततो नागमायान्तं रजतोपमैः ।
विमलैरायसैस्तीक्ष्णैरविध्यत महारणे ॥ ५९ ॥

उन बाणों को अपने बाणों से निष्फल कर दिया। इसके पश्चात् अत्यन्त तीक्ष्ण पाँच बाण द्रोणाचार्य ने धृष्टद्युम्न को मारे ॥४५।४८॥ तब उन्होंने अत्यन्त कुपित होकर यमदण्डतुल्य भारी गदा द्रोणाचार्य के ऊपर फेंकी। द्रोणाचार्य ने सोने की पट्टियों से मढ़ी उस गदा को आते देखकर पचास बाणों से उसके टुकड़े टुकड़े कर डाले। द्रोण के बाणों से कटकर चूर्ण सी हो गई वह गदा पृथ्वी पर गिर पड़ी ॥४९।५१॥ शत्रुतापन धृष्टद्युम्न ने गदा का प्रहार व्यर्थ होते देखकर एक लोहे की बनी शक्ति द्रोणाचार्य के ऊपर फेंकी। द्रोण ने नव बाणों से वह शक्ति काटकर गिरा दी, और अनेक तीक्ष्ण बाणों से धृष्टद्युम्न को पीड़ित किया। भीष्म के कारण द्रोणाचार्य और धृष्टद्युम्न ने इस प्रकार महाघोर युद्ध किया ॥५२।५४॥ महावीर अर्जुन भीष्म को देखकर, जङ्गली हाथी जैसे दूसरे जङ्गली हाथी पर आक्रमण करने के लिए दौड़ता है वैसे ही, तीक्ष्ण बाण बरसाते हुए उनकी ओर चले। महाप्रतापी राजा भगदत्त मदान्ध हाथी पर सवार थे ॥५५।५७॥ अर्जुन को आते देखकर, उन्हें रोकने के लिए वे आगे बढ़े। भगदत्त को हाथी पर से बाण बरसाते देख महारथी अर्जुन यत्नपूर्वक उन पर बाण छोड़ने लगे। उस महारण में वीर अर्जुन चाँदी के समान चमकीले लोहे के बाण उस गजराज को मारने लगे। अर्जुन बारम्बार शिखण्डी से कहने लगे—"भीष्म

शिखण्डिनं च कौन्तेयो याहि याहीत्यचोदयत् ।
भीष्मं प्रति महाराज जह्येनमिति चाऽब्रवीत् ॥ ६० ॥
प्राग्ज्योतिषस्ततो हित्वा पाण्डवं पाण्डुपूर्वज ।
प्रययौ त्वरितो राजन्द्रुपदस्य रथं प्रति ॥ ६१ ॥
ततोऽर्जुनो महाराज भीष्ममभ्यद्रवद् द्रुतम् ।
शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्तत ॥ ६२ ॥
ततस्ते तावकाः शूराः पाण्डवं रभसं युधि ।
समभ्यधावन्क्रोशन्तस्तदद्भुतमिवाऽभवत् ॥ ६३ ॥
नानाविधान्यनीकानि पुत्राणां ते जनाधिप ।
अर्जुनो व्यधमत्काले दिवीवाऽभ्राणि मारुतः ॥ ६४ ॥
शिखण्डी तु समासाद्य भरतानां पितामहम् ।
इषुभिस्तूर्णमव्यग्रो बहुभिः स समाचिनोत् ॥ ६५ ॥
रथाग्न्यगारश्चापार्चिरसिशक्तिगदेन्धनः ।
शरसङ्घमहाज्वालः क्षत्रियान्समरेऽदहत् ॥ ६६ ॥
यथाऽग्निः सुमहानिद्धः कक्षे चरति सानिलः ।
तथा जज्वाल भीष्मोऽपि दिव्यान्यस्त्राण्युदीरयन्॥ ६७ ॥
सोमकांश्च रणे भीष्मो जघ्ने पार्थपदानुगान् ।
न्यवारयत तत्सैन्यं पाण्डवस्य महारथः ॥ ६८ ॥
सुवर्णपुङ्खैरिषुभिः शितैः सन्नतपर्वभिः ।
नादयन्स दिशो भीष्मः प्रदिशश्च महाहवे ॥ ६९ ॥

के पास जाओ, बढ़ो, उन्हें मारो"॥५८।६०॥तब राजा भगदत्त अर्जुन को छोड़कर शीघ्रता के साथ राजा द्रुपद के रथ के पास चले। इधर शिखण्डी को आगे करके अर्जुन स्फूर्ति के साथ भीष्म की ओर चले। उस समय घमासान युद्ध होने लगा। उधर से कौरव पक्ष के वीर भी कुपित होकर चिल्लाते और सिंहनाद करते हुए वेग के साथ अर्जुन की ओर दौड़े। उस समय अर्जुन का अद्भुत पराक्रम देख पड़ा ॥६१।६३॥ वायु जैसे आकाश में मेघों को छिन्न-भिन्न कर डालती है, वैसे ही वीर अर्जुन आपके पुत्रों की सेनाओं को नष्ट-भ्रष्ट करने लगे। पितामह भीष्म को देखकर शिखण्डी स्फूर्ति के साथ अव्यग्रभाव से उन पर बाण बरसाने लगे। रथरूप कुण्ड में प्रज्वलित, धनुषरूप ज्वाला से शोभित, खड्ग, गदा, शक्ति आदि शस्त्ररूप ईंधन से प्रज्वलित, बाणरूप चिनगारियों से परिपूर्ण भीष्म-रूप अग्नि युद्ध में उस समय क्षत्रिय वीरों को भस्म करने लगा॥६४।६६॥अग्नि जैसे वायु की सहायता से बढ़कर वन को भस्म करती है वैसे ही भीष्म भी दिव्य अस्त्र छोड़ते हुए शत्रुसेना में प्रज्वलित हो उठे। अर्जुन के अनुगामी सब सोमकों को नष्ट करके भीष्म ने सारी पाण्डवसेना को हरा दिया। उस महायुद्ध में महावीर भीष्म ने सब दिशाओं को अपने सिंहनाद और मरते हुए वीरों के आर्तनाद से प्रतिध्वनित कर दिया। वे सुवर्णपुङ्खयुक्त तीक्ष्ण

पातयन्रथिनो राजन्हयांश्च सह सादिभिः ।
मुण्डतालवनानीव चकार स रथव्रजान् ॥ ७० ॥
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे ।
चकार समरे भीष्मः सर्वशस्त्रभृतां वरः ॥ ७१ ॥
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाऽशनेः ।
निशम्य सर्वतो राजन्समकम्पन्त सैनिकाः ॥ ७२ ॥
अमोघा न्यपतन्बाणाः पितुस्ते मनुजेश्वर ।
नाऽसजन्त शरीरेषु भीष्मचापच्युताः शराः ॥ ७३ ॥
निर्मनुष्यान्रथान्राजन्सुयुक्ताञ्जवनैर्हयैः ।
वातायमानानद्राक्षं ह्रियमाणान्विशाम्पते ॥ ७४ ॥
चेदिकाशिकरूपाणां सहस्राणि चतुर्दश ।
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ७५ ॥
अपरावर्तिनः शूराः सुवर्णविकृतध्वजाः ।
संग्रामे भीष्ममासाद्य सवाजिरथकुञ्जराः ॥ ७६ ॥
जग्मुस्ते परलोकाय व्यादितास्यमिवाऽन्तकम् ।
न तत्राऽऽसीद्रणे राजन्सोमकानां महारथः ॥ ७७ ॥
यः सम्प्राप्य रणे भीष्मं जीविते स्म मनो दधे ।
तांश्च सर्वान्रणे योधान्प्रेतराजपुरं प्रति ॥ ७८ ॥
नीतानमन्यन्त जना दृष्ट्वा भीष्मस्य विक्रमम् ।
न कश्चिदेनं समरे प्रत्युद्याति महारथः ॥ ७९ ॥
ऋते पाण्डुसुतं वीरं श्वेताश्वं कृष्णसारथिम् ।
शिखण्डिनं च समरे पाञ्चाल्यममितौजसम् ॥ ८० ॥

इति श्री महाभारते भीष्मपर्वाणि भीष्मवधपर्वाणि सकुलयुद्धे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

बाणों से रथियों, घुड़सवारों और घोड़ों को मार-मारकर गिराने लगे। उनके बाणों से सहस्रों रथों के झुण्ड मुण्डहीन धड़ों से परिपूर्ण होकर छटे हुए ताड़ के वन से जान पड़ने लगे॥६७।७०॥रथों, हाथियों और घोड़ों की पीठें मनुष्यों से रहित हो गईं। बिजली की कड़क से भी भयङ्कर उनके धनुष की प्रत्यञ्चा का शब्द सब ओर सुनकर सैनिक लोग काँप उठे। भीष्म के धनुष से छूटे हुए बाण लक्ष्य से कभी नहीं चूकते थे। वे अमोघ बाण वीरों के शरीरों को फोड़कर उस पार निकल जाते थे॥७१।७४॥मैंने देखा कि रथी और सारथी से रहित रथों को वायुवेगगामी घोड़े इधर-उधर लिये फिर रहे हैं। हे महाराज! चेदि, काशी, करूष आदि देशों के उच्च कुल में उत्पन्न महारथी, संग्राम से कभी विमुख न होनेवाले, शूर, सुवर्णमण्डित ध्वजाओं से शोभित रथों पर स्थित चौदह सहस्र क्षत्रिय अपनी चतुरङ्गिणी सेना सहित भीष्म के हाथ

से मारे गये॥७५।७७॥मुख फैलाये हुए महाकाल के समान भीष्म के सन्मुख जो आया उसी को लोगो ने समझ लिया कि अब यह बच नहीं सकता। सोमक-वंश के सभी महारथी योद्धाओं को भीष्म ने मार डाला। उस समय वीर अर्जुन और पराक्रमी शिखण्डी के अतिरिक्त और कोई भीष्म के सन्मुख जाने का साहस नहीं कर सका॥७७।८०॥

— ० —

भीष्मपर्व का एक सौ सोल्ह अध्याय समाप्त हुआ ॥ ११६ ॥

अथ सप्तदशाधिकशततमोऽध्याय ॥ ११७ ॥

सञ्जय उवाच—शिखण्डी तु रणे भीष्ममासाद्य पुरुषर्षभम् ।
दशभिर्निशितैर्भल्लैराजघान स्तनान्तरे ॥ १ ॥
शिखण्डिनं तु गाङ्गेयः क्रोधदीप्तेन चक्षुषा ।
सम्प्रैक्षत कटाक्षेण निर्दहन्निव भारत ॥ २ ॥
स्त्रीत्वं तस्य स्मरन्राजन्सर्वलोकस्य पश्यतः ।
नाऽऽजघान रणे भीष्मः स च तन्नाऽवबुद्धवान् ॥ ३ ॥
अर्जुनस्तु महाराज शिखण्डिनमभाषत ।
अभिद्रवस्व त्वरितं जहि चैनं पितामहम् ॥ ४ ॥
किं ते विवक्षया वीर जहि भीष्मं महारथम् ।
न ह्यन्यमनुपश्यामि कञ्चिद्यौधिष्ठिरे बले ॥ ५ ॥
यः शक्तः समरे भीष्मं प्रतियोद्धुमिहाऽऽहवे ।
ऋते त्वां पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ॥ ६ ॥
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ ।
शरैर्नानाविधैस्तूर्णं पितामहमवाकिरत् ॥ ७ ॥
अचिन्तयित्वा तान्बाणान्पिता देवव्रतस्तव ।
अर्जुनं समरे क्रुद्धं वारयामास सायकैः ॥ ८ ॥
तथैव च चमूं सर्वां पाण्डवानां महारथः ।
अप्रैषीत्स शरैस्तीक्ष्णैः परलोकाय मारिष ॥ ९ ॥

एक सौ सत्रह अध्याय ॥ ११७ ॥

सञ्जय ने कहा—हे महाराज ! भीष्म के पास पहुँचकर शिखण्डी ने उनकी छाती में दस तीक्ष्ण भल्ल बाण मारे। भीष्म ने क्रोध से प्रज्वलित तीव्र तिरछी दृष्टि से देखा; ऐसा जान पड़ा मानो वे उन्हें भस्म कर देंगे। किन्तु शिखण्डी को जन्म की स्त्री जानकर सब लोगों के सन्मुख भीष्म ने उनपर प्रहार नहीं किया। परन्तु शिखण्डी ने यह भीष्म का भाव नहीं जाना॥१।३॥महारथी भीष्म के पास खड़े हुए शिखण्डी से अर्जुन ने कहा—"हे वीर शिखण्डी ! अब विचार और संशय की आवश्यकता नहीं। वीर, भीष्म को मारने में शीघ्रता करो। युधिष्ठिर की सेना में तुम्हारे अतिरिक्त और कोई मुझे ऐसा नहीं देख

तथैव पाण्डवा राजन्सैन्येन महता वृताः ।
भीष्मं सञ्छादयामासुर्मेघा इव दिवाकरम् ॥ १० ॥
स समन्तात्परिवृतो भारतो भरतर्षभ ।
निर्ददाह रणे शूरान्वने वह्निरिव ज्वलन् ॥ ११ ॥
तत्राऽद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
अयोधयच्च यत्पार्थं जुगोप च पितामहम् ॥ १२ ॥
कर्मणा तेन समरे तव पुत्रस्य धन्विनः ।
दुःशासनस्य तुतुषुः सर्वे लोका महात्मनः ॥ १३ ॥
यदेकः समरे पार्थान्सार्जुनान्समयोधयत् ।
न चैनं पाण्डवा युद्धे वारयामासुरुल्वणम् ॥ १४ ॥
दुःशासनेन समरे रथिनो विरथीकृताः ।
सादिनश्च महेष्वासा हस्तिनश्च महाबलाः ॥ १५ ॥
विनिर्भिन्नाः शरैस्तीक्ष्णैर्निपेतुर्वसुधातले ।
शरातुरास्तथैवाऽन्ये दन्तिनो विद्रुता दिशः ॥ १६ ॥
यथाऽग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्चिरुल्वणम् ।
तथा जज्वाल पुत्रस्ते पाण्डुसेनां विनिर्दहन् ॥ १७ ॥
तं भारतमहामात्रे पाण्डवानां महारथः ।
जेतुं नोत्सहते कश्चिन्नाऽभ्युद्यातुं कथञ्चन ॥ १८ ॥
ऋते महेन्द्रतनयाच्छ्वेताश्वात्कृष्णसारथेः ।
स हि तं समरे राजन्निर्जित्य विजयोऽर्जुनः ॥ १९ ॥

पड़ता, जो पितामह भीष्म के सम्मुख खड़ा होकर इनसे युद्ध कर सके। हे पुरुषसिंह! यह मैं तुमसे सत्य कह रहा हूँ"॥४।६॥अर्जुन के यों कहने पर शिखण्डी अनेक प्रकार के बाण बरसाते हुए भीष्म की ओर दौड़े। हे महाराज! आपके पिता देवव्रत भीष्म शिखण्डी के प्रहारों का कुछ विचार न करके क्रुद्ध अर्जुन के ऊपर बाण बरसाने लगे। वे तीक्ष्ण बाणों से पाण्डवों की महासेना को मारने लगे॥७।९॥हे राजेन्द्र! सेना सहित सब पाण्डव वैसे ही भीष्म को घेरने और बाणों से ढकने लगे, जैसे मेघमण्डली सूर्य को ढक लेती है। हे भरतश्रेष्ठ! चारों ओर से घिरे हुए भीष्म पितामह वन में अग्नि के समान प्रज्वलित होकर युद्ध-भूमि में शूरों को भस्म करने लगे। उस भयङ्कर संग्राम में आपके पुत्र दुःशासन का अद्भुत पौरुष देख पड़ा। वे अकेले ही अर्जुन आदि पाण्डवों से युद्ध करते थे और उन्हें रोक कर भीष्म की रक्षा कर रहे थे ॥१०।१२॥दुःशासन के इस कर्म को देखकर सब लोग बहुत ही सन्तुष्ट हुए। सब पाण्डव मिलकर भी दुःशासन को नहीं रोक सकते थे। दुःशासन रण-भूमि में रथी शूरों को रथ-हीन करके हाथियों और घोड़ों को नष्ट करने लगे॥१३।१५॥उनके बाणों से विदीर्ण हाथी और धनुर्द्धर घुड़सवार पृथ्वी पर गिरने लगे। सैकड़ों हाथी उनके बाणों से पीड़ित होकर इधर-उधर भागने लगे। जैसे ईंधन पाकर अग्नि प्रज्व-

भीष्ममेवाऽभिदुद्राव सर्वसैन्यस्य पश्यतः ।
विजितस्तव पुत्रोऽपि भीष्मबाहुव्यपाश्रयः ॥ २० ॥
पुनः पुनः समाश्वस्य प्रायुध्यत मदोत्कटः ।
अर्जुनस्तु रणे राजन्योधयन्संव्यराजत ॥ २१ ॥
शिखण्डी तु रणे राजन्विव्याधैव पितामहम् ।
शरैरशनिसंस्पर्शैस्तथा सर्पविषोपमैः ॥ २२ ॥
न च स्म ते रुजं चक्रुः पितुस्तव जनेश्वर ।
स्मयमानस्तु गाङ्गेयस्तान्बाणाञ्जगृहे तदा ॥ २३ ॥
उष्णार्तो हि नरो यद्वज्जलधाराः प्रतीच्छति ।
तथा जग्राह गाङ्गेयः शरधाराः शिखण्डिनः ॥ २४ ॥
तं क्षत्रिया महाराज ददृशुर्घोरमाहवे ।
भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनाम् ॥ २५ ॥
ततोऽब्रवीत्तव सुतः सर्वसैन्यानि मारिष ।
अभिद्रवत संग्रामे फाल्गुनं सर्वतो रणे ॥ २६ ॥
भीष्मो वः समरे सर्वान्पालयिष्यति धर्मवित् ।
ते भयं सुमहत्त्यक्त्वा पाण्डवान्प्रतियुध्यत ॥ २७ ॥
हेमतालेन महता भीष्मस्तिष्ठति पालयन् ।
सर्वेषां धार्तराष्ट्राणां समरे शर्म वर्म च ॥ २८ ॥
त्रिदशोऽपि समुद्युक्ता नाऽलं भीष्मं समासितुम् ।
किमु पार्था महात्मानं मर्त्यभूता महाबलाः ॥ २९ ॥

लित हो उठती है, वैसे ही दुःशासन प्रज्वलित होकर पाण्डवों की सेना को भस्म करने लगे। पाण्डवों में से महारथी अर्जुन के अतिरिक्त और कोई उन्हें जीतने के लिए उनके पास जाने का साहस नहीं कर सकता था॥१६।१९॥महावीर अर्जुन ही सबके सम्मुख उन्हें जीतकर भीष्म की ओर अग्रसर हुए। भीष्म के बाहुबल का आश्रय पाये हुए वीर दुःशासन, अर्जुन से हारकर भी, धीरज धरकर बारम्बार उन्हें रोकने की चेष्टा करने लगे। उस युद्ध में अर्जुन की बड़ी शोभा हुई॥२०।२१॥उधर शिखण्डी और किसी से न रुककर वज्रतुल्य कठोर और सर्प के समान विषैले बाणों से भीष्म को ही घायल करने लगे। किन्तु वे बाण भीष्म को तनिक भी पीड़ा नहीं पहुँचा सके। मुसकराते हुए भीष्म उन बाणों को वैसे ही रोक लेते थे जैसे गर्मी का सताया हुआ मनुष्य जल की धारा अपने ऊपर गिरने देता है॥२२।२४॥क्षत्रियों ने घोर-रूप भीष्म को देखा कि वे पाण्डवों की सेना को बाणवर्षा से नष्ट कर रहे हैं। इसके अनन्तर राजा दुर्योधन ने अपने सब सैनिकों से कहा—हे वीरो ! तुम लोग शीघ्र ही चारों ओर से अर्जुन पर आक्रमण करो। धर्मज्ञ भीष्म तुम सबकी रक्षा करेंगे। हे नरपतियो ! सुवर्णभूषित तालचिह्नयुक्त ध्वजावाले रथ पर विराजमान भीष्म ही हम लोगों के मालिक और रक्षक हैं। भीष्म तुम्हारे पास ही हैं, इसलिए तुम

तस्माद् द्रवत मा योधाः फाल्गुनं प्राप्य संयुगे ।
अहमद्य रणे यत्तो योधयिष्यामि पाण्डवम् ॥ ३० ॥
सहितः सर्वतो यत्तैर्भवद्भिर्वसुधाधिपैः ।
तच्छ्रुत्वा तु वचो राजंस्तव पुत्रस्य धन्विनः ॥ ३१ ॥
सर्वे योधाः सुसंरब्धा बलवन्तो महाबलाः ।
ते विदेहाः कलिङ्गाश्च दासेरकगणाश्च ह ॥ ३२ ॥
अभिपेतुर्निषादाश्च सौवीरश्च महारणे ।
बाह्लीका दरदाश्चैव प्रतीच्योदीच्यमालवाः ॥ ३३ ॥
अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः ।
शाल्वाः शकास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह ॥ ३४ ॥
अभिपेतू रणे पार्थं पतङ्गा इव पावकम् ।
शलभा इव राजेन्द्र पार्थमप्रतिमं रणे ।
एतान्सर्वान्सहानीकान्महाराज महारथान् ॥ ३५ ॥
दिव्यान्यस्त्राणि सञ्चिन्त्य प्रसन्धाय धनञ्जयः ।
स तैरस्त्रैर्महावेगैर्ददाह सुमहाबलः ॥ ३६ ॥
शरप्रतापैर्बीभत्सुः पतङ्गानिव पावकः ।
तस्य बाणसहस्राणि सृजतो दृढधन्विनः ॥ ३७ ॥
दीप्यमानमिवाऽऽकाशे गाण्डीवं समदृश्यत ।
ते शरार्ता महाराज विप्रकीर्णमहाध्वजाः ॥ ३८ ॥
नाऽभ्यवर्तन्त राजानः सहिता वानरध्वजम् ।
सध्वजा रथिनः पेतुर्हयारोहा हयैः सह ॥ ३९ ॥

---

लोग निर्भय होकर पाण्डवों से युद्ध करो ॥२५।२७॥ सब देवता भी मिलकर भीष्म का सामना नहीं कर सकते, फिर पाण्डव हैं ही क्या वस्तु ? इसलिए पाण्डवों से डटकर युद्ध करो । मैं स्वयम् तुम लोगों के साथ यत्नपूर्वक अर्जुन से युद्ध करूंगा॥२८।३०॥ हे राजेन्द्र ! आपके पक्ष के सब महाबली योद्धा दुर्योधन के ये वचन सुनकर, निर्भय होकर, अर्जुन से युद्ध करने लगे । पतङ्गे जैसे अग्नि पर आक्रमण करते हैं वैसे ही वे विदेह, कलिङ्ग, दासेरक, निषाद, सौवीर, बाह्लीक, दरद, प्रतीच्य, औदीच्य, मालव, अभीषाह, शूरसेन, शिबि, वसाति, शाल्व, शक, त्रिगर्त, अम्बष्ठ, कैकेय आदि देशों और जातियों के वीर कुपित होकर अर्जुन से युद्ध करने चले॥३१।३५॥ महावीर अर्जुन ने सब दिव्य अस्त्रों का ध्यान किया और फिर उन्हीं अस्त्रों से सयुक्त बाण छोड़कर वे उन शत्रुओं को, अग्नि जैसे पतङ्गों को जलाती है वैसे, भस्म करने लगे । उन महावेगवाले अस्त्रों के प्रभाव से युक्त सहस्रों बाण गाण्डीव धनुष से एक साथ निकलने लगे । गाण्डीव धनुष आकाश में बिजली की तरह चमकने लगा॥३५।३८॥उन बाणों से राजाओं के

सगजाश्च गजारोहाः किरीटिशरताडिताः ।
ततोऽर्जुनभुजोत्सृष्टैरावृताऽऽसीद्वसुन्धरा ॥ ४० ॥
विद्रवद्भिश्च बहुधा बलै राज्ञां समन्ततः ।
अथ पार्थो महाराज द्रावयित्वा वरूथिनीम् ॥ ४१ ॥
दुःशासनाय सुबहून्प्रेषयामास सायकान् ।
ते तु भित्त्वा तव सुतं दुःशासनमयोमुखाः ॥ ४२ ॥
धरणीं विविशुः सर्वे वल्मीकमिव पन्नगाः ।
हयांश्चाऽस्य ततो जघ्ने सारथिं च न्यपातयत् ॥ ४३ ॥
विविंशतिं च विंशत्या विरथं कृतवान्प्रभुः ।
आजघान भृशं चैव पञ्चभिर्नतपर्वभिः ॥ ४४ ॥
कृपं विकर्णं शल्यं च विध्वा बहुभिरायसैः ।
चकार विरथांश्चैव कौन्तेयः श्वेतवाहनः ॥ ४५ ॥
एवं ते विरथाः सर्वे कृपः शल्यश्च मारिष ।
दुःशासनो विकर्णश्च तथैव च विविंशतिः ॥ ४६ ॥
सम्प्राद्रवन्त समरे निर्जिताः सव्यसाचिना ।
पूर्वाह्णे भरतश्रेष्ठ पराजित्य महारथान् ॥ ४७ ॥
प्रजज्वाल रणे पार्थो विधूम इव पावकः ।
तथैव शरवर्षेण भास्करो रश्मिवानिव ॥ ४८ ॥
अन्यानपि महाराज तापयामास पार्थिवान् ।
पराङ्मुखीकृत्य तथा शरवर्षैर्महारथान् ॥ ४९ ॥
प्रावर्तयत संग्रामे शोणितोदां महानदीम् ।
मध्येन कुरुसैन्यानां पाण्डवानां च भारत ॥ ५० ॥

---

रथों की ध्वजाएँ कट-कटकर गिरने लगीं। बाणों से पीड़ित राजा लोग अर्जुन के सन्मुख ठहर नहीं सके। ध्वजा, रथ, रथी, घोड़े, घुड़सवार, हाथी और उनके सवार अर्जुन के बाणों से पीड़ित और छिन्न-भिन्न होकर पृथ्वी पर गिरने लगे। अर्जुन की भुजाओं से छूटे हुए बाण सर्वत्र व्याप्त हो गये। लाशों से पृथ्वी भर गई। दुर्योधन की सब सेना चारों ओर भागने लगी॥३८।४१॥महारथी अर्जुन ने इस प्रकार कौरव-सेना को भगाकर दुःशासन के ऊपर बहुत से बाण छोड़े। वे लोहमय बाण दुःशासन के शरीर को चीर-कर सर्प जैसे बिल में प्रवेश होता है वैसे ही धरती में प्रवेश हो गये। अब अर्जुन ने दुःशासन के सारथी और घोड़ों को भी मार डाला। फिर बीस बाणों से विविंशति का रथ तोड़कर उनको पाँच बाण मारे ॥४१।४४॥अर्जुन ने कृपाचार्य, शल्य और विकर्ण के रथ नष्ट करके उन्हें बहुत से लोहमय बाण मारे। इस प्रकार महारथी कृप, शल्य, दुःशासन, विकर्ण और विविंशति, सब रथ-हीन होकर अर्जुन से हार-

गजाश्च रथसङ्घाश्च बहुधा रथिभिर्हताः ।
रथाश्च निहता नागैर्हयाश्चैव पदातिभिः ॥ ५१ ॥
अन्तरा च्छिद्यमानानि शरीराणि शिरांसि च ।
निपेतुर्दिक्षु सर्वासु गजाश्वरथयोधिनाम् ॥ ५२ ॥
छन्नमायोधनं राजन्कुण्डलाङ्गदधारिभिः ।
पतितैः पात्यमानैश्च राजपुत्रैर्महारथैः ॥ ५३ ॥
रथनेमिनिकृत्तैश्च गजैश्चैवाऽवपोथितैः ।
पादाताश्चाऽप्यधावन्त साश्वाश्च हययोधिनः ॥ ५४ ॥
गजाश्च रथयोधाश्च परिपेतुः समन्ततः ।
विकीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः ॥ ५५ ॥
तद्गजाश्वरथौघानां रुधिरेण समुक्षितम् ।
छन्नमायोधनं रेजे रक्ताभ्रमिव शारदम् ॥ ५६ ॥
श्वानः काकाश्च गृध्राश्च वृका गोमायुभिः सह ।
प्रणेदुर्भक्ष्यमासाद्य विकृताश्च मृगद्विजाः ॥ ५७ ॥
ववुर्बहुविधाश्चैव दिक्षु सर्वासु मारुताः ।
दृश्यमानेषु रक्षःसु भूतेषु च नदत्सु च ॥ ५८ ॥
काञ्चनानि च दामानि पताकाश्च महाधनाः ।
धूयमाना व्यदृश्यन्त सहसा मारुतेरिताः ॥ ५९ ॥

कर युद्धभूमि से भाग खड़े हुए। हे भरतश्रेष्ठ! मध्याह्न के पहले इन महारथियों को जीतकर अर्जुन धूम-रहित अग्नि के समान प्रज्वलित हो उठे। बाणों से किरण-मण्डित सूर्य के समान शोभा को प्राप्त अर्जुन अन्य राजाओं को भी पीड़ित करने लगे॥४५।४९॥ बाण-वर्षा और दिव्य अस्त्रों के प्रभाव से सब महारथियों को विमुख करके अर्जुन ने कौरवों और पाण्डवों की सेना के मध्य रक्त की महानदी बहा दी। [पाण्डव और सृञ्जय-गण भीष्म के ऊपर पूर्णबल लगाकर आक्रमण करने लगे। भीष्म को भी प्रबल पराक्रम के साथ उनका सामना करते देखकर, समर में मृत्यु होने से स्वर्गलोक प्राप्त होगा — यह सोचकर, आपके पुत्र और उनके अधीन राजा लोग पाण्डवों का सामना करने लगे। कोई भी रण से नहीं भागा। उधर पाण्डवगण भी आपके पुत्रों से प्राप्त अपने पहले के क्लेशों को स्मरण करके निर्भय भाव से युद्ध करने लगे। उन शूरों ने निश्चय कर लिया कि जीवेंगे तो राज्य प्राप्त करेंगे, और मर जायेंगे तो स्वर्गलोक प्राप्त होगा। यह सोचकर प्रसन्नतापूर्वक शत्रुओं से प्राणपण पराक्रम के साथ सब युद्ध कर रहे थे।] रथी लोगों के बाणों से नष्ट-भ्रष्ट रथों और हाथियों के समूह सर्वत्र पड़े हुए थे। हाथियों के तोड़े हुए रथ और पैदलों के मारे हुए घोड़े गिरे पड़े थे। हाथी, घोड़े, पैदल तथा रथों, घोड़ों और हाथियों के सवार मरे पड़े थे। उनके सिर और शरीर कट-कटकर सर्वत्र बिखरे पड़े थे ॥५०।५२॥ कुण्डल और अङ्गद आदि आभूषणों से भूषित महारथी राजपुत्र गिर रहे थे और कुछ गिरे पड़े थे। उनकी लाशों से सारा मैदान भरा पड़ा था। कुछ लोग रथों

श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः ।
विकीर्णाः समदृश्यन्त शतशोऽथ सहस्रशः ॥ ६० ॥
सपताकाश्च मातङ्गा दिशो जग्मुः शरातुराः ।
क्षत्रियाश्च मनुष्येन्द्र गदाशक्तिधनुर्धराः ॥ ६१ ॥
समन्ततश्च दृश्यन्ते पतिता धरणीतले ।
ततो भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ॥ ६२ ॥
अभ्यधावत कौन्तेयं मिषतां सर्वधन्विनाम् ।
तं शिखण्डी रणे यान्तमभ्यद्रवत दंशितः ॥ ६३ ॥
ततः समाहरद्भीष्मस्तदस्त्रं पावकोपमम् ।
त्वरितः पाण्डवो राजन्मध्यमः श्वेतवाहनः ॥ ६४ ॥
निजघ्ने तावकं सैन्यं मोहयित्वा पितामहम् ॥ ६५ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि संकुलयुद्धे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

के पहियों के नीचे पड़कर कट गये थे और कुछ के शरीर हाथियों के पाओं से कुचल गये थे। पैदल और घुड़सवार इधर-उधर दौड़ रहे थे। हाथी और रथों के योद्धा चारों ओर मर-मरकर गिर रहे थे। जिनके पहिये, युग और ध्वजा आदि अङ्ग टूट गये हैं ऐसे रथ पृथ्वी पर पड़े हुए थे॥५३।५६॥हाथी, घोड़े और रथ आदि के सवारों के रक्त से सनी हुई वह पृथ्वी शरद् ऋतु के सन्ध्या काल के लाल मेघ के समान देख पड़ती थी। कुत्ते, कौए, गिद्ध, भेड़िये, सियार आदि भयङ्कर मांसाहारी पशु-पक्षी भोजन पाकर बड़े आनन्द से बोल रहे थे। उस समय सब दिशाओं में नाना प्रकार की कठोर गर्म और रूक्ष वायु चलने लगी। चीत्कार करते और गरजते हुए राक्षस, भूत, प्रेत आदि साक्षात् देख पड़ने लगे। सुवर्णभूषित हार और पताकाएँ सहसा वायु से उड़ने लगीं ॥५७।५९॥ सहस्रों श्वेत छत्र और ध्वजा सहित महारथी इधर-उधर बिखरे हुए देख पड़ने लगे। बाणों से पीड़ित होकर पताकाओं से शोभित बड़े-बड़े हाथी इधर-उधर भागने लगे। गदा, शक्ति, धनुष आदि शस्त्र हाथों में लिये सहस्रों क्षत्रिय पृथ्वी पर इधर-उधर पड़े देख पड़ते थे ॥६०।६२॥ हे महाराज! तब भीष्म पितामह दिव्य अस्त्र का प्रयोग करके सब योद्धाओं के सन्मुख अर्जुन की ओर चले; किन्तु कवचधारी शिखण्डी ने सन्मुख आकर उन्हे रोक लिया। तब भीष्म ने उस अग्नि-तुल्य अस्त्र का उपसंहार कर लिया। इसी अवसर में अर्जुन ने पितामह को मोहित करके आपकी सेना को मारना आरम्भ किया॥६३।६५॥

— o —

भीष्मपर्व का एक सौ सत्रह अध्याय समाप्त हुआ ॥ ११७ ॥

अथ अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

सञ्जय उवाच—समं व्यूढेष्वनीकेषु भूयिष्ठेष्वनिवर्तिनः ।
ब्रह्मलोकपराः सर्वे समपद्यन्त भारत ॥ १ ॥
नह्यनीकमनीकेन समसज्जत संकुले ।
रथा न रथिभिः सार्धं पादाता न पदातिभिः ॥ २ ॥

अश्वा नाऽश्वैरयुध्यन्त गजा न गजयोधिभिः ।
उन्मत्तवन्महाराज युध्यन्ते तत्र भारत ॥ ३ ॥
महान्व्यतिकरो रौद्रः सेनयोः समपद्यत ।
नरनागगणेष्वेवं विकीर्णेषु च सर्वशः ॥ ४ ॥
क्षये तस्मिन्महारौद्रे निर्विशेषमजायत ।
ततः शल्यः कृपश्चैव चित्रसेनश्च भारत ॥ ५ ॥
दुःशासनो विकर्णश्च रथानास्थाय भास्वरान् ।
पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् ॥ ६ ॥
सा वध्यमाना समरे पाण्डुसेना महात्मभिः ।
भ्राम्यते बहुधा राजन्मारुतेनेव नौर्जले ॥ ७ ॥
यथा हि शैशिरः कालो गवां मर्माणि कृन्तति ।
तथा पाण्डुसुतानां वै भीष्मो मर्माणि कृन्तति ॥ ८ ॥
तथैव तव सैन्यस्य पार्थेन च महात्मना ।
नवमेघप्रतीकाशाः पातिता बहुधा गजाः ॥ ९ ॥
मृद्यमानाश्च दृश्यन्ते पार्थेन नरयूथपाः ।
इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ॥ १० ॥
पेतुरार्तस्वरं घोरं कृत्वा तत्र महागजाः ।
आनद्धाभरणैः कायैर्निहतानां महात्मनाम् ॥ ११ ॥
छन्नमायोधनं रेजे शिरोभिश्च सकुण्डलैः ।
तस्मिन्नेव महाराज महावीरवरक्षये ॥ १२ ॥

सञ्जय ने कहा—हे भरतश्रेष्ठ ! उस समय सेनाओं के व्यूह टूट गये । सब लोग जीवन की आशा छोड़कर स्वर्ग प्राप्त करने की अभिलाषा से महा घोर युद्ध करने लगे । उस समय युद्ध के नियमों का विचार किसी को नहीं रहा । साधारणतः रथी रथी से, घुड़सवार घुड़सवार से, हाथी का सवार हाथी के सवार से और पैदल पैदल से युद्ध करता था, परन्तु उस समय यह नियम जाता रहा । जो जिसे पाता था वह उसी पर प्रहार कर देता था । सब उन्मत्त से हो रहे थे ॥१।३॥ दोनों सेनाओं में हलचल मच गई । मनुष्य, हाथी, घोड़े आदि इस प्रकार बिखरकर महाघोर संग्राम करने लगे । कोई किसी को नहीं पहचानता था, यहाँ तक कि लोग अपने ही पक्ष वालों पर प्रहार कर रहे थे ॥४।५॥ तब शल्य, कृपाचार्य, चित्रसेन, दुःशासन और विकर्ण, पाँचों वीर रथों पर बैठकर पाण्डव पक्ष की सेना को मारने और मथने लगे । जल में डूबती हुई नाव के समान उस मारी जाती हुई पाण्डवसेना ने अपनी रक्षा करनेवाला किसी को न देखा । जैसे जाड़े की ऋतु गाय आदि पशु-पक्षियों को कष्ट पहुँचाती है, वैसे ही पितामह भीष्म पाण्डवों को मर्मस्थल में पीड़ा पहुँचाने लगे॥५।८॥ तुरन्त ही महावीर अर्जुन अपने बाणों से मेघवर्ण बड़े-बड़े हाथियों को मार-मारकर गिराने लगे । प्रधान-प्रधान योद्धा अर्जुन के बाणों से उन्मथित होकर

भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये ।
ते पराक्रान्तमालोक्य राजन्युधि पितामहम् ॥ १३ ॥
अभ्यवर्तन्त ते पुत्राः सर्वे सैन्यपुरस्कृताः ।
इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा परायणम् ॥ १४ ॥
पाण्डवानभ्यवर्तन्त तस्मिन्वीरवरक्षये ।
पाण्डवाऽपि महाराज स्मरन्तो विविधान्बहून् ॥ १५ ॥
क्लेशान्कृतान्सपुत्रेण त्वया पूर्वं नराधिप ।
भयं त्यक्त्वा रणे शूरा ब्रह्मलोकाय तत्पराः ॥ १६ ॥
तावकांस्तव पुत्रांश्च योधयन्ति प्रहृष्टवत् ।
सेनापतिस्तु समरे प्राह सेनां महारथः ॥ १७ ॥
अभिद्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह ।
सेनापतिवचः श्रुत्वा सोमकाः सृञ्जयाश्च ते ॥ १८ ॥
अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या समाहताः ।
वध्यमानस्ततो राजन्पिता शान्तनवस्तव ॥ १९ ॥
अमर्षवशमापन्नो योधयामास सृञ्जयान् ।
तस्य कीर्तिमतस्तात पुरा रामेण धीमता ॥ २० ॥
सम्प्रदत्तास्त्रशिक्षा वै परानीकविनाशनी ।
स तां शिक्षामधिष्ठाय कुर्वन्परबलक्षयम् ॥ २१ ॥
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ।
भीष्मो दशसहस्राणि जघान परवीरहा ॥ २२ ॥

गिरने लगे। आर्तनाद करते हुए बड़े-बड़े गज पृथ्वी पर गिरने लगे। आभूषणों से भूषित वीरों के शरीरों और कुण्डल-मण्डित मुण्डों से यह पृथ्वी व्याप्त हो गई॥९।१२॥ महापराक्रमी भीष्म और महारथी अर्जुन ने इस प्रकार पराक्रम दिखाकर घोर संहार कर डाला। युद्ध में पितामह को इस प्रकार पराक्रम के साथ युद्ध करते देखकर आपके सब पुत्र अपनी-अपनी सेना लेकर लौट पड़े। युद्ध में मरकर स्वर्ग प्राप्त करने की इच्छा से वे लोग उस समय पाण्डवों से युद्ध करने लगे॥१२।१५॥ हे महाभाग! पाण्डव भी आपके पुत्रों से प्राप्त अनेक क्लेशों को स्मरण करके निर्भय होकर प्रसन्नतापूर्वक स्वर्गलोक अथवा विजय की इच्छा से कौरवों के साथ युद्ध करने लगे। उस समय पाण्डवों के सेनापति धृष्टद्युम्न ने अपने सेना-वालों से कहा – "हे सोमकगण! हे सृञ्जयगण! तुम लोग शीघ्र भीष्म के ऊपर आक्रमण करो।" अब सोमक और सृञ्जयगण भीष्म के बाणों से अत्यन्त घायल और पीड़ित होने पर भी, सेनापति की आज्ञा से उत्साहित होकर, शीघ्रता के साथ बाण बरसाते हुए भीष्म के ऊपर चारों ओर से आक्रमण करने-लगे॥१५।१९॥ उनके बाणों के प्रहार से कुपित होकर आपके पिता देवव्रत भीष्म सृञ्जयों से युद्ध करने लगे। पहले महात्मा परशुराम से भीष्म ने जो शत्रुदलनाश करनेवाली अस्त्रविद्या प्राप्त की थी, उसी अस्त्रशिक्षा के बल

तस्मिंस्तु दशमे प्राप्ते दिवसे भरतर्षभ ।
भीष्मेणैकेन मत्स्येषु पञ्चालेषु च संयुगे ॥ २३ ॥
गजाश्वममितं हत्वा हताः सप्त महारथाः ।
हत्वा पञ्च सहस्राणि रथानां प्रपितामहः ॥ २४ ॥
नराणां च महायुद्धे सहस्राणि चतुर्दश ।
दन्तिनां च सहस्राणि हयानामयुतं पुनः ॥ २५ ॥
शिक्षाबलेन निहतं पित्रा तव विशाम्पते ।
ततः सर्वमहीपानां क्षपयित्वा वरूथिनीम् ॥ २६ ॥
विराटस्य प्रियो भ्राता शतानीको निपातितः ।
शतानीकं च समरे हत्वा भीष्मः प्रतापवान् ॥ २७ ॥
सहस्राणि महाराज राज्ञां भल्लैरपातयत् ।
उद्विग्नाः समरे योधा विक्रोशन्ति धनञ्जयम् ॥ २८ ॥
ये च केचन पार्थानामभियाता धनञ्जयम् ।
राजानो भीष्ममासाद्य गतास्ते यमसादनम् ॥ २९ ॥
एवं दश दिशो भीष्मः शरजालैः समन्ततः ।
अतीत्य सेनां पार्थानामवतस्थे चमूमुखे ॥ ३० ॥
स कृत्वा सुमहत्कर्म तस्मिन्वै दशमेऽहनि ।
सेनयोरन्तरे तिष्ठन्प्रगृहीतशरासनः ॥ ३१ ॥
न चैनं पार्थिवाः केचिच्छक्ता राजन्निरीक्षितुम् ।
मध्यं प्राप्तं यथा ग्रीष्मे तपन्तं भास्करं दिवि ॥ ३२ ॥

से वे नित्य शत्रुसेना का संहार करते थे। उसी अस्त्र-विद्या के प्रभाव से नव दिन तक नित्य उन्होंने पाण्डव-सेना के दस-दस सहस्र वीरों को मारा। हे भारत-श्रेष्ठ! दसवें दिन अकेले भीष्म ने मत्स्य और पाञ्चाल देश की सेना के साथ युद्ध करके एक सहस्र हाथी के सवार, दस हजार घुड़सवार, पाँच हजार रथी, चौदह हजार पैदल और सात महारथी योद्धा मारे। इनके अतिरिक्त हाथी और घोड़े तो असंख्य मारे ॥१९।२६॥ इस प्रकार शिक्षा के प्रभाव से सब राजाओं की सेना का नाश करके उन्होंने विराट के प्रिय भाई शतानीक को मारा। शतानीक के साथी एक सहस्र वीर राजा भी भीष्म के भल्ल बाणों से मारे गये। समर में योद्धा लोग व्याकुल होकर अर्जुन को पुकारने और चिल्लाने लगे। पाण्डव-सेना के जो वीर अर्जुन के साथ-साथ भीष्म के सम्मुख आये, वे ही मारे गये ॥२६।२९॥ दसों दिशाओं में बाण बरसाते हुए भीष्म पाण्डव-सेना भर को उन्मथित करके सेना के अग्रभाग में खड़े हुए। हे महाराज! दसवें दिन ऐसा अद्भुत संग्राम करने के अनन्तर धनुष हाथ में लिये हुए भीष्म पितामह दोनों सेनाओं के मध्य में बहुत ही शोभायमान हुए। मध्याह्न के सूर्य के समान तपनेवाले भीष्म की ओर कोई राजा नेत्र उठाकर देख भी नहीं सकता था। इन्द्र ने जैसे दानवों को पीड़ित किया था वैसे ही भीष्म भी पाण्डवों को और उनकी सेना को पीड़ित करने लगे ॥३०।३३॥

यथा दैत्यचमूं शक्रस्तापयामास संयुगे ।
तथा भीष्मः पाण्डवेयांस्तापयामास भारत ॥ ३३ ॥
तथा चैनं पराक्रान्तमालोक्य मधुसूदनः ।
उवाच देवकीपुत्रः प्रीयमाणो धनञ्जयम् ॥ ३४ ॥
एष शान्तनवो भीष्मः सेनयोरन्तरे स्थितः ।
सन्निहत्य बलादेनं विजयस्ते भविष्यति ॥ ३५ ॥
बलात्संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः ।
नहि भीष्मशरानन्यः सोढुमुत्सहते विभो ॥ ३६ ॥
ततस्तस्मिन्क्षणे राजंश्चोदितो वानरध्वजः ।
सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः ॥ ३७ ॥
स चाऽपि कुरुमुख्यानामृषभः पाण्डवेरितान् ।
शरव्रातैः शरव्रातान्बहुधा विदुधाव तान् ॥ ३८ ॥
ततः पञ्चालराजश्च धृष्टकेतुश्च वीर्यवान् ।
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ३९ ॥
यमौ च चेकितानश्च केकयाः पञ्च चैव ह ।
सात्यकिश्च महाबाहुः सौभद्रोऽथ घटोत्कचः ॥ ४० ॥
द्रौपदेयाः शिखण्डी च कुन्तिभोजश्च वीर्यवान् ।
सुशर्मा च विराटश्च पाण्डवेया महाबलाः ॥ ४१ ॥
एते चाऽन्ये च बहवः पीडिता भीष्मसायकैः ।
समुद्धृताः फाल्गुनेन निमग्नाः शोकसागरे ॥ ४२ ॥
ततः शिखण्डी वेगेन प्रगृह्य परमायुधम् ।
भीष्ममेवाऽभिदुद्राव रक्ष्यमाणः किरीटिना ॥ ४३ ॥

हे महाराज! इस प्रकार पराक्रम करके सेना के अग्रभाग में स्थित भीष्म को देखकर श्रीकृष्ण ने प्रसन्नतापूर्वक अर्जुन से कहा—"हे धनञ्जय! ये पितामह भीष्म दोनों सेनाओं के मध्य में खड़े हैं। इस समय इन्हें बलपूर्वक मारने से ही तुम्हें जय-प्राप्ति होगी। इसलिए जहाँ पर भीष्म तुम्हारी सेना को छिन्न-भिन्न कर रहे हैं वहीं पर इन्हें बलपूर्वक रोक रक्खो। भीष्म के बाणों की चोट को तुम्हारे अतिरिक्त और कोई नहीं सह सकता" ॥३५।३६॥ श्रीकृष्ण के यों कहने पर अर्जुन उस समय भीष्म पर असंख्य बाण बरसाने लगे। ध्वजा, रथ, घोड़े आदि सहित भीष्म को अर्जुन ने अपने बाणों से अदृश्य कर दिया। कुरुश्रेष्ठ भीष्म भी अर्जुन के बाणों को अपने बाणों से काट-कूट करके नष्ट करने लगे॥३७।३८॥इसी मध्य में अर्जुन ने भीष्म के बाणों से पीड़ित और शोकसागर में निमग्न पाञ्चालराज द्रुपद, पराक्रमी धृष्टकेतु, महाबली भीमसेन, धृष्टद्युम्न, नकुल, सहदेव, चेकितान, पाँचों भाई केकयकुमार, महाबाहु सात्यकि,

ततोऽस्याऽनुचरान्हत्वा सर्वान्रणविभागवित् ।
भीष्ममेवाऽभिदुद्राव बीभत्सुरपराजितः ॥ ४४ ॥
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ४५ ॥
दुद्रुवुर्भीष्ममेवाऽऽजौ रक्षिता दृढधन्वना ।
अभिमन्युश्च समरे द्रौपद्याः पञ्च चाऽऽत्मजाः ॥ ४६ ॥
दुद्रुवुः समरे भीष्मं समुद्यतमहायुधाः ।
ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः ॥ ४७ ॥
बहुधा भीष्ममानर्छुर्मार्गणैः क्षतमार्गणैः ।
विधूय तान्बाणगणान्ये मुक्ताः पार्थिवोत्तमैः ॥ ४८ ॥
पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम् ।
चक्रे शरविघातं च क्रीडन्निव पितामहः ॥ ४९ ॥
नाऽभिसन्धत्त पाञ्चाल्ये स्मयमानो मुहुर्मुहुः ।
स्त्रीत्वं तस्याऽनुसंस्मृत्य भीष्मो बाणाञ्शिखण्डिने॥ ५० ॥
जघान द्रुपदानीके रथान्सप्त महारथः ।
ततः किलकिलाशब्दः क्षणेन समभूत्तदा ॥ ५१ ॥
मत्स्यपाञ्चालचेदीनां तमेकमभिधावताम् ।
ते नराश्वरथव्रातैर्मार्गणैश्च परन्तप ॥ ५२ ॥
तमेकं छादयामासुर्मेघा इव दिवाकरम् ।
भीष्मं भागीरथीपुत्रं प्रतपन्तं रणे रिपून् ॥ ५३ ॥

---

अभिमन्यु, घटोत्कच, द्रौपदी के पाँचों पुत्र, शिखण्डी, वीर्यशाली कुन्तिभोज विराट और युधिष्ठिर आदि सब पाण्डवपक्ष के वीरों की रक्षा की ॥३९।४३॥ तब शिखण्डी बढ़िया धनुष और बाण लेकर वेग से भीष्म पर आक्रमण करने दौड़े । रणनिपुण अर्जुन भी भीष्म के रक्षक अनुचरों को मारकर शिखण्डी की रक्षा करने के लिए भीष्म की ओर चले । महारथी सात्यकि, चेकितान, धृष्टद्युम्न, राजा विराट, राजा द्रुपद, नकुल, सहदेव, अभिमन्यु, द्रोपदी के पाँचों पुत्र और अन्य सब वीर, अर्जुन के द्वारा सुरक्षित होकर, भीष्म को सन्मुख देखकर ताक ताककर तीक्ष्ण बाण मारने लगे ॥४३।४७॥संग्राम से न भागनेवाले, दृढ धनुष धारण किये हुए वे वीर भीष्म के ऊपर, कठोर प्रहार करने लगे । महात्मा भीष्म ने क्रीड़ा के समान उन सब वीरों के बाणों को खण्ड-खण्ड करके पाण्डव सेना को मथना आरम्भ किया । शिखण्डी बारम्बार भीष्म के ऊपर बाण बरसा रहे थे ; किन्तु उन्हें पहले की स्त्री समझकर भीष्म ने कोई बाण नहीं मारा॥४७।५०॥ पितामह ने द्रुपद की सेना के सात रथी योद्धा मार डाले । उस समय मत्स्य, पाञ्चाल और चेदि देश के सैनिक किलकिला शब्द करके एक भीष्म के ही ऊपर आक्रमण करने दौड़े । सूर्य को जैसे मेघ ढक लेते हैं वैसे ही मनुष्य, रथ, घोड़े, हाथी आदि की चतुरङ्गिणी सेना ने चारों ओर से भीष्म को घेर

ततस्तस्य च तेषां च युद्धे देवासुरोपमे ।
किरीटी भीष्ममानर्च्छत्पुरस्कृत्य शिखण्डिनम् ॥ ५४ ॥

लिया। उस देवासुर-संग्राम के समान घोर युद्ध में शिखण्डी को आगे करके अर्जुन भीष्म के ऊपर बाण बरसाने लगे॥५१-५४॥

—०—

भीष्मपर्व का एक सौ अठारह अध्याय समाप्त हुआ ॥ ११८ ॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मपराक्रमे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

अथ ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

सञ्जय उवाच—एवं ते पाण्डवाः सर्वे पुरस्कृत्य शिखण्डिनम् ।
विव्यधुः समरे भीष्मं परिवार्य समन्ततः ॥ १ ॥
शतघ्नीभिः सुघोराभिः परिघैश्च परश्वधैः ।
मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च सर्वशः ॥ २ ॥
शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः ।
नाराचैर्वत्सदन्तैश्च भुशुण्डीभिश्च सर्वशः ॥ ३ ॥
अताडयन्रणे भीष्मं सहिताः सर्वसृञ्जयाः ।
स विशीर्णतनुत्राणः पीडितो बहुभिस्तदा ॥ ४ ॥
न विव्यथे तदा भीष्मो भिद्यमानेषु मर्मसु ।
सन्दीप्तशरचापाग्निरस्त्रप्रसृतमारुतः ॥ ५ ॥
नेमिनिर्ह्रादसन्तापो महास्त्रोदयपावकः ।
चित्रचापमहाज्वालो वीरक्षयमहेन्धनः ॥ ६ ॥
युगान्ताग्निसमप्रख्यः परेषां समपद्यत ।
विवृत्य रथसङ्घानामन्तरेण विनिःसृतः ॥ ७ ॥
दृश्यते स्म नरेन्द्राणां पुनर्मध्यगतश्चरन् ।
ततः पञ्चालराजं च धृष्टकेतुमचिन्त्य च ॥ ८ ॥
पाण्डवानीकिनीमध्यमाससाद विशाम्पते ।

सञ्जय ने कहा—हे राजेन्द्र! पाण्डवगण और सृञ्जयगण इस प्रकार मिलकर, शिखण्डी को आगे करके, चारों ओर से पितामह भीष्म को घेरकर उन पर शतघ्नी, परिघ, परशु, मुद्गर, मूसल, प्रास, क्षेपणीय, बाण, शक्ति, तोमर, कम्पन, नाराच, वत्सदन्त, भुशुण्डी आदि शस्त्रों के प्रहार करने लगे ॥१-४॥ बाणों के प्रहारों से मर्मस्थलों में पीड़ा पहुँचने पर भी भीष्म विचलित नहीं हुए। उनका कवच छिन्न भिन्न हो गया। भीष्म के श्रेष्ठ अस्त्रों का उदयरूप अग्नि शत्रुओं को भस्म कर रहा था। धनुष-बाण उस प्रज्वलित अग्नि की ज्वाला से जान पड़ते थे। रथनेमि का शब्द उस अग्नि का ताप था। भीष्म पितामह शत्रुओं के लिए प्रलयकाल के अग्नि के समान हो रहे थे। विचित्र धनुष ज्वाला के समान था। बड़े-बड़े वीर ईंधन के समान उसमें गिरकर जल रहे थे। पितामह भीष्म रथों के भीतर से निकलकर फिर

ततः सात्यकिभीमौ च पाण्डवं च धनञ्जयम् ॥ ९ ॥
द्रुपदं च विराटं च धृष्टद्युम्नं च पार्षतम् ।
भीमघोषैर्महावेगैर्मर्मावरणभेदिभिः ॥ १० ॥
षडेतान्निशितैर्भीष्मः प्रविव्याधोत्तमैः शरैः ।
तस्य ते निशितान्बाणान्सन्निवार्य महारथाः ॥ ११ ॥
दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा ।
शिखण्डी तु महाबाणान्यान्मुमोच महारथः ॥ १२ ॥
न चक्रुस्ते रुजं तस्य स्वर्णपुङ्खाः शिलाशिताः ।
ततः किरीटी संरब्धो भीष्ममेवाऽभ्यधावत ॥ १३ ॥
शिखण्डिनं पुरस्कृत्य धनुश्चाऽस्य समाच्छिनत् ।
भीष्मस्य धनुषश्छेदं नाऽमृष्यन्त महारथाः ॥ १४ ॥
द्रोणश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
भूरिश्रवाः शलः शल्यो भगदत्तस्तथैव च ॥ १५ ॥
सप्तैते परमक्रुद्धाः किरीटिनमभिद्रुताः ।
तत्र शस्त्राणि दिव्यानि दर्शयन्तो महारथाः ॥ १६ ॥
अभिपेतुर्भृशं क्रुद्धाश्छादयन्तश्च पाण्डवम् ।
तेषामापततां शब्दः शुश्रुवे फाल्गुनं प्रति ॥ १७ ॥
उद्धृतानां यथा शब्दः समुद्राणां युगक्षये ।
घ्नताऽऽनयत गृह्णीत विध्यध्वमवकर्तत ॥ १८ ॥
इत्यासीत्तुमुलः शब्दः फाल्गुनस्य रथं प्रति ।
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः ॥ १९ ॥

शत्रुपक्ष के राजाओं के मध्य विचरकर सबको मारने लगे॥४।८॥द्रुपद और धृष्टकेतु को लाँघकर पितामह भीष्म पाण्डवों की सेना में जा प्रविष्ट हुए। सात्यकि, भीमसेन, अर्जुन, धृष्टद्युम्न, विराट और द्रुपद, इन छः महारथियों के कवच काटकर भीष्म पितामह अकेले ही भयानक शब्द और वेग से युक्त, मर्मस्थल को फाड़नेवाले, तीक्ष्ण बाण मारने लगे ॥८।११॥ सात्यकि आदि छहो महारथियों ने भीष्म के उन तीक्ष्ण बाणों को विफल करके उन्हें दस-दस बाण मारे। महारथी शिखण्डी जो सुवर्णपुङ्ख, तीक्ष्णधार, बाण भीष्म को मारते थे उन बाणों से भीष्म को तनिक भी चोट नहीं पहुँचती थी। तब कुपित अर्जुन शिखण्डी को आगे करके भीष्म के सम्मुख पहुँचे। उन्होंने तीक्ष्ण बाणों से भीष्म का धनुष काट डाला ॥११।१४॥ उनके धनुष को कटते देखकर, उत्तेजित होकर कृतवर्मा, द्रोणाचार्य, जयद्रथ, भूरिश्रवा, शल, शल्य और भगदत्त ये वीर श्रेष्ठ और तीक्ष्ण बाण बरसाते हुए अर्जुन की ओर दौड़े। ये सातो महारथी अपने दिव्य अस्त्रों का प्रभाव दिखाते हुए अर्जुन के पास पहुँचे। प्रलयकाल में उमड़ रहे सागर के गरजने का सा शब्द करते हुए ये लोग "मारो, शीघ्रता करो, पकड़ लो, छेद डालो, काट डालो" इत्यादि बातें कहने लगे। अर्जुन के रथ के पास उन लोगों का कोलाहल सुनकर पाण्डव पक्ष के सात महारथी

अभ्यधावन्परीप्सन्तः फाल्गुनं भरतर्षभ ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ २० ॥
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ।
अभिमन्युश्च संक्रुद्धः सप्तैते क्रोधमूर्छिताः ॥ २१ ॥
समभ्यधावंस्त्वरिताश्चित्रकार्मुकधारिणः ।
तेषां समभवद्युद्धं तुमुलं लोमहर्षणम् ॥ २२ ॥
संग्रामे भरतश्रेष्ठ देवानां दानवैरिव ।
शिखण्डी तु रणे श्रेष्ठो रक्ष्यमाणः किरीटिना ॥ २३ ॥
अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे ।
सारथिं दशभिश्चाऽस्य ध्वजं चैकेन चिच्छिदे ॥ २४ ॥
सोऽन्यत्कार्मुकमादाय गाङ्गेयो वेगवत्तरम् ।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फाल्गुनः ॥ २५ ॥
एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनः पुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परन्तपः ॥ २६ ॥
स च्छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन् ।
शक्तिं जग्राह तरसा गिरीणामपि दारुणीम् ॥ २७ ॥
तां च चिक्षेप संक्रुद्धः फाल्गुनस्य रथं प्रति ।
तामापतन्तीं सम्प्रेक्ष्य ज्वलन्तीमशनीमिव ॥ २८ ॥
समादत्त शितान्भल्लान्पञ्च पाण्डवनन्दनः ।
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः ॥ २९ ॥
संक्रुद्धो भरतश्रेष्ठ भीष्मबाहुप्रवेरिताम् ।
सा पपात तथा च्छिन्ना संक्रुद्धेन किरीटिना ॥ ३० ॥

---

सात्यकि, भीमसेन, धृष्टद्युम्न,॥१४।२०॥विराट, द्रुपद, घटोत्कच और अभिमन्यु उधर ही चले। ये लोग कुपित होकर धनुष चढ़ाते हुए स्फूर्ति के साथ अर्जुन के समीप पहुँचे। देवासुर-संग्राम में देवताओं के साथ दानवों का जैसे घोर संग्राम हुआ था, वैसे ही कौरव पक्ष के सात वीरों के साथ पाण्डव पक्ष के सात वीरों का घोर युद्ध होने लगा ॥२१।२३॥ भीष्म का धनुष कट जाने पर शिखण्डी ने दस बाण उनको और दस बाण सारथी को मारे। फिर एक बाण से उनके रथ की ध्वजा काट डाली। भीष्म ने दूसरा धनुष हाथ में लिया। अर्जुन ने स्फूर्ति के साथ तीन बाणों से उसे भी काट डाला। इस प्रकार भीष्म ने जो धनुष लिया वही अर्जुन ने काट डाला ॥२३।२६॥ तब कुपित होकर होंठ चाट रहे भीष्म ने अर्जुन के रथ पर एक प्रज्वलित वज्रतुल्य और पर्वत को भी तोड़ डालनेवाली शक्ति फेंकी। अर्जुन ने पाँच भल्ल बाणों से उस शक्ति के पाँच टुकड़े करके पृथ्वी पर गिरा दिये ॥२७।३०॥ क्रुद्ध अर्जुन के बाणों से कटी हुई

मेघवृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा ।
छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः॥ ३१ ॥
अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ।
शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान् ॥ ३२ ॥
यद्येषां न भवेद्गोप्ता विष्वक्सेनो महाबलः ।
कारणद्वयमास्थाय नाऽहं योत्स्यामि पाण्डवान् ॥ ३३ ॥
अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ।
पित्रा तुष्टेन मे पूर्वं यदा कालीमुदावहम् ॥ ३४ ॥
स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा ।
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवाऽऽत्मनः ॥ ३५ ॥
एवं ज्ञात्वा व्यवसितं भीष्मस्याऽमिततेजसः ।
ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् ॥ ३६ ॥
यत्ते व्यवसितं तात तदस्माकमपि प्रियम् ।
तत्कुरुष्व महाराज युद्धे बुद्धिं निवर्तय ॥ ३७ ॥
अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।
अनुलोमः सुगन्धी च पृषतैश्च समन्वितः ॥ ३८ ॥
देवदुन्दुभयश्चैव सम्प्रणेदुर्महास्वनाः ।
पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष ॥ ३९ ॥
न च तच्छुश्रुवे कश्चित्तेषां संवदतां नृप ।
ऋते भीष्मं महाबाहुं मां चापि मुनितेजसा ॥ ४० ॥

वह शक्ति बादल के मध्य से गिरते हुए बिजली के टुकड़ों के समान जान पड़ने लगी। उस शक्ति को इस प्रकार निष्फल देखकर भीष्म बहुत ही कुपित हुए। वे सोचने लगे कि यदि महाप्रतापी योगेश्वर वासुदेव इनके रक्षक न होते तो मैं पाँचों पाण्डवों को एक ही धनुष से मार सकता था। किन्तु पाण्डव मारे नहीं जा सकते, और स्त्री-जाति होने के कारण शिखण्डी भी अवध्य है। इन दोनों कारणों से अब मैं पाण्डवों के साथ युद्ध न करूँगा॥३१।३४॥ पिता ने दूसरे विवाह के समय—निषाद-कन्या काली से विवाह करने के समय—मुझ पर प्रसन्न होकर मुझे दो वर दिये थे। एक तो यह कि मैं जब चाहूँ तब मरूँ और दूसरा यह कि युद्ध में कोई मुझे जीत न सके। मैं समझता हूँ कि मेरी मृत्यु का यही उपयुक्त समय है। क्योंकि जीवन से मैं ऊब चुका हूँ॥३४। ३५॥ पितामह भीष्म यों सोच रहे थे कि इसी समय आकाश में स्थित ऋषियों और वसुओं ने भीष्म के इस विचार को जानकर कहा—"हे तात भीष्म! तुम जो सोच रहे हो वही हमें रुचिकर है। इसलिए अपना और हमारा प्रिय करने को तुम युद्ध बन्द करके अपना कर्तव्य करो।" हे महाराज! ऋषियों के यों कहने पर अनुकूल, सुगन्धित, जलकणयुक्त और मन्द वायु चलने लगी। देवलोक में नगाड़े बजने लगे और भीष्म के ऊपर आकाश से फूलों की वर्षा होने

सम्भ्रमश्च महानासीत्त्रिदशानां विशाम्पते ।
पतिष्यति रथाद्भीष्मे सर्वलोकप्रिये तदा ॥ ४१ ॥
इति देवगणानां च वाक्यं श्रुत्वा महातपाः ।
ततः शान्तनवो भीष्मो बीभत्सुं नाऽभ्यवर्तत ॥ ४२ ॥
भिद्यमानः शितैर्बाणैः सर्वावरणभेदिभिः ।
शिखण्डी तु महाराज भरतानां पितामहम् ॥ ४३ ॥
आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ।
स तेनाऽभिहतः संख्ये भीष्मः कुरुपितामहः ॥ ४४ ॥
नाऽकम्पत महाराज क्षितिकम्पे यथाऽचलः ।
ततः प्रहस्य बीभत्सुर्व्याक्षिपन्गाण्डिवं धनुः ॥ ४५ ॥
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
पुनः पुनः शतैरेनं त्वरमाणो धनञ्जयः ॥ ४६ ॥
सर्वगात्रेषु संक्रुद्धः सर्वमर्मस्वताडयत् ।
एवमन्यैरपि भृशं विद्ध्यमानः सहस्रशः ॥ ४७ ॥
तानप्याशु शरैर्भीष्मः प्रविव्याध महारथः ।
तैश्च मुक्ताञ्छरान्भीष्मो युधि सत्यपराक्रमः ॥ ४८ ॥
निवारयामास शरैः समं सन्नतपर्वभिः ।
शिखण्डी तु रणे बाणान्यान्मुमोच महारथः ॥ ४९ ॥
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलाशिताः ।
ततः किरीटी संक्रुद्धो भीष्ममेवाऽभ्यवर्तत ॥ ५० ॥
शिखण्डिनं पुरस्कृत्य धनुश्चाऽस्य समाच्छिनत् ।
अथैनं नवभिर्विध्वा ध्वजमेकेन चिच्छिदे ॥ ५१ ॥

लगी ॥३६।३९॥ ऋषियों के पूर्वोक्त वचन भीष्म के अतिरिक्त और किसी ने नहीं सुने। बेदव्यास की कृपा के प्रभाव से मुझे भी वे वचन सुन पड़े। हे नरनाथ! सब लोगों के प्रिय भीष्म के रथ से गिरने की बात जानकर सब देवता भी व्याकुल हो गये ॥४०।४१॥ महातपस्वी भीष्म ने देवताओं और ऋषियों के उक्त वचन सुनकर, सब आवरणों को तोड़कर शरीर में प्रवेश होनेवाले तीक्ष्ण बाणों से पीड़ित होकर भी, अर्जुन पर प्रहार करना छोड दिया। उस समय शिखण्डी ने कुपित होकर और भी वेग से भीष्म की छाती में नव बाण मारे। किन्तु जैसे भूकम्प के समय भी पर्वत नहीं विचलित होते वैसे ही शिखण्डी के उन बाणों से भीष्म विचलित नहीं हुए ॥४२।४५॥ तब महाधनुर्द्धर अर्जुन ने हँसकर क्रोध के साथ गाण्डीव धनुष खींचकर पचीस क्षुद्रक बाण भीष्म को मारे। अर्जुन स्फूर्त्ति के साथ और भी सैंकड़ों-सहस्रों बाण भीष्म के मर्मस्थलों और सब अङ्गों में मारने लगे। इसी प्रकार और योद्धा भी

सारथिं विशिखैश्चाऽस्य दशभिः समकम्पयत् ।
सोऽन्यत्कार्मुकमादाय गाङ्गेयो बलवत्तरम् ॥ ५२ ॥
तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरघातयत् ।
निमेषार्धेन कौन्तेय आत्तमात्तं महारणे ॥ ५३ ॥
एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यथ ।
ततः शान्तनवो भीष्मो बीभत्सुं नाऽभ्यवर्तत ॥ ५४ ॥
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत ॥ ५५ ॥
एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः ।
शरैरनेकसाहस्रैर्मामेवाऽभ्यहनद्रणे ॥ ५६ ॥
न चैष समरे शक्यो जेतुं वज्रभृता अपि ।
न चापि सहिता वीरा देवदानवराक्षसाः ॥ ५७ ॥
मां चापि शक्ता निर्जेतुं किमु मर्त्या महारथाः ।
एवं तयोः संवदतोः फाल्गुनो निशितैः शरैः ॥ ५८ ॥
शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ।
ततो दुःशासनं भूयः स्मयमान इवाऽब्रवीत् ॥ ५९ ॥
अतिविद्धः शितैर्बाणैर्भृशं गाण्डीवधन्वना ।
वज्राशनिसमस्पर्शा अर्जुनेन शरा युधि ॥ ६० ॥
मुक्ताः सर्वेऽव्यवच्छिन्ना नेमे बाणाः शिखण्डिनः ।
निकृन्तमाना मर्माणि दृढावरणभेदिनः ॥ ६१ ॥

भीष्म को सहस्रों बाण मारने लगे। सत्यपराक्रमी भीष्म ने अपने बाणों से उन सब बाणों को नष्ट कर दिया ॥४५।४०॥ महारथी शिखण्डी ने सुवर्णपुङ्ख तीक्ष्ण बाण भीष्म को मारे। परन्तु उन बाणों के लगने से भीष्म को तनिक भी व्यथा नहीं हुई। अब महारथी अर्जुन ने कुपित होकर, शिखण्डी को आगे करके, भीष्म पितामह का धनुष काट डाला। दस तीक्ष्ण बाण उनके सारथी को मारे, एक बाण से ध्वजा काट डाली और नव बाण उनके शरीर में मारे ॥४९।५२॥ इस पर भीष्म ने दूसरा धनुष लिया। अर्जुन ने तीन भल्ल बाणों से उसे भी काट डाला। इसके अनन्तर भीष्म ने जितने धनुष हाथ में लिये उन सबको अर्जुन ने स्फूर्त्ति के साथ अपने बाणों से काट डाला। तब भीष्म ने अर्जुन के ऊपर प्रहार करने का उद्योग छोड़ दिया ॥५२।५४॥ किन्तु अर्जुन ने फिर भी उनके मर्मस्थल में पच्चीस क्षुद्रक बाण मारे। महारथी भीष्म का शरीर अर्जुन के बाणों से बहुत ही घायल हो गया। तब भीष्म ने कहा—वीर दुःशासन! ये पाण्डव पक्ष के महारथी अर्जुन कुपित होकर निरन्तर सहस्रों बाण मुझको मार रहे हैं। वज्रपाणि इन्द्र समेत सब देवता, दानव और राक्षस आदि भी मिल कर न तो मुझे जीत सकते हैं और न अर्जुन को; फिर मनुष्य जाति के महारथी वीर मेरा क्या कर सकते हैं? महावीर भीष्म दुःशासन से यों कह रहे

मुसला इव मे घ्नन्ति नेमे वाणाः शिखण्डिनः ।
वज्रदण्डसमस्पर्शा वज्रवेगदुरासदाः ॥ ६२ ॥
मम प्राणानारुजन्ति नेमे वाणाः शिखण्डिनः ।
नाशयन्तीव मे प्राणान्यमदूता इवाऽऽहिताः ॥ ६३ ॥
गदापरिघसंस्पर्शा नेमे वाणाः शिखण्डिनः ।
भुजगा इव संक्रुद्धा लेलिहाना विषोल्वणाः ॥ ६४ ॥
समाविशन्ति मर्माणि नेमे वाणाः शिखण्डिनः ।
अर्जुनस्य इमे वाणा नेमे वाणाः शिखण्डिनः ॥ ६५ ॥
कृन्तन्ति मम गात्राणि माघमासे गवा इव ।
सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाः ॥ ६६ ॥
वीरं गाण्डीवधन्वानमृते जिष्णुं कपिध्वजम् ।
इतिब्रुवञ्छान्तनवो दिधक्षुरिव पाण्डवान् ॥ ६७ ॥
शक्तिं भीष्मः स पार्थाय ततश्चिक्षेप भारत ।
तामस्य विशिखैश्छित्वा त्रिधा त्रिभिरपातयत् ॥ ६८ ॥
पश्यतां कुरुवीराणां सर्वेषां तत्र भारत ।
चर्माऽथाऽऽदत्त गाङ्गेयो जातरूपपरिष्कृतम् ॥ ६९ ॥
खड्गं चाऽन्यतरप्रेप्सुर्मृत्योरग्रे जयाय वा ।
तस्य तच्छतधा चर्म व्यधमत्सायकैस्तथा ॥ ७० ॥
रथादनवरूढस्य तदद्भुतमिवाऽभवत् ।
ततो युधिष्ठिरो राजा स्वान्यनीकान्यचोदयत् ॥ ७१ ॥

थे, इसी समय शिखण्डी के पीछे स्थित अर्जुन तीक्ष्ण बाण मारकर भीष्म को घायल करने लगे ॥५५।५९॥ गाण्डीव धनुष से छूटे हुए बहुत ही तीक्ष्ण भयानक बाणों से अत्यन्त बेधे जाते हुए भीष्म ने हँसकर फिर दुःशासन से कहा — हे दुःशासन ! ये जो वज्रतुल्य बाण निरन्तर आकर मेरे शरीर में लग रहे हैं, वे शिखण्डी के बाण नहीं हैं। ये जो मूसल के समान बाण आकर दृढ कवच को तोडकर मेरे मर्मस्थलों को छेद रहे हैं, ये शिखण्डी के बाण नहीं हो सकते। ये जो वज्र के समान वेग से आकर ब्रह्मदण्ड के समान मेरे शरीर में लगते हैं और मेरे जीवन को क्षीण कर रहे हैं, वे बाण शिखण्डी के नहीं हैं ॥५९।६३॥ ये जो गदा और परिघ के समान बाण यमदूत की तरह आकर मेरे प्राणों को नष्ट कर रहे हैं, ये बाण शिखण्डी के नहीं हैं। ये जो क्रुद्ध उत्तेजित नाग के समान बाण तेजी से आकर मेरे मर्मस्थल में प्रवेश कर रहे हैं, ये शिखण्डी के नहीं हैं। ये बाण जो मेरे शरीर को छेद रहे हैं, कभी शिखण्डी के नहीं है। ये बाण तो अर्जुन के ही हैं, इसमें कोई सन्देह नहीं॥६३।६६॥गाण्डीव धनुष धारण करनेवाले महावीर महाबली अर्जुन के अतिरिक्त और किसी क्षत्रिय का प्रहार मुझे क्लेश नहीं पहुँचा सकता। इतना कहकर मानों अर्जुन को भस्म कर डालने की इच्छा से भीष्म ने उन पर एक शक्ति फेकी। अर्जुन ने

अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ।
अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः ॥ ७२ ॥
पट्टिशैश्च सुनिस्त्रिंशैर्नाराचैश्च तथा शितैः ।
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः ॥ ७३ ॥
सिंहनादस्ततो घोरः पाण्डवानामभूत्तदा ।
तथैव तव पुत्राश्च नेदुर्भीष्मजयैषिणः ॥ ७४ ॥
तमेकमभ्यरक्षन्त सिंहनादांश्च चक्रिरे ।
तत्राऽऽसीत्तुमुलं युद्धं तावकानां परैः सह ॥ ७५ ॥
दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ।
आसीद्राजन्निवाऽऽवर्तो मुहूर्तमुदधेरिव ॥ ७६ ॥
सैन्यानां युध्यमानानां निघ्नतामितरेतरम् ।
असौम्यरूपा पृथिवी शोणिताक्ताऽभवत्तदा ॥ ७७ ॥
समं च विषमं चैव न प्राज्ञायत किञ्चन ।
योधानामयुतं हत्वा तस्मिन्स दशमेऽहनि ॥ ७८ ॥
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ।
ततः सेनामुखे तस्मिन्स्थितः पार्थो धनुर्धरः ॥ ७९ ॥
मध्येन कुरुसैन्यानां द्रावयामास वाहिनीम् ।
वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनञ्जयात् ॥ ८० ॥

सब कौरवों के सम्मुख ही तीन बाणों से उस शक्ति के तीन टुकड़े कर डाले॥६६।६७॥मृत्यु अथवा विजय, दो में से एक के लिए भीष्म ने सुवर्णभूषित ढाल और तलवार हाथ में ली। भीष्म रथ पर से उतरने भी नहीं पाये कि अर्जुन ने स्फूर्ति के साथ तीक्ष्ण बाणों से उस ढाल और तलवार के सौ टुकड़े कर डाले। अर्जुन का यह कर्म अत्यन्त अद्भुत जान पड़ा। हे राजेन्द्र! इसी समय राजा युधिष्ठिर ने अपने सैनिकों से कहा—"हे वीरो! तुम लोग शीघ्र भीष्म के ऊपर आक्रमण करो। तुम्हें भीष्म से भयभीत न होना चाहिए"॥६९।७२॥तब सब लोग मिलकर अकेले भीष्म के ऊपर आक्रमण करने के लिए तोमर, प्रास, बाण, पट्टिश, खड्ग, नाराच, वत्सदन्त और भल्ल आदि अस्त्र-शस्त्र लेकर दौड़े। उस समय पाण्डव लोग और उनके पक्ष के वीर लोग घोर सिंहनाद करने लगे। उधर भीष्म की जय चाहनेवाले आपके पुत्र भी अकेले भीष्म की रक्षा करते हुए घोर सिंहनाद करने लगे। उस समय भीष्म और अर्जुन के युद्ध में कौरव और पाण्डव परस्पर भिड़कर बड़ा विकट युद्ध करने लगे॥७२।७६॥जैसे समुद्र में भारी हलचल मचे, वैसे ही दोनों सेनाएँ थोड़ी देर तक बड़े वेग से दौड़ दौड़कर परस्पर प्रहार और प्राणनाश करती रहीं। पृथ्वी में रक्त की कीचड़ मच गई। ऊँचा और नीचा कुछ नहीं जान पड़ता था। पृथ्वी का रूप बड़ा भयङ्कर हो उठा। महात्मा भीष्म ने दसवें दिन भी दस सहस्र योद्धाओं को मारकर मर्मस्थलों में अत्यन्त घायल और पीड़ित होने पर युद्ध रोक दिया॥७६।७९॥उधर महारथी अर्जुन सेना के अग्रभाग में खड़े

पीड्यमानाः शितैः शस्त्रैः प्राद्रवाम रणे तदा ।
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः॥ ८१ ॥
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
शाल्वाश्रयास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह ॥ ८२ ॥
सर्व एते महात्मानः शरार्ता व्रणपीडिताः ।
संग्रामे न जहुर्भीष्मं युध्यमानं किरीटिना ॥ ८३ ॥
ततस्तमेकं बहवः परिवार्य समन्ततः ।
परिकाल्य कुरून्सर्वाञ्शरवर्षैरवाकिरन् ॥ ८४ ॥
निपातयत गृह्णीत युध्यध्वमवकृन्तत ।
इत्यासीत्तुमुलः शब्दो राजन्भीष्मरथं प्रति ॥ ८५ ॥
निहत्य समरे राजञ्शतशोऽथ सहस्रशः ।
न तस्याऽऽसीदनिर्भिन्नं गात्रे द्व्यंगुलमन्तरम् ॥ ८६ ॥
एवम्भूतस्तव पिता शरैर्विशकलीकृतः ।
शिताग्रैः फाल्गुनेनाऽऽजौ प्राक्शिराः प्रापतद्रथात्॥ ८७ ॥
किञ्चिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ।
हाहेति दिवि देवानां पार्थिवानां च भारत ॥ ८८ ॥
पतमाने रथाद्भीष्मे बभूव सुमहास्वनः ।
सम्पतन्तमभिप्रेक्ष्य महात्मानं पितामहम् ॥ ८९ ॥
सह भीष्मेण सर्वेषां प्रापतन्हृदयानि नः ।
स पपात महाबाहुर्वसुधामनुनादयन् ॥ ९० ॥

होकर बाणवर्षा से कौरव-सेना को मारने और भगाने लगे। हे महाराज! हमारे पक्ष के सब योद्धा अर्जुन के बाणों से अत्यन्त व्यथित और भीत होकर भागने लगे। हे राजेन्द्र! सौवीर, कितव, प्राच्य, प्रतीच्य, उदीच्य, मालव, अभीषाह, शूरसेन, शिवि, वसाति, शाल्व, त्रिगर्त, अम्बष्ठ और कैकेय, इन देशों के वीरों ने और उनकी सेना के लोगों ने संग्राम में अर्जुन के बाणों से पीड़ित और अत्यन्त घायल होकर भी भीष्म का साथ नहीं छोड़ा॥७९।८३॥अब पाण्डव पक्ष के सब वीरों ने मिलकर भीष्म को चारों ओर से घेर लिया। [ शिखण्डी को आगे करके अर्जुन तो भीष्म पर प्रहार कर रहे थे और अन्य वीरगण बाणों की वर्षा करके कौरव-सेना के योद्धाओं को दूर भगा रहे थे। ] उस समय पाण्डव पक्ष के लोग भीष्म के रथ के पास "गिरा दो, पकड़ लो, युद्ध करो, छिन्न-भिन्न कर दो" इत्यादि कहते हुए घोर कोलाहल करने लगे। हे महाराज! भीष्म के शरीर में कोई ऐसा स्थान नहीं था जहाँ वीर अर्जुन के बाण न प्रवेश हो गये हों॥८३।८६॥हे राजेन्द्र! ऐसी दशा में आपके पिता बाल-ब्रह्मचारी भीष्म, आपके पुत्रों के सम्मुख ही, पूर्व की ओर सिर करके रथ से नीचे गिर पड़े। उस समय सूर्य के अस्त होने में कुछ ही देर थी। आकाश में देवता और पृथ्वी में सब राजा लोग हाहाकार करने लगे। महात्मा

इन्द्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम् ।
धरणीं न स पस्पर्श शरसङ्घैः समावृतः ॥ ९१ ॥
शरतल्पे महेष्वासं शयानं पुरुषर्षभम् ।
रथात्प्रपतितं चैनं दिव्यो भावः समाविशत् ॥ ९२ ॥
अभ्यवर्षच्च पर्जन्यः प्राकम्पत च मेदिनी ।
पतन्स ददृशे चापि दक्षिणेन दिवाकरम् ॥ ९३ ॥
संज्ञां चोपालभद्वीरः कालं सञ्चिन्त्य भारत ।
अन्तरिक्षे च शुश्राव दिव्या वाचः समन्ततः ॥ ९४ ॥
कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः ।
कालकर्ता नरव्याघ्रः सम्प्राप्ते दक्षिणायने ॥ ९५ ॥
स्थितोऽस्मीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत् ।
धारयामास च प्राणान्पतितोऽपि महीतले ॥ ९६ ॥
उत्तरायणमन्विच्छन्भीष्मः कुरुपितामहः ।
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता ॥ ९७ ॥
महर्षीन्हंसरूपेण प्रेषयामास तत्र वै ।
ततः सम्पातिनो हंसास्त्वरिता मानसौकसः ॥ ९८ ॥
आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहम् ।
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः ॥ ९९ ॥
ते तु भीष्मं समासाद्य ऋषयो हंसरूपिणः ।
अपश्यञ्छरतल्पस्थं भीष्मं कुरुकुलोद्वहम् ॥ १०० ॥

भीष्म को रथ से नीचे गिरते देखकर हम लोगों के हृदय भी उनके साथ ही गिर पड़े॥८७।९०॥सब धनुर्द्धरों में श्रेष्ठ पितामह भीष्म जिस समय इन्द्र की ध्वजा के समान पृथ्वी पर गिरे उस समय पृथ्वी काँप उठी और घोर शब्द होने लगा। पितामह के शरीर में इतने बाण प्रवेश हुए थे कि रथ से नीचे गिरने पर भी उनका शरीर पृथ्वी में नहीं छू गया। वे उन्हीं बाणों की शय्या पर गिर गये। उस समय उनके हृदय में दिव्य सात्विक भाव का उदय हो आया। पृथ्वी काँप उठी और मेघ जल बरसाने लगे ॥९०।९३॥हे राजेन्द्र! गिरते समय भीष्म ने सूर्य को दक्षिणायन में देखा था, इसीलिए उन्होंने उस समय प्राण त्याग नहीं किये। उपयुक्त समय न देखकर वे फिर सचेत हो गये। उसी समय अन्तरिक्ष में उन्हें यह आकाशवाणी सुन पड़ी "सब शस्त्रधारियों में श्रेष्ठ पुरुषसिंह महात्मा भीष्म ने दक्षिणायन सूर्य में कैसे प्राण-त्याग किये?" यह देववाणी सुनकर भीष्म ने उत्तर दिया—"मैं अभी जीवित हूँ।" पितामह भीष्म इस प्रकार दक्षिणायन काल में गिरकर भी सद्गति की इच्छा से उत्तरायण सूर्य की प्रतीक्षा करने लगे॥९३।९७॥हिमवान् की कन्या और भीष्म की माता गङ्गा ने भीष्म की इच्छा जानकर महर्षियों को हंसरूप में उनके पास भेजा। भीष्म को देखने वे महर्षि उस स्थान पर आये, जहाँ वे पुरुष-

ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम् ।
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ॥१०१॥
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ।
भीष्मः कथं महात्मा सन्संस्थाता दक्षिणायने ॥१०२॥
इत्युक्त्वा प्रस्थिता हंसा दक्षिणामभितो दिशम् ।
सम्प्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत ॥१०३॥
तानब्रवीच्छान्तनवो नाऽहं गन्ता कथञ्चन ।
दक्षिणावर्त आदित्ये एतन्मे मनसि स्थितम् ॥१०४॥
गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम् ।
उदगायन आदित्ये हंसाः सत्यं ब्रवीमि वः ॥१०५॥
धारयिष्याम्यहं प्राणानुत्तरायणकांक्षया ।
ऐश्वर्यभूतः प्राणानामुत्सर्गो हि यतो मम ॥१०६॥
तस्मात्प्राणान्धारयिष्ये मुमूर्षुरुदगायने ।
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना ॥१०७॥
छन्दतो मृत्युरित्येवं तस्य चाऽस्तु वरस्तथा ।
धारयिष्ये ततः प्राणानुत्सर्गे नियते सति ॥१०८॥
इत्युक्त्वा तांस्तदा हंसान्स शेते शरतल्पगः ।
एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि ॥१०९॥
पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ।
तस्मिन्हते महासत्त्वे भरतानां पितामहे ॥११०॥

---

सिंह बाणों की शय्या पर पड़े हुए थे॥९७।१००॥ हंसरूपी ऋषियों ने वहाँ पहुँचकर, भीष्म को देखकर, उनकी प्रदक्षिणा की। सूर्य के दक्षिण ओर स्थित ऋषियों ने परस्पर कहा—"महात्मा होकर भीष्म कैसे दक्षिणायन सूर्य में प्राण त्याग करेंगे?" महामति भीष्म ने मन में विचारकर उन ऋषियों की ओर देखकर कहा—"मैंने मन में यह निश्चय कर लिया है कि दक्षिणायन सूर्य में प्राण-त्याग नहीं करूँगा॥१०१। १०४॥ हे हंसो! मैं सत्य कहता हूं, उत्तरायण सूर्य होने पर प्राणत्याग कर मैं अपने धाम को जाऊँगा। उत्तरायण सूर्य आने तक मैं जीवित रहूँगा, क्योंकि पिता ने मुझको मृत्यु पर आधिपत्य का वर दिया है कि मैं जब चाहूं तभी मरूँ। इसी से मैं जीवित हूँ। उपयुक्त समय आने पर मरूँगा।" हंसों से इतना कहकर भीष्म उसी शरशय्या पर लेट रहे। हे राजन्द्र! कुरुकुलतिलक महात्मा महाबली और अवध्य भीष्म के गिरने पर पाण्डव और सृञ्जयगण आशातीत आनन्द के मारे सिंहनाद करने लगे। महासत्त्व पितामह के हत होने पर आपके पुत्र किंकर्तव्य विमूढ़ और शोक से व्याकुल हो उठे। कुरुवंश के सब लोग व्याकुल हो गये॥१०९।१११॥ कृपाचार्य और दुर्योधन आदि लम्बे-लम्बे श्वास लेते हुए रोने लगे। खेद के मारे बहुत देर तक वे जड़ की तरह खड़े रहे। उनकी इन्द्रियां चेष्टा रहित हो गईं। युद्ध के

न किञ्चित्प्रत्यपश्यन्त पुत्रास्ते भरतर्षभ ।
सम्मोहश्चैव तुमुलः कुरूणामभवत्तदा ॥१११॥
कृपदुर्योधनमुखा निःश्वस्य रुरुदुस्ततः ।
विषादाच्च चिरं कालमतिष्ठन्विगतेन्द्रियाः ॥११२॥
दध्युश्चैव महाराज न युद्धे दधिरे मनः ।
ऊरुग्राहगृहीताश्च नाऽभ्यधावन्त पाण्डवान् ॥११३॥
अवध्ये शन्तनोः पुत्रे हते भीष्मे महौजसि ।
अभावः सहसा राजन्कुरुराजस्य तर्कितः ॥११४॥
हतप्रवीरास्तु वयं निकृत्ताश्च शितैः शरैः ।
कर्तव्यं नाऽभिजानीमो निर्जिताः सव्यसाचिना ॥११५॥
पाण्डवाश्च जयं लब्ध्वा परत्र च परां गतिम् ।
सर्वे दध्मुर्महाशङ्खाञ्शूराः परिघबाहवः ॥११६॥
सोमकाश्च सपञ्चाला प्राहृष्यन्त जनेश्वर ।
ततस्तूर्यसहस्रेषु नदत्सु स महाबलः ॥११७॥
आस्फोटयामास भृशं भीमसेनो ननाद च ।
सेनयोरुभयोश्चापि गाङ्गेये निहते विभो ॥११८॥
संन्यस्य वीराः शस्त्राणि प्राध्यायन्त समन्ततः ।
प्राक्रोशन्प्राद्रवंश्चाऽन्ये जग्मुर्मोहं तथाऽपरे ॥११९॥
क्षत्रं चाऽन्येऽभ्यनिन्दन्त भीष्मं चाऽन्येऽभ्यपूजयन् ।
ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम् ॥१२०॥
भरतानां च ये पूर्वे ते चैनं प्रशशंसिरे ।
महोपनिषदं चैव योगमास्थाय वीर्यवान् ॥१२१॥
जपञ्शान्तनवो धीमान्कालाकांक्षी स्थितोऽभवत्॥ १२२॥

इति श्री महाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मनिपातने ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

लिए वे उद्यत न हो सके। जैसे किसी ने उनके पाओं को पकड़ लिया हो इस प्रकार वे लोग पाण्डवों पर आक्रमण करने के लिए नहीं दौड़ सके। महापराक्रमी और अवध्य भीष्म के गिरने पर कुरुराज दुर्योधन को चारों ओर शून्य और अँधेरा देख पड़ने लगा॥११२।११४॥हम लोगों के सब अङ्ग अर्जुन के बाणों से क्षत-विक्षत हो रहे थे, हमारे अनेक वीर और अजेय भीष्म भी मारे जा चुके थे। अर्जुन से हारे हुए हम लोग कुछ अपना कर्तव्य न निश्चित कर सके। पाण्डव लोग इस लोक में विजय और परलोक के लिए परम गति प्राप्त करके आनन्द से शङ्ख बजाने लगे॥११५।११६॥सृञ्जय, सोमक और पाञ्चालगण आनन्द से पुलकित हो उठे। सैंकड़ो तुरही और नगाड़े बजने लगे। महाबली भीमसेन

बारम्बार सिंहनाद करते हुए ताल ठोकने और उछलने लगे। भीष्म की मृत्यु होने पर दोनों पक्ष के सैनिक शस्त्रों को रखकर चिन्ता करने लगे। कुछ लोग चिल्लाने लगे और कुछ लोग खेद और दुःख से अचेत-से हो गये। कुछ लोग क्षत्रिय-धर्म की निन्दा करने लगे और कुछ लोग महात्मा भीष्म की प्रशंसा करने लगे। ऋषिगण, पितृगण और भरतकुल के स्वर्गवासी पूर्वपुरुषगण भीष्म को साधुवाद देने लगे। महावीर भीष्म शरशय्या पर पड़े-पड़े उत्तरायण सूर्य की प्रतीक्षा करते हुए योगधारणपूर्वक महोपनिषद् गायत्री का जाप करने लगे॥११७।१२२॥

—०—

भीष्मपर्व का एक सौ उन्नीस अध्याय समाप्त हुआ ॥ ११९ ॥

अथ विंशाधिकशततमोऽध्यायः ॥ १२० ॥

धृतराष्ट्र उवाच—कथमासंस्तदा योधा हीना भीष्मेण सञ्जय ।
बलिना देवकल्पेन गुर्वर्थे ब्रह्मचारिणा ॥ १ ॥
तदैव निहतान्मन्ये कुरूनन्यांश्च पाण्डवैः ।
न प्राहरद्यदा भीष्मो घृणित्वाद् द्रुपदात्मजम् ॥ २ ॥
ततो दुःखतरं मन्ये किमन्यत्प्रभविष्यति ।
अद्याऽहं पितरं श्रुत्वा निहतं स्म सुदुर्मतिः ॥ ३ ॥
अश्मसारमयं नूनं हृदयं मम सञ्जय ।
श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्यते ॥ ४ ॥
यदन्यन्निहतेनाऽऽजौ भीष्मेण जयमिच्छता ।
चेष्टितं कुरुसिंहेन तन्मे कथय सुव्रत ॥ ५ ॥
पुनः पुनर्न मृष्यामि हतं देवव्रतं रणे ।
न हतो जामदग्न्येन दिव्यैरस्त्रैरयं पुरा ॥ ६ ॥
स हतो द्रौपदेयेन पाञ्चाल्येन शिखण्डिना ।
सञ्जय उवाच—सायाह्ने निहतो भूमौ धार्तराष्ट्रान्विषादयन् ॥ ७ ॥
पञ्चालानां ददौ हर्षं भीष्मः कुरुपितामहः ।
स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा ॥ ८ ॥

एक सौ बीस अध्याय ॥ १२० ॥

धृतराष्ट्र ने कहा—हे सञ्जय ! पिता के लिए आजन्म ब्रह्मचारी रहनेवाले देवतुल्य महात्मा भीष्म के गिर जाने पर, उनसे हीन, मेरे पक्ष के योद्धाओं की क्या दशा हुई ? जब घृणा के कारण भीष्म ने द्रुपद के पुत्र शिखण्डी पर प्रहार नहीं किया, तभी मैंने समझ लिया कि पाण्डवों के हाथों कौरव मारे गये। हा ! इससे बढ़कर और क्या दुःख होगा ? ॥१।३॥ पिता की मृत्यु का समाचार सुनकर भी मुझ दुर्मति का हृदय सौ टुकड़े होकर फट क्यों नहीं जाता ? मेरा हृदय अवश्य ही वज्र का बना हुआ है। हे सुव्रत ! जय की इच्छा रखनेवाले कुरुसिंह भीष्म ने युद्ध में गिरने के अनन्तर और जो कुछ किया हो वह मेरे आगे कहो। देवव्रत को बारम्बार शत्रुओं ने बाणों से मारा, यह अनर्थ मुझसे नहीं

भीष्मे रथात्प्रपतिते प्रच्युते धरणीतले ।
हाहेति तुमुलः शब्दो भूतानां समपद्यत ॥ ९ ॥
सीमावृक्षे निपतिते कुरूणां समितिञ्जये ।
सेनयोरुभयो राजन्क्षत्रियान्भयमाविशत् ॥ १० ॥
भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजम् ।
कुरवः पर्यवर्तन्त पाण्डवाश्च विशाम्पते ॥ ११ ॥
खं तमः संवृतमभूदासीद्भानुर्गतप्रभः ।
ररास पृथिवी चैव भीष्मे शान्तनवे हते ॥ १२ ॥
अयं ब्रह्मविदां श्रेष्ठो ह्ययं ब्रह्मविदां वरः ।
इत्यभाषन्त भूतानि शयानं पुरुषर्षभम् ॥ १३ ॥
अयं पितरमाज्ञाय कामार्त्तं शन्तनुं पुरा ।
ऊर्ध्वरेतसमात्मानं चकार पुरुषर्षभः ॥ १४ ॥
इति स्म शरतल्पस्थं भरतानां महत्तमम् ।
ऋषयस्त्वभ्यभाषन्त सहिताः सिद्धचारणैः ॥ १५ ॥
हते शान्तनवे भीष्मे भरतानां पितामहे ।
न किञ्चित्प्रत्यपद्यन्त पुत्रास्तव हि मारिष ॥ १६ ॥
विषण्णवदनाश्चाऽऽसन्हृतश्रीकाश्च भारत ।
अतिष्ठन्व्रीडिताश्चैव ह्रिया युक्ता ह्यधोमुखाः ॥ १७ ॥
पाण्डवाश्च जयं लब्ध्वा संग्रामशिरसि स्थिताः ।
सर्वे दध्मुर्महाशङ्खान्हेमजालपरिष्कृतान् ॥ १८ ॥

सहा जाता। जिन पराक्रमी भीष्म को पहले दिव्य अस्त्रों के द्वारा परशुराम भी नहीं मार सके, वही भीष्म आज पाञ्चालकुमार शिखण्डी के हाथ से मारे गये !॥४।७॥सञ्जय ने कहा— हे राजेन्द्र ! पितामह भीष्म सन्ध्या के समय रथ से गिरकर कौरवों को विषादमग्न और पाण्डवों तथा पाञ्चालों को आनन्दित करते हुए शरशय्या पर लेट गये। उनका शरीर पृथ्वी से ऊपर ही रहा। असंख्य बाणों से छिन्न-भिन्न होकर भीष्म जब रथ से गिरे तब सब लोग हाहाकार करने लगे। सीमावृक्ष की तरह दोनों सेनाओं के मध्य में जब भीष्म गिर पड़े तब दोनों पक्ष के क्षत्रिय अत्यन्त भयभीत और उद्विग्न हो उठे॥७।१०॥ कवच और ध्वजा जिनकी कट गई हैं ऐसे पितामह भीष्म के गिरने पर कौरव और पाण्डव दोनों ने युद्ध बन्द कर दिया। उस समय आकाश में घना अँधेरा छा गया और अस्त होते हुए सूर्य की प्रभा मलिन हो गई। पृथ्वी के फटने का सा दारुण शब्द होने लगा। पुरुषश्रेष्ठ भीष्म पितामह को शरशय्या पर पड़े देखकर सब प्राणी कहने लगे कि ये महात्मा श्रेष्ठ ब्रह्मज्ञानी और ब्रह्मज्ञानियों की गति हैं॥११।१३॥ शर शय्या पर पड़े हुए भीष्म को देखकर सिद्ध-चारणों सहित ऋषिगण परस्पर कहने लगे कि इन्होंने पूर्व समय में अपने पिता शान्तनु को कामपीड़ित देखकर, उन्हें सुखी करने के लिए, जन्मभर नैष्ठिक

हर्षात्तूर्यसहस्रेषु वाद्यमानेषु चाऽनघ ।
अपश्याम महाराज भीमसेनं महाबलम् ॥ १९ ॥
विक्रीडमानं कौन्तेयं हर्षेण महता युतम् ।
निहत्य तरसा शत्रुं महाबलसमन्वितम् ॥ २० ॥
सम्मोहश्चापि तुमुलः कुरूणामभवत्ततः ।
कर्णदुर्योधनौ चापि निःश्वसेतां मुहुर्मुहुः ॥ २१ ॥
तथा निपतिते भीष्मे कौरवाणां पितामहे ।
हाहाभूतमभूत्सर्वं निर्मर्यादमवर्तत ॥ २२ ॥
दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव ।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत् ॥ २३ ॥
भ्रात्रा प्रस्थापितो वीरः स्वेनाऽनीकेन दंशितः ।
प्रययौ पुरुषव्याघ्रः स्वसैन्यं सविषादयन् ॥ २४ ॥
तमायान्तमभिप्रेक्ष्य कुरवः पर्यवारयन् ।
दुःशासनं महाराज किमयं वक्ष्यतीति च ॥ २५ ॥
ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः ।
द्रोणस्तत्राऽप्रियं श्रुत्वा मुमोह भरतर्षभ ॥ २६ ॥
स संज्ञामुपलभ्याऽऽशु भारद्वाजः प्रतापवान् ।
निवारयामास तदा स्वान्यनीकानि मारिष ॥ २७ ॥
विनिवृत्तान्कुरून्दृष्ट्वा पाण्डवाऽपि स्वसैनिकान् ।
दूतैः शीघ्राश्वसंयुक्तैः समन्तात्पर्यवारयन् ॥ २८ ॥

ब्रह्मचारी रहने का प्रण किया था। हे महाराज! भरतवंश के पितामह भीष्म के मारे जाने पर आपके पुत्रों को कुछ नहीं सूझ पड़ता था कि वे क्या करें। वे श्रीहीन लज्जित विषादमग्न होकर, सिर झुकाकर, शोक करने लगे॥१४।१७॥उधर संग्रामभूमि में स्थित पाण्डव लोग विजय पाकर सुवर्णभूषित महाशङ्ख बजाने लगे। अनेक तुरही और नगाड़े आदि बजाकर पाण्डवों की सेना हर्ष प्रकट करने लगी। महाबली शत्रु के मारे जाने के कारण परम आनन्दित भीमसेन बालकों की तरह उछलने और कूदने लगे। किन्तु कौरवगण चिन्तित हो गये। कर्ण और दुर्योधन [ सन्ताप, क्षोभ और क्रोध के मारे ] बारम्बार श्वास लेने लगे। सब लोग व्यग्रभाव से इधर-उधर दौड़ते हुए हाहाकार करने लगे॥१८।२१॥भीष्म के गिरने पर दुर्योधन की आज्ञा से कवचधारी दुःशासन अपनी बड़ी भारी सेना लेकर बड़े वेग से द्रोणाचार्य के दल में गये॥२२।२४॥दुःशासन को आते हुए देखकर, ये क्या कहेंगे, इस कौतुहल से सब कौरवों ने उनको चारों ओर से घेर लिया। दुःशासन ने द्रोणाचार्य के पास जाकर भीष्म के गिरने का वृत्तान्त कहा। वह अप्रिय समाचार सुनतेमार ही द्रोणाचार्य मूर्छित हो गये। सचेत हो जाने पर प्रतापी द्रोणाचार्य ने अपनी सेना को युद्ध बन्द कर देने की आज्ञा दी॥२५।२७॥ कौरवों को युद्ध बन्द करते देखकर पाण्डवों ने भी

निवृत्तेषु च सैन्येषु पारम्पर्येण सर्वशः ।
निर्मुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः ॥ २९ ॥
व्युपरम्य ततो युद्धाद्योधाः शतसहस्रशः ।
उपतस्थुर्महात्मानं प्रजापतिमिवाऽमराः ॥ ३० ॥
ते तु भीष्मं समासाद्य शयानं भरतर्षभम् ।
अभिवाद्याऽवतिष्ठन्त पाण्डवाः कुरुभिः सह ॥ ३१ ॥
अथ पाण्डून्कुरूंश्चैव प्रणिपत्याऽग्रतः स्थितान् ।
अभ्यभाषत धर्मात्मा भीष्मः शान्तनवस्तदा ॥ ३२ ॥
स्वागतं वो महाभागा स्वागतं वो महारथाः ।
तुष्यामि दर्शनाद्वाऽहं युष्माकममरोपमाः ॥ ३३ ॥
अभिमन्त्र्याऽथ तानेवं शिरसा लम्बताऽब्रवीत् ।
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयताम् ॥ ३४ ॥
ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च ।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ॥ ३५ ॥
अथाऽब्रवीन्नरव्याघ्रः प्रहसन्निव तान्नृपान् ।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ ३६ ॥
ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम् ।
धनञ्जयं दीर्घबाहुं सर्वलोकमहारथम् ॥ ३७ ॥
धनञ्जय महाबाहो शिरो मे तात लम्बते ।
दीयतामुपधानं वै यद्युक्तमिह मन्यसे ॥ ३८ ॥

---

शीघ्रगामी घोड़ों पर दूतों को भेजकर युद्ध बन्द करा दिया। सब सेनाएँ युद्ध बन्द करके एकत्रित हुईं। तब सब राजा लोग कवच खोलकर भीष्म के पास आये। सैकड़ों-सहस्रों योद्धा युद्ध बन्द करके, प्रजापति के पास देवताओं की तरह, पितामह भीष्म के पास आये॥२८।३०॥इस प्रकार पाण्डव और कौरव दोनों, शरशय्या पर लेटे हुए, भीष्म के पास आकर उन्हें प्रणाम करके सन्मुख खड़े हो गये। तब धर्मात्मा भीष्म ने उन सब से स्नेह के साथ कहा हे महाभाग क्षत्रियो ! मैं तुम्हारा स्वागत करता हूँ। हे महारथी वीरो ! मैं तुम्हारा स्वागत करता हूँ। हे वीरो ! मैं तुम्हें देखकर बहुत प्रसन्न हुआ। हे भरतश्रेष्ठ ! भीष्म का सिर नीचे लटक रहा था। उन्होंने सबका स्वागत करने के पश्चात् कहा– 'हे राजाओ ! मेरा सिर बहुत नीचे लटक रहा है, इसलिए मुझे तकिया दो' ॥३१।३४॥राजा लोग और कौरवगण उसी समय बढ़िया कोमल मूल्यवान् तकिये लेकर दौड़े आये; किन्तु भीष्म ने उनके लिए अनिच्छा प्रकट करके हँसकर कहा—"हे नरपतियो ! ये तकिये वीरशय्या के योग्य नहीं हैं"॥३५।३६॥ अब अर्जुन की ओर देखकर कहा —हे महाबाहु अर्जुन ! मेरा सिर बहुत नीचे लटक रहा है। तुम इस वीर शय्या के योग्य जो तकिया समझते हो, वह मुझे दो॥३६।३८॥सञ्जय कहते हैं कि हे महाराज ! तब अर्जुन ने नेत्रों में

सञ्जय उवाच—समारोप्य महच्चापमभिवाद्य पितामहम् ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ३९ ॥
आज्ञापय कुरुश्रेष्ठ सर्वशस्त्रभृतां वर ।
प्रेष्योऽहं तव दुर्धर्ष क्रियतां किं पितामह ॥ ४० ॥
तमब्रवीच्छान्तनवः शिरो मे तात लम्बते ।
उपधानं कुरुश्रेष्ठ फाल्गुनोपदधत्स्व मे ॥ ४१ ॥
शयनस्याऽनुरूपं वै शीघ्रं वीर प्रयच्छ मे ।
त्वं हि पार्थ समर्थो वै श्रेष्ठः सर्वधनुष्मताम् ॥ ४२ ॥
क्षत्रधर्मस्य वेत्ता च बुद्धिसत्वगुणान्वितः ।
फाल्गुनोऽपि तथेत्युक्त्वा व्यवसायमरोचयत् ॥ ४३ ॥
गृह्याऽनुमन्त्र्य गाण्डीवं शरान्सन्नतपर्वणः ।
अनुमान्य महात्मानं भरतानां महारथम् ॥ ४४ ॥
त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरः शरैः ।
अभिप्राये तु विदिते धर्मात्मा सव्यसाचिना ॥ ४५ ॥
अतुष्यद्भरतश्रेष्ठो भीष्मो धर्मार्थतत्त्ववित् ।
उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम् ॥ ४६ ॥
प्राह सर्वान्समुद्वीक्ष्य भरतान्भारतं प्रति ।
कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्धनम् ॥ ४७ ॥
शयनस्याऽनुरूपं मे पाण्डवोपहितं त्वया ।
यद्यन्यथा प्रपद्येथाः शपेयं त्वामहं रुषा ॥ ४८ ॥
एवमेव महाबाहो धर्मेषु परितिष्ठता ।
स्वप्तव्यं क्षत्रियेणाऽऽजौ शरतल्पगतेन वै ॥ ४९ ॥

आँसू भरकर, श्रेष्ठ गाण्डीव धनुष चढ़ाकर पितामह को प्रणाम करके कहा—हे पितामह ! मैं आपका आज्ञापालक हूँ । हे धनुर्द्धरश्रेष्ठ ! हे कुरुश्रेष्ठ ! आज्ञा दीजिए क्या करूँ ?॥३९।४०॥ भीष्म ने कहा—हे बेटा ! मेरा सिर नीचे लटक रहा है। हे अर्जुन ! तुम समर्थ, सब धनुर्द्धरों में श्रेष्ठ, क्षत्रिय-धर्म के ज्ञाता और बुद्धिमान् हो । तुम सत्व और गुण से सम्पन्न वीर पुरुष हो । इसलिए वीरशय्या के योग्य तकिया मुझे दो॥४१।४२॥"जो आज्ञा" कहकर, अपना कर्तव्य विचारकर, शत्रुविजयी अर्जुन ने गाण्डीव को अभिमन्त्रित किया और तीक्ष्ण धारवाले तीन बाण लेकर उस पर चढ़ाये । फिर पितामह को प्रणाम करके वे तीनों बाण मस्तक में मारे । उन बाणों पर तकिये के समान भीष्म का सिर ठहर गया॥४३।४५॥ सुहृदों का आनन्द बढ़ानेवाले अर्जुन ने ठीक तकिया दिया, यह देखकर धर्मात्मा धर्मार्थतत्त्व के ज्ञाता भीष्म उन पर बहुत प्रसन्न हुए । उन्होंने अर्जुन का अभिनन्दन करके सब कौरवों की ओर देखकर कहा—

तरसैवाऽभिपद्याऽथ यो वै द्रौणमुपाद्रवत् ।
यः करोति महत्कर्म शत्रूणां वै महाबलः ॥ १३ ॥
महाकायो महोत्साहो नागायुतसमो बले ।
तं भीमसेनमायान्तं के शूराः पर्यवारयन् ॥ १४ ॥
यदाऽयाज्जलदप्रख्यो रथः परमवीर्यवान् ।
पर्जन्य इव बीभत्सुस्तुमुलामशनीं सृजन् ॥ १५ ॥
विसृजञ्छरजालानि वर्षाणि मघवानिव ।
अवस्फूर्जन्दिशः सर्वास्तलनेमिस्वनेन च ॥ १६ ॥
चापविद्युत्प्रभो घोरो रथगुल्मबलाहकः ।
सनेमिघोषस्तनितः शरशब्दातिबन्धुरः ॥ १७ ॥
रोषनिर्जितजीमूतो मनोभिप्रायशीघ्रगः ।
मर्मातिगो बाणधरस्तुमुलः शोणितोदकैः ॥ १८ ॥
सम्प्लावयन्दिशः सर्वा मानवैरास्तरन्महीम् ।
भीमनिःस्वनितो रौद्रो दुर्योधनपुरागमान् ॥ १९ ॥
युद्धेऽभ्यषिञ्चद्विजयो गार्ध्रपत्रैः शिलाशितैः ।
गाण्डीवं धारयन्धीमान्कीदृशं वो मनस्तदा ॥ २० ॥
इषुसम्बाधमाकाशं कुर्वन्कपिवरध्वजः ।
यदाऽयात्कथमासीत्तु तदा पार्थं समीक्षताम् ॥ २१ ॥
कच्चिद्गाण्डीवशब्देन न प्रणश्यति वै बलम् ।
यद्वः स भैरवं कुर्वन्नर्जुनो भृशमन्वयात् ॥ २२ ॥

द्रोणाचार्य के सन्मुख गये होंगे, जो रण में शत्रुसेना के मध्य बड़े-बड़े अद्भुत कर्म करते हैं, उन महाकाय, महान् उत्साही, दस सहस्र हाथियों का बल रखनेवाले भीमसेन ने जब द्रोणाचार्य पर आक्रमण किया तब उनको मेरे पक्ष के किन-किन वीरों ने रोका ?॥१३।।१४॥मेघ-सदृश, परम पराक्रमी अर्जुन जब, वज्रवर्षा करते हुए इन्द्र जैसे जल बरसाते हैं वैसे, बाण बरसाते हुए तल-घोष से और रथ के घर्घरनाद से सब दिशाओं को पूर्ण करते हुए सन्मुख आये थे तब हमारे पक्ष के वीरों की क्या दशा हुई थी ! गाण्डीव धनुष धारण करनेवाले अर्जुन जब मेघ के समान गृध्रपत्रयुक्त बाण बरसाते हुए दुर्योधन आदि के आगे आये तब, हमारी सेना की क्या दशा हुई ? अर्जुन का धनुष बिजली की तरह चमक रहा होगा । रथ घटा के समान घिरे हुए होंगे । रथ का घर्घर शब्द ही मेघगर्जन सा प्रतीत हो रहा होगा । बाणों का शब्द ही बिजली की कड़कड़ाहट जान पड़ती होगी । मन और मनोरथ के समान वेग से वे सर्वत्र विचर रहे होंगे । क्रोध से मेघ को भी मात करनेवाले अर्जुन ने मर्मभेदी बाणों से जल की तरह रक्त बहाकर सब दिशाओं को प्लावित कर दिया होगा॥१५-२०॥भयङ्कर सिंहनाद करते हुए अर्जुन आकाश को बाणों से व्याप्त करते हुए जिस समय सन्मुख आये होंगे उस समय उन्हें देखकर हमारे पक्ष के राजाओं की क्या अवस्था हुई होगी ! जब

काच्चिन्नाऽपानुदत्प्राणानिषुभिर्वो धनञ्जयः ।
वातो वेगादिवाऽऽविध्यन्मेघाञ्शरगणैर्नृपान् ॥ २३ ॥
को हि गाण्डीवधन्वानं रणे सोढुं नरोऽर्हति ।
यमुपश्रुत्य सेनाग्रे जनः सर्वो विदीर्यते ॥ २४ ॥
यत्सेनाः समकम्पन्त यद्वीरानस्पृशद्भयम् ।
के तत्र नाऽजहुर्द्रोणं के क्षुद्राः प्राद्रवन्भयात् ॥ २५ ॥
के वा तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
अमानुषाणां जेतारं युद्धेष्वपि धनञ्जयम् ॥ २६ ॥
न च वेगं सिताश्वस्य विसहिष्यन्ति मामकाः ।
गाण्डीवस्य च निर्घोषं प्रावृड्जलदनिःस्वनम् ॥ २७ ॥
विष्वक्सेनो यस्य यन्ता यस्य योद्धा धनञ्जयः ।
अशक्यः स रथो जेतुं मन्ये देवासुरैरपि ॥ २८ ॥
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
मेधावी निपुणो धीमान्युधि सत्यपराक्रमः ॥ २९ ॥
आरावं विपुलं कुर्वन्व्यथयन्सर्वसैनिकान् ।
यदाऽयान्नकुलो द्रोणं के शूराः पर्यवारयन् ॥ ३० ॥
आशीविष इव क्रुद्धः सहदेवो यदाऽभ्ययात् ।
कदनं करिष्यञ्शत्रूणां तेजसा दुर्जयो युधि ॥ ३१ ॥
आर्यव्रतममोघेषुं ह्रीमन्तमपराजितम् ।
सहदेवं तमायान्तं के शूराः पर्यवारयन् ॥ ३२ ॥

भयानक कर्म करते हुए अर्जुन तुम लोगों के सम्मुख आये थे तब गाण्डीव धनुष का शब्द सुनकर ही तो हमारी सेना नहीं भाग गई हुई थी? वायु जैसे मेघों को और सेंठे के वन को छिन्न भिन्न करती है, वैसे ही अर्जुन ने तुम लोगों का वध तो नहीं किया? ॥२१।२३॥ जिन्हें सेना आगे स्थित सुनकर ही योद्धाओं की छाती दहल जाती है, उन गाण्डीव-धनुषधारी अर्जुन का सामना कौन कर सकता है? सैनिकों को विचलित, कम्पित और वीरों को भयविह्वल करनेवाले घोर संग्राम में किन वीरों ने द्रोणाचार्य का साथ नहीं छोड़ा, और कौन कायर भय के मारे रण में भाग खड़े हुए? किन लोगों ने रण में प्राण त्यागकर परमणीय वीर-गति पाई? मैं समझता हूँ कि समर में देवताओं को भी परास्त कर सकनेवाले अर्जुन के श्वेत घोड़ों के वेग और वर्षाकाल की घनघटा के घोर गर्जन-सदृश गाण्डीव घोष को मेरे सैनिक कभी नहीं सह सकते अर्जुन का सामना नहीं कर सकते। तात्पर्य यह है कि जनार्दन जहाँ रथ हाँकनेवाले सारथी और अर्जुन रथी हैं, उस पक्ष को देवता भी नहीं हरा सकते॥२४।२८॥ जिस समय सुकुमार, युवा, शूर, दर्शनीय, बुद्धिमान्, युद्धनिपुण, धीर और सत्यपराक्रमी नकुल महासिंहनाद से सैनिकों को विह्वल करते हुए द्रोणाचार्य के पास पहुँचे थे उस समय किन वीरों ने उनका सामना किया था ॥२९।३०॥ जिन योद्धा

यस्तु सौवीरराजस्य प्रमथ्य महतीं चमूम् ।
आदत्त महिषीं भोजां काम्यां सर्वाङ्गशोभनाम् ॥ ३३ ॥
सत्यं धृतिश्च शौर्यं च ब्रह्मचर्यं च केवलम् ।
सर्वाणि युयुधानेऽस्मिन्नित्यानि पुरुषर्षभे ॥ ३४ ॥
बलिनं सत्यकर्माणमदीनमपराजितम् ।
वासुदेवसमं युद्धे वासुदेवादनन्तरम् ॥ ३५ ॥
धनञ्जयोपदेशेन श्रेष्ठमिष्वस्त्रकर्मणि ।
पार्थेन सममस्त्रेषु कस्तं द्रोणादवारयत् ॥ ३६ ॥
वृष्णीनां प्रवरं वीरं शूरं सर्वधनुष्मताम् ।
रामेण सममस्त्रेषु यशसा विक्रमेण च ॥ ३७ ॥
सत्यं धृतिर्मतिः शौर्यं ब्राह्मं चाऽस्त्रमनुत्तमम् ।
सात्वते तानि सर्वाणि त्रैलोक्यमिव केशवे ॥ ३८ ॥
तमेवं गुणसम्पन्नं दुर्वारमपि दैवतैः ।
समासाद्य महेष्वासं के शूराः पर्यवारयन् ॥ ३९ ॥
पञ्चालेषूत्तमं वीरमुत्तमाभिजनप्रियम् ।
नित्यमुत्तमकर्माणमुत्तमौजसमाहवे ॥ ४० ॥
युक्तं धनञ्जयहिते ममाऽनर्थार्थमुत्थितम् ।
यमवैश्रवणादित्यमहेन्द्रवरुणोपमम् ॥ ४१ ॥
महारथं समाख्यातं द्रोणायोद्यतमाहवे ।
त्यजन्तं तुमुले प्राणान्के शूराः समवारयन् ॥ ४२ ॥

---

से युक्त रथ पर बैठनेवाले, समर में दुर्जय, आर्यव्रती, ह्रीमान्, अपराजित सहदेव विषैले सर्प के समान क्रोध से फुफकारते हुए, शत्रुओं को पीड़ित करने के लिए, जब रणाङ्गण में आये थे तब किन किन वीरों ने उनका सामना किया था? जयद्रथ की विशाल सेना को दल मल कर कमनीय, सर्वाङ्गसुन्दरी, भोजनन्दिनी रानी को हर लानेवाले, अखण्ड ब्रह्मचर्य, सत्य, धैर्य और शौर्य को धारण करनेवाले, महाबली, सत्यकर्मा, उत्साही, अपराजित, संग्राम में वासुदेव सदृश, वासुदेव के अनुज, अर्जुन की दी हुई शिक्षा पाकर अस्त्रादि के प्रयोग में औरों से श्रेष्ठ और अर्जुन के समकक्ष सात्यकि जब द्रोणाचार्य के पास पहुँचे थे तब किन किन वीरों ने उन्हें रोका था ?॥३१।३६॥ वृष्णिवंश में श्रेष्ठ, सब धनुर्द्धरों में अग्रगण्य, अस्त्र-शस्त्र आदि के प्रयोग में निपुण, यश और अस्त्रविद्या में परशुराम के समान, और जैसे श्रीकृष्ण त्रिभुवन के आश्रयस्वरूप हैं वैसे ही उत्कृष्ट अस्त्रों के जानकार, प्रधान यादव सात्यकि सत्य, धैर्य, बुद्धि, और वीरता के आधार हैं। उनके वेग को किन किन वीरों ने रोका था ?॥३७।३९॥ पाञ्चालों में श्रेष्ठ, कुलीनों के प्रेमपात्र, सत्कर्मनिरत, अर्जुन के हितचिन्तक, मेरे अनिष्ट के लिए उद्यत, यम कुबेर सूर्य इन्द्र चन्द्र वरुण के समान प्रसिद्ध महारथी उत्तमौजा जिस समय द्रोण के साथ प्राणपण से युद्ध करने को प्रस्तुत हुए थे उस समय किन-

एकोऽपसृत्य चेदिभ्यः पाण्डवान्यः समाश्रितः ।
धृष्टकेतुं समायान्तं द्रोणं कस्तं न्यवारयत् ॥ ४३ ॥
योऽवधीत्केतुमान्वीरो राजपुत्रं दुरासदम् ।
अपरान्तगिरिद्वारे द्रोणात्कस्तं न्यवारयत् ॥ ४४ ॥
स्त्रीपुंसयोर्नरव्याघ्रो यः स वेद गुणागुणान् ।
शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि ॥ ४५ ॥
देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः ।
द्रोणायाऽभिमुखं यान्तं के शूराः पर्यवारयन् ॥ ४६ ॥
यस्मिन्नभ्यधिका वीरे गुणाः सर्वे धनञ्जयात् ।
यस्मिन्नस्त्राणि सत्यं च ब्रह्मचर्यं च सर्वदा ॥ ४७ ॥
वासुदेवसमं वीर्ये धनञ्जयसमं बले ।
तेजसाऽऽदित्यसदृशं बृहस्पतिसमं मतौ ॥ ४८ ॥
अभिमन्युं महात्मानं व्यात्ताननमिवाऽन्तकम् ।
द्रोणायाऽभिमुखं यान्तं के शूराः समवारयन् ॥ ४९ ॥
तरुणस्तरुणप्रज्ञः सौभद्रः परवीरहा ।
यदाऽभ्यधावद्वै द्रोणं तदाऽऽसीद्वो मनः कथम् ॥ ५० ॥
द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः ।
यद् द्रोणमाद्रवन्संख्ये के शूरास्तान्न्यवारयन् ॥ ५१ ॥
एते द्वादश वर्षाणि क्रीडामुत्सृज्य बालकाः ।
अस्त्रार्थमवसन्भीष्मे बिभ्रतो व्रतमुत्तमम् ॥ ५२ ॥

किन वीरों ने उन्हें रोका था ?॥४०।४२॥ जो महावीर धृष्टकेतु अकेले ही पाण्डवों की सहायता के लिए चेदि देश से आकर युद्ध में सम्मिलित हुए हैं वे जब द्रोण पर आक्रमण करने चले थे तब उन्हें किसने रोका था ? जिस वीर ने गिरिद्वार में भागते हुए दुर्द्धर्ष राजपुत्र को मारा था, उन केतुमान् को द्रोण के समीप आने से किसने रोका था ? जो पुरुषसिंह स्त्री और पुरुष दोनों के गुण-दोषों को जानते हैं, जो महात्मा भीष्म की मृत्यु का कारण हैं, वे उत्साही राजपुत्र शिखण्डी जब प्रसन्नतापूर्वक द्रोणाचार्य के सम्मुख आये थे तब उन्हें किसने रोका था ?॥४३।४६॥ जो अर्जुन से भी अधिक गुणी हैं, जो अस्त्रविद्या सत्य और ब्रह्मचर्य के अखण्ड आधार हैं, जो वीरता में श्रीकृष्ण के सदृश, बल में अर्जुन के समान, तेज में आदित्य के तुल्य और बुद्धि में बृहस्पति के समान हैं, वे मुख फैलाकर आते हुए काल के समान वीरवर अभिमन्यु जब द्रोणाचार्य के सम्मुख आये थे तब किन वीरों ने उनका सामना किया था ? जिस समय वे तरुण प्रज्ञ युवा अभिमन्यु द्रोण पर आक्रमण करने वेग से चले थे उस समय तुम लोगों के मन की क्या दशा हुई थी ?॥४७।५०॥ जैसे सब नद-नदी आदि समुद्र की ओर वेग से जाते हैं वैसे ही द्रौपदी के पाँचों पुत्रों ने जब द्रोणाचार्य पर आक्रमण किया था तब उन्हें किन वीरों ने रोका था ? बाल्यावस्था में बारह

क्षत्रञ्जयः क्षत्रदेवः क्षत्रवर्मा च मानदः ।
धृष्टद्युम्नात्मजा वीराः के तान्द्रोणादवारयन् ॥ ५३ ॥
शताद्विशिष्टं यं युद्धे सममन्यन्त वृष्णयः ।
चेकितानं महेष्वासं कस्तं द्रोणादवारयत् ॥ ५४ ॥
वार्धक्षेमिः कलिङ्गानां यः कन्यामाहरद्युधि ।
अनाधृष्टिरदीनात्मा कस्तं द्रोणादवारयत् ॥ ५५ ॥
भ्रातरः पञ्च कैकेया धार्मिकाः सत्यविक्रमाः ।
इन्द्रगोपकसङ्काशा रक्तवर्मायुधध्वजाः ॥ ५६ ॥
मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः ।
तान्द्रोणं हन्तुमायातान्के वीराः पर्यवारयन् ॥ ५७ ॥
यं योधयन्तो राजानो नाऽजयन्वारणावते ।
षण्मासानपि संरब्धा जिघांसन्तो युधां पतिम् ॥ ५८ ॥
धनुष्मतां वरं शूरं सत्यसन्धं महाबलम् ।
द्रोणात्कस्तं नरव्याघ्रं युयुत्सुं पर्यवारयत् ॥ ५९ ॥
यः पुत्रं काशिराजस्य वाराणस्यां महारथम् ।
समरे स्त्रीषु गृध्यन्तं भल्लेनाऽपाहरद्रथात् ॥ ६० ॥
धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम् ।
युक्तं दुर्योधनानर्थे सृष्टं द्रोणवधाय च ॥ ६१ ॥
निर्दहन्तं रणे योधान्दारयन्तं च सर्वतः ।
द्रोणाभिमुखमायान्तं के शूराः पर्यवारयन् ॥ ६२ ॥

---

वर्ष तक खेल-कूद छोडकर, कठोर ब्रह्मचर्य धारण करके, भीष्म पितामह के पास रहकर युद्धकला सीखनेवाले धृष्टद्युम्न के चारों पुत्र—क्षत्रञ्जय, क्षत्रदेव, क्षत्रवर्मा और मानद—जब युद्धभूमि में देख पडे थे तब उन्हें किन वीरों ने रोका था ? ॥५१।५३॥ जिन्हे वृष्णिवंश के वीर यादव सौ वीरों से भी अधिक बलवान् और पराक्रमी समझते हैं, उन महाबली चेकितान को किन वीरों ने द्रोण की ओर बढने से रोका था ? कलिङ्ग-कुमारी को हरण करनेवाले साहसी अनाधृष्टि वार्धक्षेमि को आचार्य पर आक्रमण करने से किसने रोका था ? धर्मात्मा, सत्यनिष्ठ, लाल ध्वजा और लाल शस्त्रों से शोभित, लाल कवच धारण करनेवाले, देखने में बीरबहूटी के समान लाल, पाण्डवों के मौसेरे भाई, पाण्डवों की जय चाहनेवाले, पाँचों भाई कैकेय राजकुमार जब द्रोणाचार्य को मारने के लिए आगे बढे थे तब उन्हें किन-किन वीरों ने रोका था ? ॥५४।५७॥ वारणावत में क्रुद्ध और मारने को तत्पर होकर छः महीने तक युद्ध करके भी राजा लोग जिन्हें परास्त नहीं कर सके, जिन्होंने वाराणसीपुरी में स्त्री लोभी महारथी काशिराज के पुत्र को भल्ल के द्वारा रथ से नीचे मार गिराया था, उन सत्यपरायण युयुत्सु को द्रोणाचार्य के ऊपर आक्रमण करते समय किन-किन वीरों ने रोका था ! महाधनुर्धर पाण्डवों के प्रधान मन्त्री और सेनापति, दुर्योधन के

उत्सङ्ग इव संवृद्धं द्रुपदस्याऽस्त्रवित्तमम् ।
शैखण्डिनं शस्त्रगुप्तं के च द्रोणादवारयन् ॥ ६३ ॥
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत ।
महता रथघोषेण मुख्यारिघ्नो महारथः ॥ ६४ ॥
दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान् ।
निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ॥ ६५ ॥
गङ्गास्रोतसि यावत्यः सिकता अप्यशेषतः ।
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे ॥ ६६ ॥
न पूर्वे नाऽपरे चक्रुरिदं केचन मानवाः ।
इतीदं चुक्रुशुर्देवाः कृते कर्मणि दुष्करे ॥ ६७ ॥
पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु ।
जातं चापि जनिष्यन्तं द्वितीयं चापि साम्प्रतम् ॥ ६८ ॥
अन्यमौशीनराच्छैब्याद्धुरो वोढारमित्युत ।
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः ॥ ६९ ॥
तस्य नप्तारमायान्तं शैब्यं कः समवारयत् ।
द्रोणायाऽभिमुखं यत्तं व्यात्ताननमिवाऽन्तकम् ॥ ७० ॥
विराटस्य रथानीकं मत्स्यस्याऽमित्रघातिनः ।
प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन् ॥ ७१ ॥
सद्यो वृकोदराज्जातो महाबलपराक्रमः ।
मायावी राक्षसो वीरो यस्मान्मम महद्भयम् ॥ ७२ ॥

परम शत्रु और द्रोणवध के लिए ही उत्पन्न, धृष्टद्युम्न जिस समय मेरे सैनिकों को मारते और छिन्न-भिन्न करते हुए द्रोणाचार्य के सम्मुख पहुँचे थे उस समय उनको किन-किन वीरों ने रोका था ?॥५८।६२॥ उनको किन-किन वीरों ने रोका था ? द्रुपदराज की गोद में पले और बढ़े हुए और अस्त्र-शस्त्रों के द्वारा सुरक्षित शिखण्डी जब द्रोणाचार्य पर क्रोध से झपटे थे तब उन्हें किन-किन वीरों ने रोका था ? हे सञ्जय ! जिन्होंने चर्म सदृश इस भूमण्डल को घेर रक्खा था, जिन शत्रुपक्ष के वीरों को मारनेवाले महारथी के रथ से भयानक शब्द उत्पन्न होता है, जिन्होंने स्वादिष्ट उत्तम खाने-पीने के पदार्थ खिला-पिलाकर और यथेष्ट दक्षिणा देकर बिना किसी प्रकार के विघ्न के दस अश्वमेध यज्ञ किये हैं, जो पुत्र के समान अपनी प्रजा का पालन करते हैं, जिन्होंने यज्ञों में अगणित गोदान किये हैं, जिनके बराबर गोदान कभी कोई नहीं कर सका, और जिनका यह दुष्कर कार्य पूर्ण होने पर देवताओं ने जिनका नाम लेकर कहा था कि "इस जगत् में उशीनर-तनय के समान महात्मा कोई नहीं उत्पन्न हुआ, न होगा और न इस समय है", उन उशीनर के वंशधर शैब्य का सामना किसने किया था ?॥६३।७०॥ राजा विराट की रथ-सेना जब, मुख फैलाये हुए काल की तरह, आचार्य पर आक्रमण करने आई थी तब उसे किन वीरों ने रोका था ? जो महापराक्रमी मायावी

पार्थानां जयकामं तं पुत्राणां मम कण्टकम् ।
घटोत्कचं महात्मानं कस्तं द्रोणादवारयत् ॥ ७३ ॥
एते चाऽन्ये च बहवो येषामर्थाय सञ्जय ।
त्यक्तारः संयुगे प्राणान्किं तेषामजितं युधि ॥ ७४ ॥
येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः ।
हितार्थी चापि पार्थानां कथं तेषां पराजयः ॥ ७५ ॥
लोकानां गुरुरत्यर्थं लोकनाथः सनातनः ।
नारायणो रणे नाथो दिव्यो दिव्यात्मकः प्रभुः ॥ ७६ ॥
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः ।
तान्यहं कीर्त्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः ॥ ७७ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि धृतराष्ट्रवाक्ये दशमोऽध्यायः ॥ १० ॥

राक्षस भीमसेन से तत्काल उत्पन्न हुआ था, जिसे मैं बहुत ही डरता हूँ, जो पाण्डवों की जय चाहनेवाला और मेरे पुत्रों का कण्टक है, वह घटोत्कच जब द्रोणाचार्य के सन्मुख आया था तब उसको किन किन वीरों ने रोका था ?॥७१।७३॥हे सञ्जय ! ये सब और अन्यान्य वीरगण जिनके लिए प्राणपण से रण कर रहे है, और पुरुषोत्तम श्रीकृष्ण जिनके सहायक और हितचिन्तक है, वे पाण्डव किस प्रकार परास्त हो सकते हैं । श्रीकृष्ण लोकगुरु, लोकनाथ, सनातन पुरुष, समर में मानवों को शरण देनेवाले, दिव्यरूप और प्रभु हैं । पण्डित लोग उनके सम्पूर्ण दिव्य कर्मों का वर्णन करते हैं । मैं भी अपने चित्त को शान्त करने के लिए उन श्रीकृष्ण के गुणों का कीर्तन करूँगा॥७४।७७॥

द्रोणपर्व का दसवाँ अध्याय समाप्त हुआ ॥ १० ॥

अथ एकादशोऽध्यायः ॥ ११ ॥

धृतराष्ट्र उवाच—शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय ।
कृतवान्यानि गोविन्दो यथा नाऽन्यः पुमान्कचित्॥ १ ॥
संवर्धता गोपकुले बालेनैव महात्मना ।
विख्यापितं बलं बाहोस्त्रिषु लोकेषु सञ्जय ॥ २ ॥
उच्चैः श्रवस्तुल्यबलं वायुवेगसमं जवे ।
जघान हयराजं तं यमुनावनवासिनम् ॥ ३ ॥
दानवं घोरकर्माणं गवां मृत्युमिवोत्थितम् ।
वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ॥ ४ ॥

ग्यारहवाँ अध्याय ॥ ११ ॥

धृतराष्ट्र बोले—हे सञ्जय! गोविन्द के अलौकिक कर्मों को सुनो। इन महात्मा ने बाल्यकाल में ही गोपमण्डली में पलकर अपने बाहुबल का परिचय त्रिभुवन भर में दिया था। इन्होंने उच्चैःश्रवा (इन्द्र के घोड़े)

प्रलम्बं नरकं जम्भं पीठं चापि महासुरम् ।
मुरुं चाऽन्तकसङ्काशमवधीत्पुष्करेक्षणः ॥ ५ ॥
तथा कंसो महातेजा जरासन्धेन पालितः ।
विक्रमेणैव कृष्णेन सगणः पातितो रणे ॥ ६ ॥
सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ७ ॥
बलदेवद्वितीयेन कृष्णेनाऽमित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८ ॥
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चाऽस्मै प्रददौ वरान् ॥ ९ ॥
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानावहत्पुष्करेक्षणः ॥ १० ॥
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथ वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११ ॥
जरासन्धं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास समग्राक्षौहिणीपतिम् ॥ १२ ॥
चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ १३ ॥
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।
समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ १४ ॥

---

क समान बली और वायु के समान शीघ्र चलनवाले यमुनावन-वासी केशी दैत्य का दमन किया। [श्रीकृष्ण ने पूतना, शकटासुर, धेनुक, महाबली अरिष्टासुर आदि को मारा है। महाबाहु वासुदेव ने गोवर्द्धन गिरि उठा-कर शिलावर्षा से व्रज को बचाया और दावानल भी बुझाया है।]॥१।४॥इन्होंने ऋषभ (वृषरूपधारी असुर), प्रलम्बासुर, नरकासुर, जम्भ, महासुर पीठ और यमतुल्य मुर दानव को मारा है। निहत्थे श्रीकृष्ण ने पराक्रम के साथ रण में कंस को, जिसका सहायक महाबली अजेय जरासन्ध था, उसके साथियों समेत मार डाला है। महापराक्रमी, अक्षौहिणीपति, भोजराज के मध्यस्थ, कंस के भाई, शूरसेन देश के राजा, सुनामा को भी बलदेव सहित श्रीकृष्ण ने युद्ध में मारा और उसकी सेना को नष्टभ्रष्ट कर दिया॥५।८॥महाक्रोधी ब्रह्मर्षि दुर्वासा को, सेवा करके, अपनी पत्नी सहित श्रीकृष्ण ने एक समय प्रसन्न किया और उनसे अमोघ वर प्राप्त किये। श्रीकृष्ण स्वयंवर में गान्धारराज की कन्या को हर लाये, सब राजाओं को वहाँ हराया और उस कन्या के साथ उन्होंने विवाह किया। राजा लोग यह नहीं सह सके कि राजकन्या उन्हें न मिल-कर श्रीकृष्ण को मिले। असील घोड़ा जैसे चाबुक की चोट नहीं सह सकता, वैसे ही वे उसे न सह-कर विवाह के अवसर पर बिगड़ खड़े हुए। श्रीकृष्ण ने बाण-रूप कोड़ों की मार से उनकी चमड़ी उखाड़

अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
वात्स्यगार्ग्यकरूपांश्च पौण्ड्रांश्चाऽप्यजयद्रणे ॥ १५ ॥
आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसिकान्पिशाचांश्च समुद्गलान् ॥ १६ ॥
काम्बोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च सञ्जय ।
त्रिगर्त्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् ॥ १७ ॥
नानादिग्भ्यश्च सम्प्राप्तान्खशांश्चैव शकांस्तथा ।
जितवान्पुण्डरीकाक्षो यवनं च सहानुगम् ॥ १८ ॥
प्रविश्य मकरावासं यादोगणनिषेवितम् ।
जिगाय वरुणं संख्ये सलिलान्तर्गतं पुरा ॥ १९ ॥
युधि पञ्चजनं हत्वा दैत्यं पातालवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ २० ॥
खाण्डवे पार्थसहितस्तोषयित्वा हुताशनम् ।
आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥ २१ ॥
वैनतेयं समारुह्य त्रासयित्वाऽमरावतीम् ।
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥ २२ ॥
तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम् ।
राज्ञां चाप्यजितं कश्चित्कृष्णेनेह न शुश्रुम ॥ २३ ॥
यच्च तन्महदाश्चर्यं सभायां मम सञ्जय ।
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहाऽर्हति ॥ २४ ॥

दी। जनार्दन श्रीकृष्ण ने अनेक अक्षौहिणी सेना के स्वामी महाबाहु जरासन्ध को कौशल से भीमसेन के हाथों द्वन्द्वयुद्ध में मरवा डाला॥९।१२॥धर्मपुत्र युधिष्ठिर के राजसूय यज्ञ के अवसर पर राजसेना के अगुआ महाबली चेदिदेश के राजा शिशुपाल ने सबसे पहले जनार्दन श्रीकृष्ण को अर्घ्य ( पूजा ) मिलते देखकर उसका विरोध किया तब, इसी कारण, श्रीकृष्ण ने कुपित होकर पशु की तरह उसे तुरन्त मार डाला। श्रीकृष्ण ने शाल्व के पराक्रम से सुरक्षित दुर्द्धर्ष आकाशगामी मायामय सौभ नामक दैत्यपुर को पराक्रम से तोड़-फोड़कर समुद्र में गिरा दिया॥१३।१४॥उन्होने अङ्ग, वङ्ग, कलिङ्ग, मगध, काशी, कोसल, वात्स्य, गार्ग्य, करूप, पौण्ड्र, अवन्ती, दाक्षिणात्य, पहाड़ों, दाशेरक, काश्मीर, औरसिक, पिशाच, मुद्गल, काम्बोज वाटधान, चोल, पाण्ड्य, त्रिगर्त, मालव, दुर्जय, दरद, खश, शक और अन्य अनेक देशों और उनके राजाओं को जीता। अनुचरों सहित आये हुए महाशक्तिशाली कालयवन को उन्होंने अपने बाहुबल से मार भगाया ॥१५।१८॥उन्होंने विकट जल-जन्तुओं से पूर्ण समुद्र के भीतर प्रवेश किया, और जल के भीतर जाकर वरुण देव को अपने वश में कर लिया। उन माधव ने पाताल-तलवासी पञ्चजन दानव को युद्ध में मारकर दिव्य पाञ्चजन्य शङ्ख उससे प्राप्त किया। महात्मा जनार्दन ने अर्जुन के साथ खाण्डव वन में अग्नि को

यच्च भक्त्या प्रसन्नोऽहमद्राक्षं कृष्णमीश्वरम् ।
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चाऽऽगमम् ॥ २५ ॥
नाऽन्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणां शक्यते गन्तुं हृषीकेशस्य सञ्जय ॥ २६ ॥
तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः ।
अगावहोऽनिरुद्धश्च चारुदेष्णः ससारणः ॥ २७ ॥
उल्मुको निशठश्चैव झिल्ली बभ्रुश्च वीर्यवान् ।
पृथुश्च विपृथुश्चैव शमीकोऽथाऽरिमेजयः ॥ २८ ॥
एतेऽन्ये बलवन्तश्च वृष्णिवीराः प्रहारिणः ।
कथञ्चित्पाण्डवानीकं श्रयेयुः समरे स्थिताः ॥ २९ ॥
आहूता वृष्णिवीरेण केशवेन महात्मना ।
ततः संशयितं सर्वं भवेदिति मतिर्मम ॥ ३० ॥
नागायुतबलो वीरः कैलासशिखरोपमः ।
वनमाली हली रामस्तत्र यत्र जनार्दनः ॥ ३१ ॥
यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय सञ्जय ॥ ३२ ॥
स यदा तात सन्नह्येत्पाण्डवार्थाय सञ्जय ।
न तदा प्रतिसंयोद्धा भविता तत्र कश्चन ॥ ३३ ॥
यदि स्म कुरवः सर्वे जयेयुर्नाम पाण्डवान् ।
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ३४ ॥

---

तृप्त किया, और उनसे आग्नेयास्त्र तथा दुर्द्धर्ष चक्र प्राप्त किया॥१९।२१॥महावीर श्रीकृष्ण गरुड़ पर बैठकर अमरावती पुरी गये और अमरावती-निवासी देवगण को भयविह्वल करके इन्द्र-भवन से पारिजात का वृक्ष उखाड़ लाये। इन्द्र उनके पराक्रम को अच्छी प्रकार जानते थे, इसी से विवश होकर उन्हें सब सहना पड़ा। हे सञ्जय! मैंने कभी यह नहीं सुना कि ऐसा कोई राजा है जिसे श्रीकृष्ण ने नहीं हराया, या नीचा नहीं दिखाया। उन कमललोचन महातेजस्वी श्रीकृष्ण ने सभा के मध्य जैसा अद्भुत कर्म कर दिखाया था वैसा कर्म उनके अतिरिक्त और कौन कर सकता है?॥२२।२४॥ भक्ति से विशुद्धात्मा होकर मैंने परमेश्वर श्रीकृष्ण को देखा है। इसी से उनके सब काम मुझे प्रत्यक्ष से दिखाई पड़ रहे हैं। पराक्रमी बुद्धिमान् वासुदेव के कार्य अनन्त हैं, उनकी गिनती नहीं की जा सकती। महात्मा केशव की आज्ञा से गद, साम्ब, प्रद्युम्न, विदूरथ, अवगाह, अनिरुद्ध, चारुदेष्ण, सारण, उल्मुक, निशठ, पराक्रमी, झिल्लीबभ्रु, पृथु, विपृथु, शमीक और अरिमेजय आदि अनेकानेक योद्धा वृष्णिवीर—उनके बुलाने पर—रण में पाण्डवों का ही पक्ष लेंगे। तब अवश्य ही मेरे सैनिक प्राणसंशय और सङ्कट में पड़ेंगे। जिस ओर महात्मा वासुदेव होंगे उसी ओर दस सहस्र हाथियों का बल रखनेवाले पराक्रमी कैलास पर्वत के समान वनमाली बलदेव भी अवश्य होंगे॥२५।३१॥

ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे ।
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ॥ ३५ ॥
यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः ।
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ॥ ३६ ॥
न केनचिदुपायेन कुरूनां दृश्यते जयः ।
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्त्तत ॥ ३७ ॥
अर्जुनः केशवस्याऽऽत्मा कृष्णोऽप्यात्मा किरीटिनः ।
अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥ ३८ ॥
सर्वेष्वपि च लोकेषु बीभत्सुरपराजितः ।
प्राधान्येनैव भूयिष्ठममेयाः केशवे गुणाः ॥ ३९ ॥
मोहाद् दुर्योधनः कृष्णं यो न वेत्तीह केशवम् ।
मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ॥ ४० ॥
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ।
पूर्वदेवौ महात्मानौ नरनारायणावुभौ ॥ ४१ ॥
एकात्मानौ द्विधा भूतौ दृश्येते मानवैर्भुवि ।
मनसाऽपि हि दुर्धर्षौ सेनामेतां यशस्विनौ ॥ ४२ ॥
नाशयेतामिहेच्छन्तौ मानुषत्वाच्च नेच्छतः ।
युगस्येव विपर्यासो लोकानामिव मोहनम् ॥ ४३ ॥
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ।
नह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ॥ ४४ ॥

हे सञ्जय ! द्विजगण जिन्हें सबका पिता बतलाते हैं वे जनार्दन कृष्ण क्या पाण्डवों का पक्ष लेकर युद्ध करेंगे ? वे जब पाण्डवों के हित की इच्छा से युद्ध के लिए तैयार होंगे तब कोई उनका सामना नहीं कर सकेगा। यदि कौरवगण पाण्डवों को जीत लेंगे तो महाबाहु वासुदेव पाण्डवों के लिए शस्त्र धारण करके कौरवों को और उनके पक्ष के सब राजाओं को मारकर कुन्ती को सम्पूर्ण राज्य दे देंगे। जिस ओर श्रीकृष्ण सारथी हैं और अर्जुन योद्धा हैं, उसके सन्मुख युद्ध में कौन ठहर सकेगा॥३२।३६॥अतएव, हे सञ्जय! मैं किसी प्रकार कौरवों के लिए कल्याण की प्राप्ति नहीं देखता। अब जिस प्रकार युद्ध हुआ, वह सब मैं विस्तारपूर्वक सुनना चाहता हूँ, मुझसे कहो। अर्जुन श्रीकृष्ण की और श्रीकृष्ण अर्जुन का आत्मा हैं। अर्जुन में विजय और श्रीकृष्ण में शाश्वती कीर्ति सदा रहती है। हे सञ्जय ! अर्जुन को इस त्रिभुवन में कोई योद्धा परास्त नहीं कर सकता। श्रीकृष्ण भी सर्वगुणालङ्कृत और अलौकिक शक्तिशाली हैं॥३७।३९॥दुष्ट दुर्योधन दैव विडम्बना से मोहित और निकटवर्ती मृत्यु के वशीभूत है, इसीलिए अर्जुन और श्रीकृष्ण के प्रभाव और पौरुष को नहीं जानता। ये दोनों महात्मा नर नारायण का अवतार हैं। दोनों एक प्राण दो-देह हैं। एक के ही दो रूप हैं। उनका पराभव असम्भव है, उसकी कल्पना भी नहीं की जा सकती। ये दोनों यशस्वी महात्मा

न क्रियाभिर्न चाऽस्त्रेण मृत्योः कश्चिन्निवार्यते ।
लोकसम्भावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ॥ ४५ ॥
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि सञ्जय ।
यां तां श्रियमसूयामः पुरा दृष्ट्वा युधिष्ठिरे ॥ ४६ ॥
अद्य तामनुजानीमो भीष्मद्रोणवधेन ह ।
मत्कृते चाप्यनुप्राप्तः कुरूणामेष संक्षयः ॥ ४७ ॥
पक्वानां हि वधे सूत वज्रायन्ते तृणान्युत ।
अनन्तमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः ॥ ४८ ॥
यस्य कोपान्महात्मानौ भीष्मद्रोणौ निपातितौ ।
प्राप्तः प्रकृतितो धर्मो न धर्मो मामकान्प्रति ॥ ४९ ॥
क्रूरः सर्वविनाशाय कालोऽसौ नाऽतिवर्त्तते ।
अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥ ५० ॥
तस्मादपरिहार्येऽर्थे सम्प्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ५१ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि धृतराष्ट्रविलापे एकादशोऽध्यायः ॥ ११ ॥

चाहें तो हमारे पक्ष की सारी सेना को अकेले ही नष्ट कर सकते हैं। किन्तु मनुष्ययोनि में उत्पन्न होनेके कारण ही मनुष्य-धर्म का पालन करते हुए वैसा नहीं करते ॥४०।४३॥भीष्म और द्रोणाचार्य की मृत्यु ऐसी घटना है कि जिसे युग का बदल जाना समझना चाहिए। इससे यह सिद्ध हो गया कि ब्रह्मचर्य, वेदपाठ, अथवा शस्त्र-शिक्षा आदि किसी के द्वारा मनुष्य मृत्यु से नहीं बच सकता। मृत्यु अनिवार्य है। हे सञ्जय! युद्धदुर्मद लोकपूजित अस्त्रनिपुण महावीर भीष्म और द्रोणाचार्य की युद्ध में मृत्यु सुनकर भी जो मैं जीवित हूँ, यही आश्चर्य है ॥४३।४६॥पहले युधिष्ठिर की राजलक्ष्मी और ऐश्वर्य देखकर मुझे बड़ी ईर्ष्या उत्पन्न हुई थी। अब भीष्म और द्रोण की मृत्यु हो जाने के कारण मुझे युधिष्ठिर के आश्रित होकर रहना पड़ेगा। मेरे ही कारण कुरुवंश का यह विनाश हुआ है। हे सूत! जिन लोगों की मृत्यु आ गई है, उनके लिए तिनके वज्र बन जाते हैं। जिनके क्रोध से संग्राम में महावीर भीष्म और द्रोणाचार्य की मृत्यु हुई है, वे युधिष्ठिर अवश्य ही अनन्त ऐश्वर्य के अधिकारी होंगे। अतएव धर्मपुत्र युधिष्ठिर के ही पक्ष में धर्म है; मेरे पुत्रों की ओर से वह बिलकुल ही विमुख है। यह पापात्मा क्रूर काल सबका नाश किये बिना नहीं रहेगा। हे तात! मनस्वी लोग अपने मन में जो-जो मनोरथ करते हैं उन्हें प्रबल दैव मिथ्या कर देता है, उनकी सोची हुई बात पूर्ण नहीं होने पाती। जो यह दुश्चिन्त्य विषय उपस्थित हुआ है, इसके परिहार का उपाय नहीं है। अस्तु, अब तुम युद्ध का वृत्तान्त वर्णन करो॥५०।५१॥

द्रोणपर्व का ग्यारहवाँ अध्याय समाप्त हुआ ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ॥ १२ ॥

सञ्जय उवाच—हन्त ते कथयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा स न्यपतद् द्रोणः सूदितः पाण्डुसृञ्जयैः ॥ १ ॥
सेनापतित्वं सम्प्राप्य भारद्वाजो महारथः ।
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ २ ॥
यत्कौरवाणामृषभादापगेयादनन्तरम् ।
सैनापत्येन यद्राजन्मामद्य कृतवानसि ॥ ३ ॥
सदृशं कर्मणस्तस्य फलं प्राप्नुहि भारत ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ४ ॥
ततो दुर्योधनो राजा कर्णदुःशासनादिभिः ।
सम्मन्त्र्योवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ५ ॥
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहाऽऽनय ॥ ६ ॥
ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ॥ ७ ॥
धन्यः कुन्तीसुतो राजन्यस्य ग्रहणमिच्छसि ।
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसे ॥ ८ ॥
किमर्थं च नरव्याघ्र न वधं तस्य कांक्षसे ।
नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥ ९ ॥
आहोस्विद्धर्मराजस्य द्वेष्टा तस्य न विद्यते ।
यदीच्छसि त्वं जीवन्तं कुलं रक्षसि चाऽऽत्मनः ॥ १० ॥

बारहवाँ अध्याय ॥ १२ ॥

सञ्जय ने कहा—हे महाराज ! मैंने सब वृत्तान्त अपने नेत्रों देखा है। जिस प्रकार पाण्डवों और सृञ्जयों के हाथों द्रोणाचार्य की मृत्यु हुई है, सो सब मैं आपके आगे विस्तारपूर्वक कहता हूँ॥१॥महारथी भारद्वाज द्रोणाचार्य जब सेनापति बनाये गये तब सब सेना के मध्य में खड़े होकर उन्होंने दुर्योधन से कहा—हे राजेन्द्र ! तुमने कौरवश्रेष्ठ भीष्म पितामह के अस्त्र-त्याग के उपरान्त ही इस समय मुझे सेनापति का पद देकर जो मेरा सत्कार किया है, उसके अनुरूप फल अवश्य तुम प्राप्त करोगे। हे भारत ! बतलाओ, तुम्हारी अब क्या इच्छा है ? मैं कौन सा कार्य करूँ, जिससे तुम्हारी इच्छा पूर्ण हो ?॥२।४॥तब राजा दुर्योधन ने कर्ण और दुःशासन आदि मन्त्रियों और स्वजनों से सम्मति करके विजयी दुर्द्धर्ष द्रोणाचार्य से कहा—हे महामते ! यदि आप प्रसन्न होकर मुझे वरदान देते हैं तो मैं यह माँगता हूँ कि आप श्रेष्ठ रथी युधिष्ठिर को जीते ही पकड़कर मेरे सन्मुख लाइए॥५।६॥यह सुनकर द्रोणाचार्य ने सारी सेना को हर्षित और उत्साहित करने के लिए दुर्योधन से कहा—हे राजेन्द्र ! राजा युधिष्ठिर धन्य हैं; क्योंकि तुमने

अथवा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यं सम्प्रति दत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥ ११ ॥
धन्यः कुन्तीसुतो राजा सुजातं चाऽस्य धीमतः ।
अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् ॥ १२ ॥
द्रोणेन चैवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः ॥ १३ ॥
नाऽऽकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् ॥ १४ ॥
वधे कुन्तिसुतस्याऽऽजौ नाऽऽचार्य विजयो मम ।
हते युधिष्ठिरे पार्था हन्युः सर्वान्हि नो ध्रुवम् ॥ १५ ॥
न च शक्या रणे सर्वे निहन्तुममरैरपि ।
य एव तेषां शेषः स्यात्स एवाऽस्मान्न शेषयेत् ॥ १६ ॥
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
पुनर्यास्यन्त्यरण्याय पाण्डवास्तमनुव्रताः ॥ १७ ॥
सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् ॥ १८ ॥
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ।
तं वरं सान्तरं तस्मै ददौ सञ्चिन्त्य बुद्धिमान् ॥ १९ ॥

उनकी मृत्यु का वर न माँगकर जीते ही पकड़ लाने का वर माँगा। हे नरश्रेष्ठ ! तुमने उनके वध की इच्छा क्यों नहीं की ? हे दुर्योधन ! तुमने मन्त्रणा-निपुण होकर भी युधिष्ठिर की मृत्यु क्यों नहीं चाही ? युधिष्ठिर सचमुच अजातशत्रु हैं, उनका यह नाम सार्थक है। युधिष्ठिर का कोई शत्रु नहीं है। तुमने क्या अपने कुल की रक्षा करने के विचार से ही युधिष्ठिर की मृत्यु-कामना नहीं की ?॥७।१०॥अथवा युद्ध में पाण्डवों को परास्त करके अन्त को उन्हें उनका राज्यांश देकर सौभ्रात्र बनाये रखने का अभिप्राय कर लिया है ? जो हो, राजा युधिष्ठिर के समान भाग्यवान् कोई नहीं है। उनका जन्म सार्थक है, उनका अजातशत्रु नाम भी आज सफल हुआ; क्योंकि तुम उनके महावैरी होकर भी उनसे इतना स्नेह रखते हो कि चाहे जिस कारण से हो, उनकी मृत्यु नहीं चाहते॥११।१२॥हे भारत ! बृहस्पतितुल्य व्यक्ति भी ऐसे अवसर पर अपने हृदय के भाव को नहीं छिपा सकता। इसी कारण उस समय दुर्योधन के हृदय का भाव एकाएक प्रकट हो गया। आचार्य की बात सुनकर वे प्रसन्नतापूर्वक कहने लगे—हे आचार्य ! राजा युधिष्ठिर की मृत्यु होने से मैं विजय नहीं प्राप्त कर सकूँगा; क्योंकि युधिष्ठिर को मार डालने पर पाण्डव (अर्जुन) क्रुद्ध होकर हम सबको मार डालेंगे। फिर सब पाण्डवों का विनाश तो देवता भी मिलकर नहीं कर सकते। अतएव युधिष्ठिर के मारे जाने पर चारों पाण्डव निःसन्देह हमारे कुल को निर्मूल कर डालेंगे॥१३।१६॥किन्तु इस समय यदि आप सत्यपरायण राजा युधिष्ठिर को जीते ही

द्रोण उवाच— न चेद्युधिष्ठिरं वीरः पालयत्यर्जुनो युधि ।
मन्यस्व पाण्डवश्रेष्ठमानीतं वशमात्मनः ॥ २० ॥
न हि शक्यो रणे पार्थः सेन्द्रैर्देवासुरैरपि ।
प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहम् ॥ २१ ॥
असंशयं स मे शिष्यो मत्पूर्वश्चाऽस्त्रकर्मणि ।
तरुणः सुकृतैर्युक्त एकायनगतश्च ह ॥ २२ ॥
अस्त्राणीन्द्राच्च रुद्राच्च भूयः स समवाप्तवान् ।
अमर्षितश्च ते राजंस्ततो नाऽमर्षयाम्यहम् ॥ २३ ॥
स चाऽपक्रम्यतां युद्धाद्येनोपायेन शक्यते ।
अपनीते ततः पार्थे धर्मराजो जितस्त्वया ॥ २४ ॥
ग्रहणे हि जयस्तस्य न वधे पुरुषर्षभ ।
एतेन चाऽप्युपायेन ग्रहणं समुपैष्यसि ॥ २५ ॥
अहं गृहीत्वा राजानं सत्यधर्मपरायणम् ।
आनयिष्यामि ते राजन्वशमद्य न संशयः ॥ २६ ॥
यदि स्थास्यति संग्रामे मुहूर्तमपि मेऽग्रतः ।
अपनीते नरव्याघ्रे कुन्तीपुत्रे धनञ्जये ॥ २७ ॥
फाल्गुनस्य समीपे तु नहि शक्यो युधिष्ठिरः ।
ग्रहीतुं समरे राजन्सेन्द्रैरपि सुरासुरैः ॥ २८ ॥
सञ्जय उवाच—सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः ॥ २९ ॥

मेरे पास पकड़ लावेंगे तो मैं फिर उनसे जुआ खेल करके उन्हें हरा दूँगा, और तब वे और उनके अधीन पाण्डव वनवासी होने के लिए विवश होंगे। इस प्रकार मैं बहुत समय तक विजयी होकर राज्य कर सकूँगा। यही कारण है कि मैं राजा युधिष्ठिर को मारना नहीं चाहता॥१७।१८॥अर्थतत्त्व के ज्ञाता,बुद्धिमान् द्रोणाचार्य ने दुर्योधन के इस कुविचार का वर्णन सुनकर उनके माँगे वर में एक दाव लगा दिया। आचार्य ने कहा—हे दुर्योधन! यदि संग्राम में महावीर अर्जुन युधिष्ठिर की रक्षा नहीं कर सकेंगे तो तुम युधिष्ठिर को अपने वश में समझ लो। किन्तु अर्जुन के रहते यह बात नहीं हो सकती। इन्द्र सहित देवता और दानव मिलकर भी युद्धभूमि में पराक्रमी अर्जुन को परास्त नहीं कर सकते। इसी कारण मैं अर्जुन के सम्मुख युधिष्ठिर को पकड़ लेने का साहस नहीं करता ॥१९।२१॥अर्जुन मेरे प्रिय शिष्य हैं। उनकी अस्त्र-शिक्षा के लिए ही मैं आचार्य-पद पर रक्खा गया था। युवा और पुण्यात्मा अर्जुन ने मेरे अतिरिक्त इन्द्र और महादेव से भी बहुत से दिव्य अस्त्र प्राप्त किये हैं। अर्जुन तुम्हारे अनुचित व्यवहार से अत्यन्त क्रुद्ध हैं। इसी कारण मैं उनके आगे युधिष्ठिर को जीते ही पकड़ लेने का साहस नहीं करता। अतएव यदि किसी उपाय से अर्जुन को युद्धभूमि से हटा सको तो मैं अनायास युधिष्ठिर को जीते ही पकड़ लाकर

पाण्डवेयेषु साक्षेपं द्रोणं जानाति ते सुतः ।
ततः प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः ॥ ३० ॥
ततो दुर्योधनेनापि ग्रहणं पाण्डवस्य तत् ।
सैन्यस्थानेषु सर्वेषु सुघोषितमरिन्दम ॥ ३१ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्रोणप्रतिज्ञाया द्वादशोऽध्याय ॥ १२ ॥

तुम्हारा इच्छा पूर्ण कर सकता हूँ॥२२।२४॥हे पुरुषश्रेष्ठ ! युधिष्ठिर को जान से न मारकर जीते पकड़ लेने से ही तुम्हें विजय प्राप्त होगी, और वे भी इस उपाय से काबू में आ जायँगे । नरोत्तम अर्जुन को हटा देने पर युधिष्ठिर यदि मेरे सन्मुख, सम्मुख युद्ध में थोड़ा देर भी ठहर जायँगे तो मैं आज ही उन्हें पकड़कर तुम्हारे अधीन कर दूँगा । हे राजेन्द्र ! अर्जुन के सन्मुख समर में इन्द्रादि देवगण और दानवगण कोई भी युधिष्ठिर को पकड़ नहीं सकेगा॥२५।२८॥सञ्जय कहते हैं— आचार्य द्रोण ने जब राजा युधिष्ठिर को पकड़ने के बारे में इस प्रकार निर्दिष्ट रूप से प्रतिज्ञा की तब आपके मूर्ख पुत्रों ने समझ लिया कि अब युधिष्ठिर पकड़ लिये गये । किन्तु दुर्योधन को भली भाँति प्रतीत था कि द्रोणाचार्य भीतर ही भीतर पाण्डवों के [विशेषकर अर्जुन के] पक्षपाती और हितैषी हैं । इसी कारण द्रोणाचार्य की प्रतिज्ञा को शिथिल न होने देने के लिए, अनेक प्रकार की सम्मति करके, दुर्योधन ने अपने पक्ष की सारी सेना में यह घोषणा करा दी कि आज आचार्य ने युधिष्ठिर को जीते ही पकड़ लेने की प्रतिज्ञा की है॥२९।३१॥

द्रोणपर्व का बारहवाँ अध्याय समाप्त हुआ ॥ १२ ॥

---

अथ त्रयोदशोऽध्याय ॥ १३ ॥

सञ्जय उवाच- सान्तरे तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहम् ॥ १ ॥
सिंहनादरवांश्चक्रुर्बाहुशब्दांश्च कृत्स्नशः ।
तच्च सर्वं यथान्याय धर्मराजेन भारत ॥ २ ॥
आप्तैराशु परिज्ञातं भारद्वाजचिकीर्षितम् ।
ततः सर्वान्समानाय्य भ्रातॄनन्यांश्च सर्वशः ॥ ३ ॥
अब्रवीद्धर्मराजस्तु धनञ्जयमिदं वचः ।
श्रुतं ते पुरुषव्याघ्र द्रोणस्याऽद्य चिकीर्षितम् ॥ ४ ॥
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम् ।
सान्तरं हि प्रतिज्ञातं द्रोणेनाऽमित्रकर्षिणा ॥ ५ ॥

तेरहवाँ अध्याय ॥ १३ ॥

सञ्जय कहते हैं—हे महाराज ! द्रोणाचार्य ने जब युधिष्ठिर को पकड़ने की प्रतिज्ञा की तब आपके पक्ष की सेना के लोग यह वृत्तान्त सुनकर बाणध्वनि, शङ्खनाद और सिंहनाद करके प्रसन्नता प्रकट करने लगे । उधर राजा युधिष्ठिर स्वजनों के मध्य बैठे थे । उनके दूतों ने तुरन्त जाकर उन्हें द्रोणाचार्य की प्रतिज्ञा का सब समाचार कह सुनाया॥१।३॥युधिष्ठिर ने अन्यान्य प्रधान लोगों को और भाइयों को तत्काल बुलाकर

तत्राऽन्तरं महेष्वास त्वयि तेन समाहितम् ।
स त्वमद्य महाबाहो युध्यस्व मदनन्तरम् ॥ ६ ॥
यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात् ।

अर्जुन उवाच—यथा मे न वधः कार्य आचार्यस्य कदाचन ॥ ७ ॥
तथा तव परित्यागो न मे राजंश्चिकीर्षितः ।
अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि ॥ ८ ॥
प्रतीपो नाऽहमाचार्ये भवेयं वै कथञ्चन ।
त्वां निगृह्याऽऽहवे राज्यं धार्त्तराष्ट्रोऽयमिच्छति ॥ ९ ॥
न स तं जीवलोकेऽस्मिन्कामं प्राप्येत्कथञ्चन ।
प्रपतेद् द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ॥ १० ॥
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् ।
यदि तस्य रणे साह्यं कुरुते वज्रभृत्स्वयम् ॥ ११ ॥
विष्णुर्वा सहितो देवैर्न त्वां प्राप्स्यत्यसौ मृधे ।
मयि जीवति राजेन्द्र न भयं कर्तुमर्हसि ॥ १२ ॥
द्रोणादस्त्रभृतां श्रेष्ठात्सर्वशस्त्रभृतामपि ।
अन्यच्च ब्रूयां राजेन्द्र प्रतिज्ञां मम निश्चलाम् ॥ १३ ॥
न स्मराम्यनृतं तावन्न स्मरामि पराजयम् ।
न स्मरामि प्रतिश्रुत्य किञ्चिदप्यनृतं कृतम् ॥ १४ ॥

सञ्जय उवाच—ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चाऽऽनकैः सह ।
प्रावाद्यन्त महाराज पाण्डवानां निवेशने ॥ १५ ॥

---

अर्जुन से कहा—हे पुरुषश्रेष्ठ ! तुमने द्रोणाचार्य की प्रतिज्ञा का वृत्तान्त सुन लिया न ? अतएव अब ऐसा उपाय करो जिसमें उनकी यह प्रतिज्ञा पूर्ण न हो। हे वीर ! शत्रुनाशन द्रोण ने जो अटल प्रतिज्ञा की है उसकी सीमा तुम्हीं हो, अर्थात् तुम मेरी रक्षा करते रहोगे तो वे मुझे पकड़ने का साहस नहीं कर सकते। इसलिए तुम मेरे पास रहकर द्रोणाचार्य से संग्राम करो, जिसमें दुर्योधन द्रोणाचार्य की सहायता से अपने सङ्कल्प को सिद्ध न कर सके॥३।७॥अर्जुन ने कहा—हे महाराज ! जैसे आचार्य का वध करना किसी प्रकार मेरा कर्तव्य नहीं है वैसे ही युद्धभूमि में अकेले अरक्षित भाव से आपको छोड़ जाना भी मेरा कर्तव्य नहीं है। युद्धभूमि में चाहे मुझे प्राण दे देने पड़े, तथापि आचार्य के विपक्ष में मैं किसी प्रकार युद्ध न करूँगा। किन्तु दुर्योधन जो आपको जीवित पकड़कर विजय की इच्छा कर रहा है, वह मेरे जीते जी पूर्ण नहीं हो सकती॥७।१०॥नक्षत्रों समेत आकाश भले ही गिर पड़े, पृथ्वी के टुकड़े-टुकड़े भले ही हो जायँ, किन्तु मेरे जीते जी आचार्य आपको नहीं पकड़ सकते। यदि वज्रपाणि इन्द्र अथवा विष्णु भगवान् सब देवताओं के साथ मिलकर स्वयं समर में दुर्योधन की सहायता करें तो भी वह आपको किसी प्रकार नहीं पकड़ सकता। हे राजेन्द्र ! यद्यपि द्रोणाचार्य सब अस्त्रों के और अस्त्रविद्या के जाननेवालों

सिंहनादश्च सञ्जज्ञे पाण्डवानां महात्मनाम् ।
धनुर्ज्यातलशब्दश्च गगनस्पृक्सुभैरवः ॥ १६ ॥
श्रुत्वा शङ्खस्य निर्घोषं पाण्डवस्य महौजसः ।
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे ॥ १७ ॥
ततो व्यूढान्यनीकानि तत्र तेषां च भारत ।
शनैरुपेयुरन्योन्यं योध्यमानानि संयुगे ॥ १८ ॥
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि ॥ १९ ॥
यतमानाः प्रयत्नेन द्रोणानीकविशातने ।
न शेकुः सृञ्जया युद्धे तद्धि द्रोणेन पालितम् ॥ २० ॥
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटिना ॥ २१ ॥
आस्तां ते स्तिमिते सेने रक्षमाणे परस्परम् ।
सम्प्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते ॥ २२ ॥
ततो रुक्मरथो राजन्नर्केणेव विराजता ।
वरूथिना विनिष्पत्य व्यचरत्पृतनामुखे ॥ २३ ॥
तमुद्यतं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव सन्त्रासान्मेनिरे पाण्डुसृञ्जयाः ॥ २४ ॥
तेन मुक्ताः शरा घोरा विचेरुः सर्वतोदिशम् ।
त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीम् ॥ २५ ॥

---

मैं प्रधान हूँ तथापि मेरे रहते आप के लिए भय नहीं है। हे राजेन्द्र ! मेरी प्रतिज्ञा कभी विफल नहीं हुई और न आगे व्यर्थ हो सकती है। जहाँ तक स्मरण है, मैं कभी असत्य नहीं बोला, किसी से नहीं अपराजित हुआ, और न कभी किसी से कुछ प्रतिज्ञा करके उसे मैंने किञ्चित्मात्र मिथ्या किया है॥१०।१४॥ महावीर अर्जुन के यों कहने पर पाण्डवों के शिविर में शङ्ख, भेरी, मृदङ्ग, डङ्के, तुरही आदि बाजे बजने लगे, वीरगण सिंहनाद और प्रत्यञ्चा के शब्द करने लगे, योद्धा लोग खम ठोकने लगे। ये अनेक प्रकार के निर्घोष आकाशमण्डल में गूँज उठे और उनकी प्रतिध्वनि दूर-दूर तक छा गई। उस समय शत्रु-पक्ष के शङ्खनाद आदि को सुनकर आपकी सेना में भी बाजे बजने लगे। अब आपके और पाण्डव पक्ष के युद्ध चाहनेवाले वीर सैनिक मोर्चेबन्दी करके संग्राम की इच्छा से आगे बढ़े और एक दूसरे के समीप पहुँच गये। उस समय कौरवों के साथ पाण्डवों का, और द्रोणाचार्य के साथ पाञ्चालों का लोमहर्षण संग्राम होने लगा ॥१५।१९॥ तब द्रोणाचार्य के द्वारा सुरक्षित कौरवों की सेना को नष्ट करने के लिए सृञ्जयगण अधिक यत्नपूर्वक युद्ध करने लगे, परन्तु किसी प्रकार कृतकार्य न हो सके। दुर्योधन के पक्ष के महारथी लोग भी अर्जुन के द्वारा सुरक्षित सेना को नष्ट करने के लिए जी जान से यत्न करके भी उसमें सफलता न प्राप्त

मध्यन्दिनमनुप्राप्तो गभस्तिशतसंवृतः ।
यथा दृश्येत घर्मांशुस्तथा द्रोणोऽप्यदृश्यत ॥ २६ ॥
न चैनं पाण्डवेयानां कश्चिच्छक्नोति भारत ।
वीक्षितुं समरे क्रुद्धं महेन्द्रमिव दानवाः ॥ २७ ॥
मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः ॥ २८ ॥
स दिशः सर्वतो रुद्ध्वा संवृत्य खमजिह्मगैः ।
पार्षतो यत्र तत्रैव ममृदे पाण्डुवाहिनीम् ॥ २९ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि अर्जुनकृतयुधिष्ठिराश्वासने त्रयोदशोऽध्याय ॥ १३ ॥

कर सके। दोनों ओर के सैनिक, रात्रिकाल के विविध पुष्पों से शोभित वृक्षों की श्रेणी के समान, निस्तब्ध देख पड़ने लगे॥२०।२२॥इधर शत्रुनाशन द्रोणाचार्य सुवर्णमण्डित रथ पर बैठकर पाण्डवों की सेना को नष्ट भ्रष्ट करते हुए उसके भीतर प्रवेश हो गये और प्रज्वलित प्रतापी सूर्य के समान बाण बरसाते हुए चारों ओर विचरने लगे। पाण्डव और सृञ्जयगण रथ पर बैठे हुए, फुर्तीले, अकेले, द्रोणाचार्य को अनेक-रूप और विभीषिकामय देखने लगे। द्रोणाचार्य के चलाये हुए बाण सब सैनिकों को भयविह्वल करते हुए चारों ओर गिरने लगे। महारथी द्रोण उस समय आकाशमण्डल में विचरते हुए, असंख्य किरण वेष्टित, मध्याह्न काल के सूर्य के समान देख पड़ने लगे॥२३।२६॥जैसे दानवगण समर में क्रुद्ध इन्द्र की ओर नेत्र उठाकर नहीं देख सकते वैसे ही उस समय पाण्डवों की सेना का कोई सुभट द्रोणाचार्य की ओर नेत्र उठाकर नहीं देख सकता था। अब प्रबल प्रतापी द्रोणाचर्य शत्रुसेना को मोहित करते हुए स्फूर्त्ति के साथ बाण चलाकर धृष्टद्युम्न की सेना को पीड़ा पहुँचाने लगे। जहाँ पर धृष्टद्युम्न थे वहाँ पर द्रोणचार्य ने इतने बाण बरसाये कि सब दिशाएँ और आकाश मण्डल बाणा से व्याप्त हो गया। द्रोणाचार्य उसी स्थान पाण्डवों की सेना का संहार करने लगे॥२७।२९॥

—०—

द्रोणपर्व का तेरहवाँ अध्याय समाप्त हुआ ॥ १३ ॥

अथ चतुर्दशोऽध्याय ॥ १४ ॥

सञ्जय उवाच—ततः स पाण्डवानीके जनयन्सुमहद्भयम् ।
व्यचरत्पृतनां द्रोणो दहन्कक्षमिवाऽनलः ॥ १ ॥
निर्दहन्तमनीकानि साक्षादग्निमिवोत्थितम् ।
दृष्ट्वा रुक्मरथं क्रुद्धं समकम्पन्त सृञ्जयाः ॥ २ ॥
सततं कृष्यतः संख्ये धनुषोऽस्याऽऽशुकारिणः ।
ज्याघोषः शुश्रुवेऽत्यर्थं विस्फूर्जितमिवाऽशनेः ॥ ३ ॥

चौदहवाँ अध्याय ॥ १४ ॥

सञ्जय कहते हैं—हे महाराज! तब द्रोणाचार्य पाण्डवों की सेना को, घास फूँस अग्नि की तरह, बाणों से भस्म करते हुए विचरने लगे। द्रोणाचार्य को क्रोध के मारे प्रदीप्त अग्नि के समान सब सेना को भस्म करते देखकर सृञ्जयगण भयविह्वल होकर काँपने लगे। द्रोणाचार्य के कानों तक खिंची हुई धनुष की डोरी

रथिनः सादिनश्चैव नागानश्वान्पदातिनः ।
रौद्रा हस्तवता मुक्ताः संमृद्नन्ति स्म सायकाः ॥ ४ ॥
नानद्यमानः पर्जन्यः प्रवृद्धः शुचिसंक्षये ।
अश्मवर्षमिवाऽवर्षत्परेषामावहद्भयम् ॥ ५ ॥
विचरन्स तदा राजन्सेनां संक्षोभयन्प्रभुः ।
वर्धयामास सन्त्रासं शात्रवाणाममानुषम् ॥ ६ ॥
तस्य विद्युदिवाऽभ्रेषु चापं हेमपरिष्कृतम् ।
भ्रमद्रथाम्बुदे चाऽस्मिन्दृश्यते स्म पुनः पुनः ॥ ७ ॥
स वीरः सत्यवान्प्राज्ञो धर्मनित्यः सदा पुनः ।
युगान्तकालवद्घोरां रौद्रां प्रावर्त्तयन्नदीम् ॥ ८ ॥
अमर्षवेगप्रभवां क्रव्यादगणसंकुलाम् ।
बलौघैः सर्वतः पूर्णां ध्वजवृक्षापहारिणीम् ॥ ९ ॥
शोणितोदां रथावर्त्तां हस्त्यश्वकृतरोधसम् ।
कवचोडुपसंयुक्तां मांसपङ्कसमाकुलाम् ॥ १० ॥
मेदोमज्जास्थिसिकतामुष्णीपचयफेनिलाम् ।
संग्रामजलदापूर्णां प्रासमत्स्यसमाकुलाम् ॥ ११ ॥
नरनागाश्वकलिलां शरवेगौघवाहिनीम् ।
शरीरदारुसङ्घट्टां रथकच्छपसंकुलाम् ॥ १२ ॥
उत्तमाङ्गैः पङ्कजिनीं निस्त्रिंशझपसंकुलाम् ।
रथनागह्रदोपेतां नानाभरणभूषिताम् ॥ १३ ॥

का शब्द वज्र निर्घोष के समान सुनाई पड़ने लगा ॥१।३॥स्फूर्त्ति के साथ हाथ चलानेवाले द्रोणाचार्य के बाण रथ, रथी, घुड़सवार, हाथी, घोड़े, पैदल आदि को काट काटकर गिराने लगे। जैसे गरजते हुए मेघ वायु की सहायता पाकर वर्षाकाल में शिलाओं की वर्षा करते हैं, वैसे ही द्रोणाचार्य भी सिंहनाद-पूर्वक बाण बरसाते हुए शत्रुपक्ष के लिए भयानक हो उठे। वे शत्रुसेना में विचरते हुए उसे क्षुब्ध करके शत्रुओं के हृदय में दारुण भय उत्पन्न करने लगे ॥४।६॥उनके घूमते हुए रथ पर सुवर्णमण्डित धनुष बार-बार मेघों के मध्य बिजली की तरह चमक रहा था। सत्यपरायण, प्राज्ञ, नित्य धर्म के अनुरागी द्रोणाचार्य ने क्रुद्ध होकर ऐसा घोर युद्ध किया कि रक्त की भयानक नदी बह चली॥७।८॥उस नदी में अनेक मांसाहारी जीव भरे पड़े थे। सेनाएँ ही उसका स्रोत थीं। ध्वजाओं को ही किनारे पर के वृक्षों के समान वह गिरा रही थी। जल के स्थान पर उसमें रक्त था। हाथियों और घोड़ों की लाशों के ढेर तटभूमि की तरह देख पड़ते थे। टूटे हुए कवच घन्नई की तरह जान पड़ते थे। मांस की कीचड़ थी और मेदा-मज्जा हड्डी आदि ही बालू के समान थे। पगड़ियाँ फेन की तरह बह रही थीं। युद्ध के घिरे हुए मेघ से वह उत्पन्न हुई थी। उसमें प्राम और खड्ग रूपी मत्स्य थे॥९।११॥मनुष्य-हाथी-घोड़े आदि से वह

महारथशतावर्त्तां भूमिरेणूर्मिमालिनीम् ।
महावीर्यवतां संख्ये सुतरां भीरुदुस्तराम् ॥ १४ ॥
शरीरशतसम्बाधां गृध्रकङ्कनिषेविताम् ।
महारथसहस्राणि नयन्तीं यमसादनम् ॥ १५ ॥
शूलव्यालसमाकीर्णां प्राणिवाजिनिषेविताम् ।
छिन्नक्षत्रमहाहंसां मुकुटाण्डजसेविताम् ॥ १६ ॥
चक्रकूर्मां गदानक्रां शरक्षुद्रझषाकुलाम् ।
वकगृध्रसृगालानां घोरसङ्घैर्निषेविताम् ॥ १७ ॥
निहतान्प्राणिनः संख्ये द्रोणेन बलिना रणे ।
वहन्तीं पितृलोकाय शतशो राजसत्तम ॥ १८ ॥
शरीरशतसम्बाधां केशशैवलशाद्वलाम् ।
नदीं प्रावर्त्तयद्राजन्भीरूणां भयवर्धिनीम् ॥ १९ ॥
तर्जयन्तमनीकानि तानि तानि महारथम् ।
सर्वतोऽभ्यद्रवन्द्रोणं युधिष्ठिरपुरोगमाः ॥ २० ॥
तानभिद्रवतः शूरांस्तावका दृढविक्रमाः ।
सर्वतः प्रत्यगृह्णन्त तदभूल्लोमहर्षणम् ॥ २१ ॥
शतमायस्तु शकुनिः सहदेवं समाद्रवत् ।
सनियन्तृध्वजरथं विव्याध निशितैः शरैः ॥ २२ ॥
तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि ।
नाऽतिक्रुद्धः शरैश्छित्वा षष्ट्या विव्याध सौबलम्॥ २३ ॥

दुर्गम थी । बाणों का वेग ही उसका प्रवाह था । लोगों की लाशें लकड़ियों के समान उसमें बह रही थीं। रथ कच्छप की तरह देख पड़ते थे । कटे हुए मस्तक कमल की तरह जान पड़ते थे । रथ-हाथी आदि उसके भीतर कुण्ड से जान पड़ते थे । उसमें पड़े अनेक आभूषण चमक रहे थे । बड़े-बड़े रथ सैंकड़ो भवर से देख पड़ते थे । पृथ्वी से उठती हुई धूल ही उसमें उठनेवाली लहरों के समान जान पड़ती थी। महापराक्रमी वीर योद्धा तो सहज में उस नदी के पार जा सकते थे, किन्तु कायरों के लिए वह अत्यन्त दुस्तर थी ॥१२।१४॥ सहस्रों लाशें उसमें भरी पड़ी थीं । कङ्क गिद्ध आदि जीव उसके चारों ओर मँडला रहे थे। वह नदी सहस्रों महारथी वीरों को यमलोक को लिये जा रही थी । बड़े बड़े त्रिशूल उसमें नाग से जान पड़ते थे । अनेक जीव पक्षियों के समान प्रतीत होते थे । कटे हुए छत्र हंसों के समान उसमें देख पड़ते थे; कटे हुए मुकुट पक्षियों के सदृश जान पड़ते थे॥१३।१६॥चक्र कच्छप से, गदाएँ मगर सी और बाण छोटी-छोटी मछलियों से उसमें बह रहे थे । भयानक बगलों, गिद्धों और गीदड़ों के झुण्ड उसके आस-पास घूम रहे थे। महाबली द्रोणाचार्य के द्वारा युद्ध में मारे गये सहस्रों वीरों को वह रक्त की नदी यमलोक पहुँचा रही थी । केश सेवार और घास के समान दिखाई पड़ रहे थे । द्रोणाचार्य ने

सौबलस्तु गदां गृह्य प्रचस्कन्द रथोत्तमात् ।
स तस्य गदया राजन्रथात्सूतमपातयत् ॥ २४ ॥
ततस्तौ विरथौ राजन्गदाहस्तौ महाबलौ ।
चिक्रीडतू रणे शूरौ सशृङ्गाविव पर्वतौ ॥ २५ ॥
द्रोणः पाञ्चालराजानं विध्वा दशभिराशुगैः ।
बहुभिस्तेन चाऽभ्यस्तस्तं विव्याध ततोऽधिकैः ॥ २६ ॥
विविंशतिं भीमसेनो विंशत्या निशितैः शरैः ।
विध्वा नाऽकम्पयद्वीरस्तदद्भुतमिवाऽभवत् ॥ २७ ॥
विविंशतस्तु सहसा व्यश्वकेतुशरासनम् ।
भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् ॥ २८ ॥
स तन्न ममृषे वीरः शत्रोर्विक्रममाहवे ।
ततोऽस्य गदया दान्तान्हयान्सर्वानपातयत् ॥ २९ ॥
हताश्वात्स रथाद्राजन्गृह्य चर्म महाबलः ।
अभ्यायाद्भीमसेनं तु मत्तो मत्तमिव द्विपम् ॥ ३० ॥
शल्यस्तु नकुलं वीरः स्वस्रीयं प्रियमात्मनः ।
विव्याध प्रहसन्बाणैर्लालयन्कोपयन्निव ॥ ३१ ॥
तस्याऽश्वानातपत्रं च ध्वजं सूतमथो धनुः ।
निपात्य नकुलः संख्ये शङ्खं दध्मौ प्रतापवान् ॥ ३२ ॥

कायरों के हृदय में भय उत्पन्न करनेवाली ऐसी महा-भयानक रक्त की नदी युद्धभूमि में बहा दी॥१७। १९॥द्रोणाचार्य को इस प्रकार गरज गरजकर अपनी सेना को भयविह्वल करते देख युधिष्ठिर आदि पाण्डव-पक्ष के योद्धा चारों ओर से द्रोणाचार्य पर आक्रमण करने और उन्हें रोकने चले। महापराक्रमी कौरवों ने जब उन शूरों को इस प्रकार आते देखा तब वे भी उन्हें रोकने के लिए चारों ओर से चले। उस समय उनका लोमहर्षण युद्ध होने लगा॥२०।२१॥ बहुत बड़े मायावी शकुनि समरभूमि में सहदेव के सन्मुख आकर अनेक प्रकार के तीक्ष्ण बाणों के द्वारा उनको पीड़ित करने लगे। उन्होंने सहदेव के रथ की ध्वजा काट डाली और सारथी को भी घायल कर दिया। सहदेव ने भी क्रोध के वश होकर बाणों से शकुनि के धनुष, पताका, सारथी और घोड़ों को छिन्न भिन्न करके शकुनि को साठ पैने बाण मारे। अब शकुनि रथ पर से उतर पड़े और बड़े वेग से गदा लेकर दौड़े। उन्होंने गदा के प्रहार से सहदेव के सारथी को मार गिराया। तब दोनों ही वीर रथ-हीन होकर गदा हाथ में लेकर शिखर-शोभित पर्वतों की तरह युद्धभूमि में गदायुद्ध के पैंतरे दिखाते हुए क्रीडा सी करने लगे॥२२।२५॥द्रोणाचार्य ने राजा द्रुपद को दस बाण मारे तब वे भी असंख्य बाणों से आचार्य को जर्जर करने लगे। आचार्य ने फिर उनसे भी अधिक पराक्रम के साथ असंख्य बाणों से राजा द्रुपद को घायल कर डाला। भीमसेन ने विविंशति को अत्यन्त तीक्ष्ण बीस बाण मारे, परन्तु वे उस प्रहार से तनिक भी विचलित नहीं हुए। यह एक अद्भुत घटना हुई। विविंशति ने सहसा भीमसेन के घोड़े मार डाले और ध्वजा तथा धनुष की डोरी काट दी।

धृष्टकेतुः कृपेणाऽस्तांश्छित्वा बहुविधाञ्छरान् ।
कृपं विव्याध सप्तत्या लक्ष्म चाऽस्याऽऽहरत्त्रिभिः ॥३३॥
तं कृपः शरवर्षेण महता समवारयत् ।
विव्याध च रणे विप्रो धृष्टकेतुममर्षणम् ॥ ३४ ॥
सात्यकिः कृतवर्माणं नाराचेन स्तनान्तरे ।
विध्वा विव्याध सप्तत्या पुनरन्यैः स्मयन्निव ॥ ३५ ॥
तं भोजः सप्तसप्तत्या विध्वाऽऽशु निशितैः शरैः ।
नाऽकम्पयत शैनेयं शीघ्रो वायुरिवाऽचलम् ॥ ३६ ॥
सेनापतिः सुशर्माणं भृशं मर्मस्वताडयत् ।
स चापि तं तोमरेण जत्रुदेशेऽभ्यताडयत् ॥ ३७ ॥
वैकर्तनं तु समरे विराटः प्रत्यवारयत् ।
सह मत्स्यैर्महावीर्यैस्तदद्भुतमिवाऽभवत् ॥ ३८ ॥
तत्पौरुषमभूत्तत्र सूतपुत्रस्य दारुणम् ।
यत्सैन्यं वारयामास शरैः सन्नतपर्वभिः ॥ ३९ ॥
द्रुपदस्तु स्वयं राजा भगदत्तेन सङ्गतः ।
तयोर्युद्धं महाराज चित्ररूपमिवाऽभवत् ॥ ४० ॥
भगदत्तस्तु राजानं द्रुपदं नतपर्वभिः ।
सनियन्तृध्वजरथं विव्याध पुरुषर्षभः ॥ ४१ ॥

इस पर विविंशति की सेना ने उनकी प्रशंसा की। अपने शत्रु का यह पराक्रम भीमसेन देख नहीं सके। उन्होंने भी शत्रु के घोड़ों को गदा के प्रहार से गर्द-बर्द कर डाला। महाबली विविंशति मत्त गजराज की तरह क्रुद्ध होकर ढाल तलवार हाथ में लेकर रथ से कूद पड़े और भीमसेन पर प्रहार करने के लिए झपटे ॥२६।३०॥ महावीर शल्य अपने भानजे नकुल को कुपित करने के लिए हँसकर लीलापूर्वक धनुष घुमा कर उन पर बाण बरसाने लगे। महापराक्रमी नकुल ने भी उनके सब घोड़े नष्ट कर दिये, सारथी को मार डाला तथा ध्वजा, छत्र और धनुष की डोरी काट कर शङ्ख बजाया। धृष्टकेतु ने भी कृपाचार्य के चलाये बाणों को काटकर उन्हें सत्तर बाण मारे और तीन बाणों से उनकी सुन्दर ध्वजा काटकर गिरा दी। कृपाचार्य भी बहुत से बाणों से धृष्टकेतु के बाणों को व्यर्थ करके घोर युद्ध करने लगे। सात्यकि ने पहले हँसकर कृतवर्मा की छाती में लोहमय नाराच बाण, फिर सत्तर बाण, और उसके पश्चात् अन्य अनेक प्रकार के अगणित बाण मारे। वेग से चलनेवाली आँधी जैसे पर्वत को नहीं कँपा सकती वैसे ही भोजराज कृतवर्मा सात्यकि को, पैने सतत्तर बाण मारकर भी, विचलित नहीं कर सके॥३१।३६॥ सेनापति धृष्टद्युम्न ने सुशर्मा के मर्मस्थलों में तीक्ष्ण बाण मारे। सुशर्मा ने भी तोमर के प्रहार से उनको अत्यन्त पीड़ित किया। महावीर राजा विराट मत्स्यदेश की सेना लेकर वीर कर्ण के सन्मुख आये। उन्होंने अपने अपूर्व पराक्रम और युद्धकौशल से उन्हें आगे नहीं बढ़ने दिया। यह देखकर सबको बड़ा ही आश्चर्य हुआ। सूतपुत्र कर्ण ने भी पौरुष प्रकट करते हुए तीक्ष्ण बाणों से मत्स्यसेना को छिन्न-भिन्न करना आरम्भ किया।

द्रुपदस्तु ततः क्रुद्धो भगदत्तं महारथम् ।
आजघानोरसि क्षिप्रं शरेणाऽऽनतपर्वणा ॥ ४२ ॥
युद्धं योधवरौ लोके सौमदत्तिशिखण्डिनौ ।
भूतानां त्रासजननं चक्रातेऽस्त्रविशारदौ ॥ ४३ ॥
भूरिश्रवा रणे राजन्याज्ञसेनिं महारथम् ।
महता सायकौघेन च्छादयामास वीर्यवान् ॥ ४४ ॥
शिखण्डी तु ततः क्रुद्धः सौमदत्तिं विशाम्पते ।
नवत्या सायकानां तु कम्पयामास भारत ॥ ४५ ॥
राक्षसौ रौद्रकर्माणौ हैडिम्बालम्बुषावुभौ ।
चक्रातेऽत्यद्भुतं युद्धं परस्परजयैषिणौ ॥ ४६ ॥
मायाशतसृजौ दृप्तौ मायाभिरितरेतरम् ।
अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ॥ ४७ ॥
चेकितानोऽनुविन्देन युयुधे चाऽतिभैरवम् ।
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ॥ ४८ ॥
लक्ष्मणः क्षत्रदेवेन विमर्दमकरोद्भृशम् ।
यथा विष्णुः पुरा राजन्हिरण्याक्षेण संयुगे ॥ ४९ ॥
ततः प्रचलिताश्वेन विधिवत्कल्पितेन च ।
रथेनाऽभ्यपतद्राजन्सौभद्रं पौरवो नदन् ॥ ५० ॥
ततोऽभ्ययात्स त्वरितो युद्धाकांक्षी महाबलः ।
तेन चक्रे महद्युद्धमभिमन्युररिन्दमः ॥ ५१ ॥

---

राजा द्रुपद स्वयं भगदत्त के सन्मुख आकर उनके साथ घोर युद्ध करने लगे । भगदत्त ने बाणों से द्रुपद के सारथी, ध्वजा, रथ आदि को नष्ट करके द्रुपद को घायल कर दिया । उन्होंने भी अत्यन्त कुपित होकर तीक्ष्ण बाण से भगदत्त के वक्ष स्थल को छेद दिया॥३७।४२॥अस्त्रविद्याविशारद भूरिश्रवा और शिखण्डी,ये दोनों वीरवर देखनेवालों को भयविह्वल बना देनेवाला दारुण युद्ध करने लगे । वीर्यशाली भूरिश्रवा ने असंख्य बाणों से महारथी शिखण्डी को ढक दिया । शिखण्डी ने भी क्रोध करके नब्बे बाण मारकर भूरिश्रवा के छक्के छुड़ा दिये । गर्वित राक्षस घटोत्कच और अल-म्बुप दोनों ही जय की इच्छा से तरह-तरह की आसुरी माया प्रकट करके अत्यन्त घोर युद्ध करते हुए, कभी कभी अन्तर्द्धान होकर, दर्शकों के हृदय में आश्चर्य उत्पन्न करने लगे । देवासुर-युद्ध में जैसे आश्चर्य में डालनेवाले कार्य हुए थे वैसे ही कार्य दिखाते हुए चेकितान और अनुविन्द भयानक युद्ध करने लगे । पहले किसी समय वराहरूप विष्णु के साथ हिरण्याक्ष दानव का जैसा युद्ध हुआ था वैसा ही युद्ध लक्ष्मण और क्षत्रदेव करने लगे॥४३।४९॥अब महाबली हार्दि-क्य बहुत शीघ्र अश्वयुक्त और शीघ्रता के साथ चल रहे रथ पर बैठकर युद्ध की आकांक्षा से अभिमन्यु के निकट पहुँचकर सिंहनाद करने लगे । अभिमन्यु उनके साथ भयानक युद्ध करने लगे । हार्दिक्य ने कई बाणों से

पौरवस्त्वथ सौभद्रं शरव्रातैरवाकिरत् ।
तस्याऽऽर्जुनिर्ध्वजं छत्रं धनुश्चोर्व्यामपातयत् ॥ ५२ ॥
सौभद्रः पौरवं त्वन्यैर्विध्वा सप्तभिराशुगैः ।
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः ॥ ५३ ॥
ततः प्रहर्षयन्सेनां सिंहवद्विनदन्मुहुः ।
समादत्ताऽऽर्जुनिस्तूर्णं पौरवान्तकरं शरम् ॥ ५४ ॥
तं तु सन्धितमाज्ञाय सायकं घोरदर्शनम् ।
द्वाभ्यां शराभ्यां हार्दिक्यश्चिच्छेद सशरं धनुः ॥ ५५ ॥
तदुत्सृज्य धनुश्छिन्नं सौभद्रः परवीरहा ।
उद्ववर्ह सितं खड्गमाददानः शरावरम् ॥ ५६ ॥
स तेनाऽनेकतारेण चर्मणा कृतहस्तवत् ।
भ्रान्तासिना चरन्मार्गान्दर्शयन्वीर्यमात्मनः ॥ ५७ ॥
भ्रामितं पुनरुद्भ्रान्तमाधूतं पुनरुत्थितम् ।
चर्म निस्त्रिंशयो राजन्निर्विशेषमदृश्यत ॥ ५८ ॥
स पौरवरथस्येषामाप्लुत्य सहसा नदन् ।
पौरवं रथमास्थाय केशपक्षे परामृशत् ॥ ५९ ॥
जघानाऽस्य पदा सूतमसिना पातयद् ध्वजम् ।
विक्षोभ्याऽम्भोनिधिं तार्क्ष्यस्तं नागमिव चाऽक्षिपत् ॥ ६० ॥
तमागलितकेशान्तं ददृशुः सर्वपार्थिवाः ।
उक्षाणमिव सिंहेन पात्यमानमचेतसम् ॥ ६१ ॥

अभिमन्यु को घायल किया। अभिमन्यु ने भी तत्काल क्षत्र, ध्वजा और धनुष काट डाला। अभिमन्यु ने और सात बाण हार्दिक्य को मारे तथा पाँच बाणों से उनके घोड़ों को और सारथी को पीडित करके वे सिंह की तरह बार-बार गरजकर सैनिकों के हृदय में हर्ष बढ़ाने लगे॥५०।५३॥ अब अभिमन्यु ने शत्रु के प्राणों को हरनेवाला एक बाण धनुष पर चढ़ाना चाहा। किन्तु हार्दिक्य ने उस भयानक बाण को देखकर दो बाणों से मय धनुष के उसको काट डाला। शत्रुदमन अभिमन्यु ने कटे हुए धनुष को फेंककर युद्ध के लिए ढाल तलवार हाथ में ली। उस खड्ग को घुमाते और अनेक ताराचिह्नों से शोभित ढाल चमकाते हुए वीर अभिमन्यु अद्भुत् पराक्रम प्रकट करते हुए रणभूमि में विचरने लगे॥५४।५७॥ कभी ढाल-तलवार को घुमाते, कभी ऊपर फेरते और कभी हिलाते तथा तानते हुए अभिमन्यु ने ऐसी स्फूर्ति दिखाई कि किसी को ढाल और तलवार में कुछ भी अन्तर नहीं देख पड़ता था। अभिमन्यु सिंहनाद के साथ उछलकर हार्दिक्य के रथ पर चढ़ गये। पहले हार्दिक्य के बाल पकड़कर उन्हें आसन के नीचे खींच लिया, फिर पाँव मारकर सारथी के प्राण ले लिये और तलवार से ध्वजा काट गिराई। गरुड़ जैसे समुद्र को मथकर सर्प को पकड़कर झटकते हैं वैसे ही अभिमन्यु ने हार्दिक्य को पकड़कर झटक डाला। उस समय जिनके बाल

तमार्जुनिवशं प्राप्तं कृष्यमाणमनाथवत् ।
पौरवं पातितं दृष्ट्वा नाऽमृष्यत जयद्रथः ॥ ६२ ॥
स बर्हिबर्हावततं किङ्किणीशतजालवत् ।
चर्म चाऽऽदाय खड्गं च नदन्पर्यपतद्रथात् ॥ ६३ ॥
ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य पौरवम् ।
उत्पपात रथात्तूर्णं श्येनवन्निपपात च ॥ ६४ ॥
प्रासपट्टिशनिस्त्रिंशाञ्छत्रुभिः सम्प्रचोदितान् ।
चिच्छेद चाऽसिना कार्ष्णिश्चर्मणा संरुरोध च ॥ ६५ ॥
स दर्शयित्वा सैन्यानां स्वबाहुबलमात्मनः ।
तमुद्यम्य महाखड्गं चर्म चाऽथ पुनर्बली ॥ ६६ ॥
वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणम् ।
ससाराऽभिमुखः शूरः शार्दूल इव कुञ्जरम् ॥ ६७ ॥
तौ परस्परमासाद्य खड्गदन्तनखायुधौ ।
हृष्टवत्सम्प्रजह्राते व्याघ्रकेसरिणाविव ॥ ६८ ॥
सम्पातेष्वभिघातेषु निपातेष्वसिचर्मणोः ।
न तयोरन्तरं कश्चिद्ददर्श नरसिंहयोः ॥ ६९ ॥
अवक्षेपोऽसिनिर्ह्लादः शस्त्रान्तरनिदर्शनम् ।
बाह्यान्तरनिपातश्च निर्विशेषमदृश्यत ॥ ७० ॥
बाह्यमाभ्यन्तरं चैव चरन्तौ मार्गमुत्तमम् ।
ददृशाते महात्मानौ सपक्षाविव पर्वतौ ॥ ७१ ॥

बिखरे हुए हैं वे पौरव हार्दिक्य सिंह के पछाड़े हुए अचेत साँड़ के समान जान पड़ने लगे॥५८।६१॥ जयद्रथ ने देखा कि अनाथ की तरह हार्दिक्य मारे जा रहे हैं; अभिमन्यु ने उन्हें पटक दिया है और बाल पकड़कर प्राण लेने को उद्यत हैं। तब वे अत्यन्त क्रुद्ध होकर, सिंहनाद करके, सुवर्णजालयुक्त मयूर-शोभित घुँघरूदार ढाल और तलवार लिये रथ से उतर पड़े। अभिमन्यु ने जयद्रथ को आते देखकर हार्दिक्य को छोड़ दिया, और रथ पर से कूदकर बाज की तरह वे जयद्रथ पर झपटे। अभिमन्यु ने शत्रुपक्ष के चलाये हुए प्रास, पट्टिश, खड्ग आदि शस्त्रों की वर्षा को ढाल पर रोकना और खड्ग से काटना शुरू कर दिया ॥६२।६५॥ पाण्डवसेना को अपना बाहुबल दिखाते हुए वीर अभिमन्यु, बाघ का बच्चा जैसे गजराज पर आक्रमण करता है वैसे ही, ढाल-तलवार घुमाते हुए, अपने पिता के वैरी क्षत्रियश्रेष्ठ जयद्रथ के पास प्रहार करने के लिए पहुँचे। जैसे बाघ और सिंह दोनों परस्पर नखों और दाँतों से प्रहार करते हैं वैसे ही ये दोनों एक दूसरे को पाकर अत्यन्त उत्साह के साथ खड्ग-प्रहार करने लगे। ढाल और तलवार के करतबों में, प्रहार में, बचाने में और पतरे में दोनों वीर समान कौशल और स्फूर्ति दिखा रहे थे। दोनों ही दोनों पर समान रूप से प्रहार करते, पीछे हटने और भीतरी-बाहरी चोट करते थे॥६६।७०॥ दोनों वीर

ततो निक्षिपतः खड्गं सौभद्रस्य यशस्विनः ।
शरावरणपक्षान्ते प्रजहार जयद्रथः ॥ ७२ ॥
रुक्मपत्रान्तरे सक्तस्तस्मिंश्चर्मणि भास्वरे ।
सिन्धुराजबलोद्धूतः सोऽभज्यत महानसिः ॥ ७३ ॥
भग्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
अदृश्यत निमेषेण स्वरथं पुनरास्थितः ॥ ७४ ॥
तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमम् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ७५ ॥
ततश्चर्म च खड्गं च समुत्क्षिप्य महाबलः ।
ननादाऽर्जुनदायादः प्रेक्षमाणो जयद्रथम् ॥ ७६ ॥
सिन्धुराजं परित्यज्य सौभद्रः परवीरहा ।
तापयामास तत्सैन्यं भुवनं भास्करो यथा ॥ ७७ ॥
तस्य सर्वायसीं शक्तिं शल्यः कनकभूषणाम् ।
चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ॥ ७८ ॥
तामवप्लुत्य जग्राह विकोशं चाऽकरोदसिम् ।
वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमम् ॥ ७९ ॥
तस्य लाघवमाज्ञाय सत्त्वं चाऽमिततेजसः ।
सहिताः सर्वराजानः सिंहनादमथाऽनदन् ॥ ८० ॥
ततस्तामेव शल्यस्य सौभद्रः परवीरहा ।
मुमोच भुजवीर्येण वैदूर्यविकृतां शिताम् ॥ ८१ ॥

जिस समय भीतरी और बाहरी चोटों के पैंतरे काट रहे थे उस समय वे परदार पर्वत से प्रतीत होते थे। महावीर अभिमन्यु ने अवसर पाकर जयद्रथ को तलवार मारी, जयद्रथ ने भी शत्रु का वार अपनी ढाल पर रोककर खड्ग-प्रहार किया, जिसे अभिमन्यु ने अपनी ढाल पर रोक लिया॥७१।७२॥जयद्रथ का वह दृढ खड्ग अभिमन्यु की ढाल में मढे हुए सुवर्ण के पत्तर में लगकर टूट गया। मैंने देखा कि उसी समय जयद्रथ अपने खड्ग को खण्डित देखकर, छः पग हटकर, पलक मारते ही स्फूर्त्ति के साथ अपने रथ पर चढ गये। इधर अभिमन्यु भी खड्गयुद्ध बन्द करके फिर श्रेष्ठ रथ पर जा बैठे। उनके पक्ष के योद्धा राजाओं ने उनको चारों ओर से घेर लिया। वीर अभिमन्यु ढाल-तलवार उछालकर जयद्रथ की ओर देखते हुए सिंहनाद करने लगे। सूर्य जैसे सब दिशाओं को अपने तेज से तपाते हैं वैसे ही शत्रुदलन अभिमन्यु जयद्रथ को इस प्रकार परास्त करके शत्रुसेना को पीड़ित करने लगे॥७४।७७॥ अब शल्य ने एक भयानक सुवर्णमण्डित लोहमय, अग्निशिखा की तरह चमकीली, शक्ति लेकर अभिमन्यु को ताककर मारी। गरुड जैसे उछलकर आये हुए नाग को पकड लेते हैं वैसे ही अभिमन्यु ने उछलकर उस शक्ति को पकड लिया और फिर अपनी तीक्ष्ण तलवार म्यान से निकाली। सब राजा लोग अभिमन्यु के बल-वीर्य

सा तस्य रथमासाद्य निर्मुक्तभुजगोपमा ।
जघान सूतं शल्यस्य रथाच्चैनमपातयत् ॥ ८२ ॥
ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः ।
सात्यकिः केकया भीमो धृष्टद्युम्नशिखण्डिनौ ॥ ८३ ॥
यमौ च द्रौपदेयाश्च साधु साध्विति चुक्रुशुः ।
बाणशब्दाश्च विविधाः सिंहनादश्च पुष्कलाः ॥ ८४ ॥
प्रादुरासन्हर्षयन्तः सौभद्रमपलायिनम् ।
तन्नाऽमृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ॥ ८५ ॥
अथैनं सहसा सर्वे समन्तान्निशितैः शरैः ।
अभ्याकिरन्महाराज जलदा इव पर्वतम् ॥ ८६ ॥
तेषां च प्रियमन्विच्छन्सूतस्य च पराभवम् ।
आर्त्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ॥ ८७ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि अभिमन्युपराक्रमे चतुर्दशोऽध्यायः ॥ १४ ॥

ओर अद्भुत पराक्रम को देखकर सिंहनाद करने लगे। अब अमित तेजस्वी शत्रुवीरनाशन अभिमन्यु ने वही अभेद्य मणिखचित शक्ति शल्य के ऊपर चलाई ॥७८।८१॥ केंचुल छोड़े हुए नाग के समान वह शक्ति शल्य के रथ पर पहुँची। उस शक्ति के प्रहार से सारथी मरकर गिर पड़ा। यह देखकर धृष्टकेतु, द्रुपद, विराट, युधिष्ठिर, कैकेय, सात्यकि, धृष्टद्युम्न, शिखण्डी, भीम, नकुल, सहदेव और द्रौपदी के पुत्र सब अभिमन्यु को साधुवाद देते हुए चिल्लाने लगे। उस समय बहुविध बाणों के शब्द और सिंहनाद से समरभूमि गूँज उठी ॥८२।८५॥ अपराजित अभिमन्यु उस प्रशंसासूचक कोलाहल को सुनकर बहुत आनन्दित हुए। मेघमण्डल जैसे जल बरसाकर पर्वत के शिखर को ढक लेते हैं वैसे ही आपके पुत्रगण, शत्रुपक्ष के उस जयनाद और सिंहनाद को न सह सकने के कारण, एकाएक चारों ओर से अभिमन्यु पर बाण बरसाने लगे। शत्रुदमन शल्य ने सारथी की मृत्यु देखकर, अत्यन्त क्रुद्ध होकर, आपके पुत्रों की विजय की इच्छा से अभिमन्यु पर आक्रमण किया ॥८५।८७॥

—०—

द्रोणपर्व का चौदहवाँ अध्याय समाप्त हुआ ॥ १४ ॥

अथ पञ्चदशोऽध्यायः ॥ १५ ॥

धृतराष्ट्र उवाच – बहूनि सुविचित्राणि द्वन्द्वयुद्धानि सञ्जय ।
त्वयोक्तानि निशम्याऽहं स्पृहयामि सचक्षुषाम् ॥ १ ॥
आश्चर्यभूतं लोकेषु कथयिष्यन्ति मानवाः ।
कुरूणां पाण्डवानां च युद्धं देवासुरोपमम् ॥ २ ॥

पन्द्रहवाँ अध्याय ॥ १५ ॥

राजा धृतराष्ट्र कहते हैं—हे सञ्जय ! तुमने जो इन वीरों के द्वन्द्वयुद्धों का वर्णन किया उसे सुनकर इस समय मुझे भी नेत्र न होने का खेद हो रहा है। मनुष्य इस कुरु-पाण्डव-युद्ध को देवासुर-युद्ध के समान

सा तस्य रथमासाद्य निर्मुक्तभुजगोपमा ।
जघान सूतं शल्यस्य रथाच्चैनमपातयत् ॥ ८२ ॥
ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः ।
सात्यकिः केकया भीमो धृष्टद्युम्नशिखण्डिनौ ॥ ८३ ॥
यमौ च द्रौपदेयाश्च साधु साध्विति चुक्रुशुः ।
बाणशब्दाश्च विविधाः सिंहनादश्च पुष्कलाः ॥ ८४ ॥
प्रादुरासन्हर्षयन्तः सौभद्रमपलायिनम् ।
तन्नाऽमृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ॥ ८५ ॥
अथैनं सहसा सर्वे समन्तान्निशितैः शरैः ।
अभ्याकिरन्महाराज जलदा इव पर्वतम् ॥ ८६ ॥
तेषां च प्रियमन्विच्छन्सूतस्य च पराभवम् ।
आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ॥ ८७ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि अभिमन्युपराक्रमे चतुर्दशोऽध्यायः ॥ १४ ॥

और अद्भुत पराक्रम को देखकर सिंहनाद करने लगे। अब अमित तेजस्वी शत्रुविनाशन अभिमन्यु ने वही अभेद्य मणिखचित शक्ति शल्य के ऊपर चलाई ॥७८।८१॥ केंचुल छोड़े हुए नाग के समान वह शक्ति शल्य के रथ पर पहुँची। उस शक्ति के प्रहार से सारथी मरकर गिर पड़ा। यह देखकर धृष्टकेतु, द्रुपद, विराट, युधिष्ठिर, कैकेय, सात्यकि, धृष्टद्युम्न, शिखण्डी, भीम, नकुल, सहदेव और द्रौपदी के पुत्र सब अभिमन्यु को साधुवाद देते हुए चिल्लाने लगे। उस समय बहुविध बाणों के शब्द और सिंहनाद से समरभूमि गूँज उठी॥८२।८५॥ अपराजित अभिमन्यु उस प्रशंसासूचक कोलाहल को सुनकर बहुत आनन्दित हुए। मेघमण्डल जैसे जल बरसाकर पर्वत के शिखर को ढक लेते हैं वैसे ही आपके पुत्रगण, शत्रुपक्ष के उस जयनाद और सिंहनाद को न सह सकने के कारण, एकाएक चारों ओर से अभिमन्यु पर बाण बरसाने लगे। शत्रुदमन शल्य ने सारथी की मृत्यु देखकर, अत्यन्त क्रुद्ध होकर, आपके पुत्रों की विजय की इच्छा से अभिमन्यु पर आक्रमण किया॥८५।८७॥

--०--

द्रोणपर्व का चौदहवाँ अध्याय समाप्त हुआ ॥ १४ ॥

अथ पञ्चदशोऽध्यायः ॥ १५ ॥

धृतराष्ट्र उवाच - बहूनि सुविचित्राणि द्वन्द्वयुद्धानि सञ्जय ।
त्वयोक्तानि निशम्याऽहं स्पृहयामि सचक्षुषाम् ॥ १ ॥
आश्चर्यभूतं लोकेषु कथयिष्यन्ति मानवाः ।
कुरूणां पाण्डवानां च युद्धं देवासुरोपमम् ॥ २ ॥

पन्द्रहवाँ अध्याय ॥ १५ ॥

राजा धृतराष्ट्र कहते हैं—हे सञ्जय ! तुमने जो इन वीरों के द्वन्द्वयुद्धों का वर्णन किया उसे सुनकर इस समय मुझे भी नेत्र न होने का खेद हो रहा है। मनुष्य इस कुरु-पाण्डव-युद्ध को देवासुर-युद्ध के समान

न हि मे तृप्तिरस्तीह श्रृण्वतो युद्धमुत्तमम् ।
तस्मादार्त्तायनेर्युद्धं सौभद्रस्य च शंस मे ॥ ३ ॥

सञ्जय उवाच—सादितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम् ।
समुत्क्षिप्य नदन्क्रुद्धः प्रचस्कन्द रथोत्तमात् ॥ ४ ॥
तं दीप्तमिव कालाग्निं दण्डहस्तमिवाऽन्तकम् ।
जवेनाऽभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥ ५ ॥
सौभद्रोऽप्यशनिप्रख्यां प्रगृह्य महतीं गदाम् ।
एह्येहीत्यब्रवीच्छल्यं यत्नाद्भीमेन वारितः ॥ ६ ॥
वारयित्वा तु सौभद्रं भीमसेनः प्रतापवान् ।
शल्यमासाद्य समरे तस्थौ गिरिरिवाऽचलः ॥ ७ ॥
तथैव मद्रराजोऽपि भीमं दृष्ट्वा महाबलम् ।
ससाराऽभिमुखस्तूर्णं शार्दूल इव कुञ्जरम् ॥ ८ ॥
ततस्तूर्यनिनादाश्च शङ्खानां च सहस्रशः ।
सिंहनादाश्च सञ्जज्ञुर्भेरीणां च महास्वनाः ॥ ९ ॥
पश्यतां शतशो ह्यासीदन्योऽन्यमभिधावताम् ।
पाण्डवानां कुरूणां च साधुसाध्विति निःस्वनाः ॥ १० ॥
न हि मद्राधिपादन्यः सर्वराजसु भारत ।
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ ११ ॥
तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते लोके युधि कोऽन्यो वृकोदरात् ॥ १२ ॥

---

अद्भुत और आश्चर्य में डालनेवाला कहेंगे । यह उत्तम युद्ध-वृत्तान्त सुनकर भी मुझे तृप्ति नहीं होती । इसलिए तुम मेरे आगे शल्य और अभिमन्यु के युद्ध का वृत्तान्त फिर कहो॥१।३॥सञ्जय ने कहा — हे राजेन्द्र! शल्य ने जब अपने सारथी को मरते देखा तब अत्यन्त कुपित होकर, लोहे की भारी गदा लेकर, वे रथ से उतर पड़े । हे महाराज ! भीमसेन उन्हें कालदण्ड हाथ में लिये साक्षात् यमराज के समान देखकर अपनी गदा लेकर बड़े वेग से उनकी ओर झपटे । अभिमन्यु भी वज्रतुल्य गदा हाथ में लेकर शल्य को गदा युद्ध के लिए ललकारने लगे॥४।६॥महाप्रतापी भीमसेन ने समझाकर अभिमन्यु को रोक लिया । वे स्वयं शल्य के सन्मुख पर्वत के समान जाकर डट गये । उसी प्रकार मद्रराज शल्य भी महाबली भीमसेन को देखकर, गजराज की ओर सिंह की तरह, झपटे । उधर तुरही, सहस्रों शङ्ख और डङ्के बजने लगे; वीर योद्धा सिंहनाद करने लगे और एक दूसरे की ओर झपटते हुए पाण्डवों और कौरवों के मध्य असंख्य साधुवाद और जयनाद सुनाई पड़ने लगे॥७।१०॥संग्राम में शल्य को छोड़कर और कोई भीमसेन का वेग नहीं सह सकता था । वैसे ही भीमसेन के अतिरिक्त और कोई वीरश्रेष्ठ मद्रराज शल्य की गदा का वार नहीं सँभाल सकता था । सुवर्ण की पट्टियों से शोभित और अपने लोगों के मन में हर्ष बढ़ानेवाली भारी गदा भीमसेन

पट्टैर्जाम्बूनदैर्बद्धा बभूव जनहर्षणी ।
प्रजज्वाल तदा विद्धा भीमेन महती गदा ॥ १३ ॥
तथैव चरतो मार्गान्मण्डलानि च सर्वशः ।
महाविद्युत्प्रतीकाशा शल्यस्य शुशुभे गदा ॥ १४ ॥
तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
आवर्तितगदाश्रृङ्गावुभौ शल्यवृकोदरौ ॥ १५ ॥
मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ १६ ॥
ताडिता भीमसेनेन शल्यस्य महती गदा ।
साग्निज्वाला महारौद्रा तदा तूर्णमशीर्यत ॥ १७ ॥
तथैव भीमसेनस्य द्विषताऽभिहता गदा ।
वर्षाप्रदोषे खद्योतैर्वृतो वृक्ष इवाऽऽबभौ ॥ १८ ॥
गदा क्षिप्ता तु समरे मद्रराजेन भारत ।
व्योम दीपयमाना सा ससृजे पावकं मुहुः ॥ १९ ॥
तथैव भीमसेनेन द्विषते प्रेषिता गदा ।
तापयामास तत्सैन्यं महोल्का पतती यथा ॥ २० ॥
ते गदे गदिनां श्रेष्ठे समासाद्य परस्परम् ।
श्वसन्त्यौ नागकन्येव ससृजाते विभावसुम् ॥ २१ ॥
नखैरिव महाव्याघ्रौ दन्तैरिव महागजौ ।
तौ विचेरतुरासाद्य गदाग्र्याभ्यां परस्परम् ॥ २२ ॥

के चलाने पर प्रज्वलित हो उठा । उधर विभाग के अनुसार मण्डलाकार से घूमकर पैतरा काटते हुए शल्य की विशाल गदा भीमसेन के वज्रतुल्य कठोर अंगों से लगकर बिजली की तरह चमकने लगी ॥१३।१४॥ वे दोनों वीर दो बड़े साँड़ों की तरह, घूमती हुई गदाओं के ही सींगों से शोभित होकर, गरजते हुए मण्डलाकार गति से घूमने लगे । दोनों वीर समान रूप से पैंतरे बदलते और गदा-युद्ध का कौशल दिखाते हुए प्रहार कर रहे थे॥१५।१६॥ शल्य की भारी गदा भीमसेन की गदा पर पड़कर भयानक अग्नि उगलती हुई तत्काल टूट गई । भीमसेन की गदा भी शल्य की गदा पर पड़कर, बरसात के सन्ध्याकाल में जुगनुओं से शोभित वृक्ष की तरह, चिनगारियों से शोभायमान हुई । अब मद्रराज शल्य ने दूसरी गदा चलाई । उस गदा से बारम्बार प्रहार के समय अग्नि की ज्वालाएँ निकल रही थीं, जिनसे आकाशमण्डल प्रकाशित हो उठता था॥१७।१८॥ शत्रु के ऊपर चलाई गई भीमसेन की गदा भी, भारी उल्कापिण्ड के समान, प्रज्वलित होकर शल्य की सेना को सन्ताप और भय से विह्वल बनाने लगी । वे दोनों गदाएँ परस्पर टकराकर फुफकारती हुई नागकन्याओं के समान अग्नि उगल रही थीं॥१९।२१॥ जैसे दो बड़े बाघ नखों से, या महागजराज दाँतों से, परस्पर भिड़कर आक्रमण करते हों वैसे ही मद्रराज शल्य और भीमसेन गदाओं से

ततो गदाभ्यामभिहतौ क्षणेन रुधिरोक्षितौ ।
ददृशाते महात्मानौ किंशुकाविव पुष्पितौ ॥ २३ ॥
शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदाभिघातसंह्रादः शक्राशनिरवोपमः ॥ २४ ॥
गदया मद्रराजेन सव्यदक्षिणमाहतः ।
नाऽकम्पत तदा भीमो भिद्यमान इवाऽचलः ॥ २५ ॥
तथा भीमगदावेगैस्ताड्यमानो महाबलः ।
धैर्यान्मद्राधिपस्तस्थौ वज्रैर्गिरिरिवाऽऽहतः ॥ २६ ॥
आपेततुर्महावेगौ समुच्छ्रितगदावुभौ ।
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ २७ ॥
अथाऽऽप्लुत्य पदान्यष्टौ सन्निपत्य गजाविव ।
सहसा लोहदण्डाभ्यामन्योन्यमभिजघ्नतुः ॥ २८ ॥
तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ ।
युगपत्पेततुर्वीरौ क्षिताविन्द्रध्वजाविव ॥ २९ ॥
ततो विह्वलमानं तं निःश्वसन्तं पुनः पुनः ।
शल्यमभ्यपतत्तूर्णं कृतवर्मा महारथः ॥ ३० ॥
दृष्ट्वा चैनं महाराज गदयाऽभिनिपीडितम् ।
विचेष्टन्तं यथा नागं मूर्च्छयाऽभिपरिप्लुतम् ॥ ३१ ॥
ततः स्वरथमारोप्य मद्राणामधिपं रणे ।
अपोवाह रणात्तूर्णं कृतवर्मा महारथः ॥ ३२ ॥

---

परस्पर आक्रमण करते हुए युद्धभूमि में विचरने लगे। अब क्षण भर में ही भीमसेन और शल्य दोनों, दारुण गदा-प्रहार से निकलनेवाले रक्त से लिप्त होकर फूले हुए ढाक के वृक्ष के समान शोभित हुए। उन दोनों पुरुषसिंहों के भयानक गदा-प्रहार से वज्रपात के समान भयानक शब्द उठकर सब दिशाओं में व्याप्त हो गया॥२२।२४॥जैसे पर्वत फट जाने पर भी कम्पित नहीं होता, वैसे ही दाहने और बायें अङ्गों में बारम्बार शल्य के गदा मारने पर भीमसेन तनिक भी विचलित नहीं हुए, और मद्रराज भी भीमसेन की गदा की चोटें खाकर वज्राहत पर्वत के समान धैर्य धारण किये खड़े रहे। बली गजराज के समान तुल्य बलवाले दोनों वीर भारी गदाएँ उठाकर एक दूसरे पर चोट कर रहे थे और मण्डलाकार घूमकर, अन्तर-मार्ग में रहकर, फिर मण्डलाकार गति से विचरण करते थे॥२५।२७॥कभी आठ पग जाकर एकाएक उछलकर दोनों, दोनों को नष्ट करने के विचार से, एक दूसरे पर लोहे की भारी गदाओं की चोट करते थे। इस तरह बारम्बार वेग के साथ दौड़ने में और गदाओं की चोटों से घायल होकर दोनों वीर, इन्द्र की ध्वजा के समान, मूर्च्छित होकर पृथ्वी पर गिर पड़े॥२८।३०॥ इधर महारथी कृतवर्मा गदा-प्रहार से पीड़ित, निश्चेष्ट, नाग के समान मूर्च्छा में पड़े हुए शल्य को विह्वल भाव से बारम्बार श्वास लेते देखकर बड़ी स्फूर्ति से

क्षीववद्विह्वलो वीरो निमेषात्पुनरुत्थितः ।
भीमोऽपि सुमहाबाहुर्गदापाणिरदृश्यत ॥ ३३ ॥
ततो मद्राधिपं दृष्ट्वा तव पुत्राः पराङ्मुखम् ।
सनागपत्त्यश्वरथाः समकम्पन्त मारिष ॥ ३४ ॥
ते पाण्डवैरर्द्यमानास्तावका जितकाशिभिः ।
भीता दिशोऽन्वपद्यन्त वातनुन्ना घना इव ॥ ३५ ॥
निर्जित्य धार्तराष्ट्रांस्तु पाण्डवेया महारथाः ।
व्यरोचन्त रणे राजन्दीप्यमाना इवाऽग्नयः ॥ ३६ ॥
सिंहनादान्भृशं चक्रुः शङ्खान्दध्मुश्च हर्षिताः ।
भेरीश्च वादयामासुर्मृदङ्गांश्चाऽऽनकैः सह ॥ ३७ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि शल्यापयाने पञ्चदशोऽध्यायः ॥ १५ ॥

उनके पास गये और शीघ्र ही उन्हें उठाकर रथ पर बिठाकर युद्धभूमि से हट गये । मैंने देखा कि मतवाले के समान विह्वल वीर्यशाली भीमसेन क्षण भर में सचेत होकर उठ खड़े हुए । शल्य को समर से विमुख देखकर आपके पुत्रगण चतुरङ्गिणी सेना सहित भय से काँपने लगे । विजयशाली पाण्डवों के द्वारा पीड़ित कौरवगण, शङ्का से व्याकुल होकर, आँधी के भगाये मेघों के समान चारों ओर भागने लगे ॥३१।३५॥ हे महाराज ! महारथी पाण्डवगण इस प्रकार आपकी सेना को हराकर प्रज्वलित अग्नि के समान अपने तेज से शोभायमान हुए । पाण्डव पक्ष की सेना में चारों ओर वीर लोग प्रसन्नचित्त हो ऊँचे स्वर से सिंहनाद और जयनाद करने लगे; शङ्खध्वनियाँ होने लगीं तथा तुरही, डङ्का, मृदङ्ग आदि बाजे बजने लगे॥३६।३७॥

—०—

द्रोणपर्व का पन्द्रहवाँ अध्याय समाप्त हुआ ॥ १५ ॥

अथ षोडशोऽध्यायः ॥ १६ ॥

सञ्जय उवाच - तद्बलं सुमहद्दीर्णं त्वदीयं प्रेक्ष्य वीर्यवान् ।
दधारैको रणे राजन्वृषसेनोऽस्त्रमायया ॥ १ ॥
शरा दश दिशो मुक्ता वृषसेनेन संयुगे ।
विचेरुस्ते विनिर्भिद्य नरवाजिरथद्विपान् ॥ २ ॥
तस्य दीप्ता महाबाणा विनिश्चेरुः सहस्रशः ।
भानोरिव महाराज घर्मकाले मरीचयः ॥ ३ ॥

सोलहवाँ अध्याय ॥ १६ ॥

सञ्जय कहते हैं — हे राजेन्द्र ! पराक्रमी वृषसेन ने अपनी सेना को इस प्रकार जब भागते देखा तब वे युद्धभूमि में अकेले ही अपनी अपूर्व अस्त्रविद्या के कौशल से कौरव-सेना की रक्षा करने लगे । युद्ध में वृषसेन ने अनेक प्रकार के असंख्य बाण चलाये। वे बाण पाण्डवों की सेना के हाथी, घोड़े, पैदल,

तेनाऽर्दिता महाराज रथिनः सादिनस्तथा ।
निपेतुरुर्व्यां सहसा वातभग्ना इव द्रुमाः ॥ ४ ॥
हयौघांश्च रथौघांश्च गजौघांश्च महारथः ।
अपातयद्रणे राजञ्शतशोऽथ सहस्रशः ॥ ५ ॥
दृष्ट्वा तमेकं समरे विचरन्तमभीतवत् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ६ ॥
नाकुलिस्तु शतानीको वृषसेनं समभ्ययात् ।
विव्याध चैनं दशभिर्नाराचैर्मर्मभेदिभिः ॥ ७ ॥
तस्य कर्णात्मजश्चापं छित्वा केतुमपातयत् ।
तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ॥ ८ ॥
कर्णात्मजं शरव्रातैरदृश्यं चक्रुरञ्जसा ।
तान्नदन्तोऽभ्यधावन्त द्रोणपुत्रमुखा रथाः ॥ ९ ॥
छादयन्तो महाराज द्रौपदेयान्महारथान् ।
शरैर्नानाविधैस्तूर्णं पर्वताञ्जलदा इव ॥ १० ॥
तान्पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः ।
पञ्चालाः केकया मत्स्याः सृञ्जयाश्चोद्यतायुधाः ॥ ११ ॥
तद्युद्धमभवद्घोरं सुमहल्लोमहर्षणम् ।
त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः ॥ १२ ॥
एवं युयुधिरे वीराः संरब्धाः कुरुपाण्डवाः ।
परस्परमुदीक्षन्तः परस्परकृतागसः ॥ १३ ॥

रथी आदि को छेदकर इधर-उधर गिरने लगे। हे महाराज! उनके प्रज्वलित सहस्रों तीक्ष्ण बाण ग्रीष्म ऋतु के सूर्य की किरणों के समान सब ओर फैलकर रथियों और सवारों को अत्यन्त पीड़ित करके, आँधी के उखाड़े वृक्षों की तरह, एकाएक पृथ्वीतल पर गिराने लगे। महारथी वृषसेन अगणित घोड़ों, रथों और हाथियों को गिराते हुए रणभूमि मे विचरने लगे। युद्ध के मैदान में वृषसेन को, अकेले, निर्भय भाव से घूमते देखकर, सब राजाओं ने मिलकर चारों ओर से घेर लिया॥१।६॥इसी समय नकुल के पुत्र वीर शतानीक ने वृषसेन को मर्मभेदी दस नाराच बाण मारे। इसके पश्चात् कर्ण के पुत्र वृषसेन ने भी शतानीक के धनुष और रथ की ध्वजा को काट डाला। द्रौपदी के पुत्रों ने भाई की यह दशा देखी तो वे उनके समीप जाने के लिए वृषसेन की ओर दौड़े। उन्होंने बहुत से बाणों से वृषसेन को छिपा दिया। हे राजेन्द्र! मेघ जैसे जल बरसाकर उससे पर्वत को ढक देते हैं वैसे ही अश्वत्थामा आदि वीरगण वृषसेन को पीड़ित करनेवाले द्रौपदी के पुत्रों को अपने बाणों से अदृश्य करते हुए उनकी ओर दौड़े॥७।१०॥पूर्व समय में दानवों के साथ देवताओं का जैसा भयानक संग्राम हुआ था वैसा ही लोमहर्षण रण कौरवों और पाण्डवों से होने लगा। पाण्डव, पाञ्चाल, कैकेय, मत्स्य और सृञ्जयगण शस्त्र ताने हुए

तेषां ददृशिरे कोपाद्वपूंष्यमिततेजसाम् ।
युयुत्सूनामिवाऽऽकाशे पतत्रिवरभोगिनाम् ॥ १४ ॥
भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः ।
बभासे स रणोद्देशः कालसूर्य इवोदितः ॥ १५ ॥
तदासीत्तुमुलं युद्धं निघ्नतामितरेतरम् ।
महाबलानां बलिभिर्दानवानां यथा सुरैः ॥ १६ ॥
ततो युधिष्ठिरानीकमुद्धृतार्णवनिःस्वनम् ।
त्वदीयमवधीत्सैन्यं सम्प्रद्रुतमहारथम् ॥ १७ ॥
तत्प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशमर्दितम् ।
अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत ॥ १८ ॥
ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः ।
प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ॥ १९ ॥
तमाविध्यच्छितैर्बाणैः कङ्कपत्रैर्युधिष्ठिरः ।
तस्य द्रोणो धनुश्छित्वा तं द्रुतं समुपाद्रवत् ॥ २० ॥
चक्ररक्षः कुमारस्तु पञ्चालानां यशस्करः ।
दधार द्रोणमायान्तं वेलेव सरितां पतिम् ॥ २१ ॥
द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम् ।
सिंहनादरवो ह्यासीत्साधुसाध्विति भाषितम् ॥ २२ ॥
कुमारस्तु ततो द्रोणं सायकेन महाहवे ।
विव्याधोरसि संक्रुद्धः सिंहवच्च नदन्मुहुः ॥ २३ ॥

शत्रुवीरों को मारने के लिए दौड़े । एक दूसरे के अपराधी कौरव और पाण्डवगण, विजय की इच्छा से, एक दूसरे को क्रूर दृष्टि से देखते हुए घोरतर युद्ध करने लगे । ये सब क्रुद्ध योद्धा आकाश में युद्ध करने के लिए उद्यत पक्षियों के राजा गरुड़ और नागों के समान जान पड़ते थे । भीम कर्ण, कृपाचार्य, द्रोणाचार्य, अश्वत्थामा, धृष्टद्युम्न, सात्यकि आदि दोनों ओर के वीरों के बाहुबल के प्रभाव से समरभूमि प्रलयकाल के उदय हुए सूर्य के समान प्रदीप्त हो उठी । देवासुर संग्राम के समान परस्पर प्रहार करते हुए महाबलशाली वीरगण घोरतम संग्राम करने लगे ॥११।१६॥ कुछ ही समय में कौरवपक्ष के वीर भाग खड़े हुए और युधिष्ठिर की सेना कुरु-सेना को नष्ट करने लगी । शत्रुओं के द्वारा कौरव सेना को पीड़ित, भागते और क्षत विक्षत होते देखकर द्रोणाचार्य उसे ढाढ़स बँधाते हुए कहने लगे कि हे शूरवीरो ! तुम भागो नहीं । अब लाल रङ्ग के घोड़ोंवाले रथ पर बैठे द्रोणाचार्य ने, चार दाँतोंवाले गजराज की तरह, पाण्डव-सेना में प्रवेश करके युधिष्ठिर पर आक्रमण किया॥१७।१९॥ युधिष्ठिर भी कङ्कपत्रशोभित अनेक प्रकार के तीक्ष्ण बाण आचार्य को मारने लगे । आचार्य बड़ी स्फूर्ति के साथ उनका धनुष काटकर उनकी ओर झपटे । जैसे तटभूमि सागर के वेग को रोकती है वैसे ही पाञ्चालों के यश को बढ़ानेवाले कुमार ने, जो

संवार्य च रणे द्रोणं कुमारस्तु महाबलः ।
शरैरनेकसाहस्रैः कृतहस्तो जितश्रमः ॥ २४ ॥
तं शूरमार्यव्रतिनं मन्त्रास्त्रेषु कृतश्रमम् ।
चक्ररक्षं परामृद्गात्कुमारं द्विजपुङ्गवः ॥ २५ ॥
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः ।
तव सैन्यस्य गोप्ताऽऽसीद्भारद्वाजो द्विजर्षभः ॥ २६ ॥
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
नकुलं पञ्चभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ २७ ॥
युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः ।
सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यं च दशभिः शरैः ॥ २८ ॥
व्यक्षोभयद्रणे योधान्यथामुख्यमभिद्रवन् ।
अभ्यवर्त्तत सम्प्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥ २९ ॥
युगन्धरस्ततो राजन्भारद्वाजं महारथम् ।
वारयामास संक्रुद्धं वातोद्धतमिवाऽर्णवम् ॥ ३० ॥
युधिष्ठिरं स विद्ध्वा तु शरैः सन्नतपर्वभिः ।
युगन्धरं तु भल्लेन रथनीडादपातयत् ॥ ३१ ॥
ततो विराटद्रुपदौ केकयाः सात्यकिः शिविः ।
व्याघ्रदत्तश्च पाञ्चाल्यः सिंहसेनश्च वीर्यवान् ॥ ३२ ॥
एते चाऽन्ये च बहवः परीप्सन्तो युधिष्ठिरम् ।
*आवव्रुस्तस्य पन्थानं किरन्तः सायकान्बहून् ॥ ३३ ॥*

युधिष्ठिर के रथ-चक्र की रक्षा कर रहे थे, द्रोणाचार्य को रोक दिया। इस प्रकार कुमार के द्वारा द्रोणाचार्य को रोके जाते देखकर सब योद्धा सिंहनाद करते हुए कुमार को साधुवाद से सम्मानित करने लगे। महावीर कुमार ने अत्यन्त कुपित होकर आचार्य की छाती में एक बाण मारा। निरन्तर कई सहस्र बाणों से द्रोणाचार्य को हटा करके कुमार बारम्बार सिंहनाद करने लगे॥२०।२४॥कौरव-सेना के रक्षक द्विजश्रेष्ठ द्रोणाचार्य ने फुर्तीले, संग्राम में न थकनेवाले, मन्त्रविद्या और अस्त्रविद्या में निपुण, आर्यव्रती, चक्र-रक्षक कुमार को परास्त करके पाण्डव-सेना के भीतर प्रवेशकर अपूर्व रणकौशल दिखाना आरम्भ किया। द्रोण ने बारह बाण शिखण्डी को, बीस बाण उत्तमौजा को, पाँच बाण नकुल को, सात बाण सहदेव को, बारह बाण युधिष्ठिर को, तीन-तीन बाण द्रौपदी के पुत्रों को, पाँच बाण सात्यकि को और दस बाण राजा विराट को मारे। यों प्रधानता के अनुसार हर एक योद्धा को प्रहार से पीड़ित और विह्वल करते हुए द्रोणचार्य युधिष्ठिर को पकड़ने के लिए आगे बढ़े। तब आँधी से उमड़े हुए और क्षोभ को प्राप्त समुद्र के समान चले आते क्रुद्ध वीर द्रोणाचार्य को रोकने के लिए महारथी युगन्धर आगे बढ़े। द्रोणाचार्य ने अनेक तीक्ष्ण बाणों से युधिष्ठिर को पीड़ित करके एक भल्ल बाण मारकर युगन्धर को रथ से गिरा दिया

व्याघ्रदत्तस्तु पाञ्चाल्यो द्रोणं विव्याध मार्गणैः ।
पञ्चाशता शितै राजंस्तत उच्चुक्रुशुर्जनाः ॥ ३४ ॥
त्वरितं सिंहसेनस्तु द्रोणं विध्वा महारथम् ।
प्राहसत्सहसा हृष्टस्त्रासयन्वै महारथान् ॥ ३५ ॥
ततो विस्फार्य नयने धनुर्ज्यामवमृज्य च ।
तलशब्दं महत्कृत्वा द्रोणस्तं समुपाद्रवत् ॥ ३६ ॥
ततस्तु सिंहसेनस्य शिरः कायात्सकुण्डलम् ।
व्याघ्रदत्तस्य चाऽऽक्रम्य भल्लाभ्यामहरद्बली ॥ ३७ ॥
तान्प्रमृज्य शरव्रातैः पाण्डवानां महारथान् ।
युधिष्ठिररथाभ्याशे तस्थौ मृत्युरिवाऽन्तकः ॥ ३८ ॥
ततोऽभवन्महाशब्दो राजन्यौधिष्ठिरे बले ।
हृतो राजेति योधानां समीपस्थे यतव्रते ॥ ३९ ॥
अब्रुवन्सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम् ।
अद्य राजा धार्त्तराष्ट्रः कृतार्थो वै भविष्यति ॥ ४० ॥
अस्मिन्मुहूर्ते द्रोणस्तु पाण्डवं गृह्य हर्षितः ।
आगमिष्यति नो नूनं धार्त्तराष्ट्रस्य संयुगे ॥ ४१ ॥
एवं सञ्जल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ४२ ॥
शोणितोदां रथावर्तां कृत्वा विशसने नदीम् ।
शूरास्थिचयसङ्कीर्णां प्रेतकूलापहारिणीम् ॥ ४३ ॥

॥३४।३६॥अब कैकेय, विराट, सात्यकि, द्रुपद, शिखि, पाञ्चालदेशीय व्याघ्रदत्त, महाबली सिंहसेन और अन्यान्य महारथीगण युधिष्ठिर की रक्षा करने के लिए अनेक प्रकार के बाण बरसाते हुए द्रोणाचार्य की राह रोक कर खड़े हो गये। पाञ्चालदेशीय व्याघ्रदत्त ने स्फूर्ति के साथ द्रोणाचार्य को पचास तीक्ष्ण बाण मारे। इस अद्भुत कर्म को देखकर लोग हाहाकार करने लगे। उत्साहपूर्ण प्रसन्नचित्त सिंहसेन भी अन्य वीरों को भयविह्वल करते हुए द्रोणाचार्य को कई बाण मारकर हँसने लगे। महाबली द्रोणाचार्य क्रोध से नेत्र फाड़कर, धनुष की डोरी को स्वच्छ करते हुए, तल-शब्द के साथ आगे बढ़े। आचार्य ने दो भल्ल बाणों से सिंहसेन और व्याघ्रदत्त के कुण्डल भूषित सिर काटकर पृथ्वी पर गिरा दिये॥३७॥इस प्रकार पाण्डवपक्ष के वीरों को नष्ट करते हुए साक्षात् यमराज के समान द्रोणाचार्य महाराज युधिष्ठिर के रथ के पास पहुँचे। यतव्रत अजेय द्रोणाचार्य को युधिष्ठिर के पास पहुँचते देखकर पाण्डव सेना के मध्य महाकोलाहल उठा कि महाराज युधिष्ठिर पकड़े गये। हे राजेन्द्र! आप की सेना के लोग आचार्य का पराक्रम देखकर कहने लगे कि आज राजा दुर्योधन विजयी होकर कृतार्थ होंगे। इसमें सन्देह नहीं कि द्रोणाचार्य क्षण भर में ही युधिष्ठिर को पकड़कर प्रसन्नतापूर्वक हमारे और महाराज दुर्योधन के समीप ले आवेंगे॥३८।४१॥हे महाराज! आपके

तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम् ।
नदीमुत्तीर्य वेगेन कुरून्विद्राव्य पाण्डवः ॥ ४४ ॥
ततः किरीटी सहसा द्रोणानीकमुपाद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ४५ ॥
शीघ्रमभ्यस्यतो बाणान्सन्दधानस्य चाऽनिशम् ।
नाऽन्तरं ददृशे कश्चित्कौन्तेयस्य यशस्विनः ॥ ४६ ॥
न दिशो नाऽन्तरिक्षं च न द्यौर्नैव च मेदिनी ।
अदृश्यन्त महाराज बाणभूता इवाऽभवन् ॥ ४७ ॥
नाऽदृश्यत तदा राजंस्तत्र किञ्चन संयुगे ।
बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ४८ ॥
सूर्ये चाऽस्तमनुप्राप्ते तमसा चाऽभिसंवृते ।
नाऽज्ञायत तदा शत्रुर्न सुहृन्न च कश्चन ॥ ४९ ॥
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः ।
तान्विदित्वा पुनस्त्रस्तानयुद्धमनसः परान् ॥ ५० ॥
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ।
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ॥ ५१ ॥
पञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्यमिवर्षयः ।
एवं स्वशिविरं प्रायाज्जित्वा शत्रून्धनञ्जयः ॥ ५२ ॥

सैनिक इस प्रकार कह ही रहे थे कि महावीर अर्जुन रथ के शब्द से सब दिशाओं को कम्पायमान और कौरव-सेना को पीड़ित करते हुए बड़े वेग से उस स्थान पर आ पहुँचे जहाँ द्रोणाचार्य थे। अर्जुन ने युद्धभूमि में रक्त की महानदी बहा दी थी। उस नदी मे जल की जगह रक्त था, बड़े-बड़े रथ भँवर से पड़ते दिखाई दे रहे थे। शूरों के शरीर और हाड़ उस नदी को और भी भयानक बना रहे थे। प्रेत-भूत आदि उसके किनारों पर मरे पड़े थे। बाण उसमें फेने से जान पड़ते थे और बहते हुए प्रास आदि शस्त्र मछली आदि जीव-जन्तुओं के समान देख पड़ते थे। महावीर अर्जुन वेग से उस नदी को लाँघकर एकाएक द्रोणाचार्य के समीप पहुँच गये। महारथी अर्जुन ने द्रोणाचार्य की सेना को अपने युद्ध-कौशल से मोहित और बाणवर्षा से विह्वल करके उन पर घोर आक्रमण किया॥४२।४५॥महापराक्रमी अर्जुन इस स्फूर्त्ति के साथ धनुष पर बाण चढ़ाते और छोड़ते थे कि किसी को यह नहीं देख पड़ता था कि वे कब बाण निकालते हैं, कब धनुष पर चढ़ाते हैं और कब छोड़ते हैं। उनके धनुष से निरन्तर बाणों की वर्षा सी हो रही थी। अर्जुन के चलाये हुए अगणित बाणों से रणभूमि में चारों ओर अँधेरा छा गया—पृथ्वी, अन्तरिक्ष और आकाश कुछ भी नहीं सूझ पड़ता था। सर्वत्र बाण ही बाण देख पड़ते थे। धूल के उड़ने से वह अँधेरा और भी घना हो गया। उधर सूर्य भी अस्ताचल पर पहुँच गये। उस समय यह नहीं जान पड़ता था कि कौन शत्रु है, कौन मित्र है, कौन अपने पक्ष का है और कौन दूसरे पक्ष का है॥४६।४९॥तब द्रोणाचार्य और दुर्योधन आदि ने युद्ध बन्द कर दिया। अर्जुन ने भी शत्रुपक्ष को

पृष्ठतः सर्वसैन्यानां मुदितो वै स केशवः ॥ ५३ ॥
मसारगल्वर्कसुवर्णरूपैर्वज्रप्रवालस्फटिकैश्च मुख्यैः ।
चित्रे रथे पाण्डुसुतो बभासे नक्षत्रचित्रे वियतीव चन्द्रः ॥ ५४ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि प्रथमदिवसावहारे षोडशोऽध्यायः ॥ १६ ॥

भयविह्वल और युद्ध से विमुख देखकर अपनी सेना को शिविर की ओर लौटने की आज्ञा दी । हे महाराज ! जैसे मुनि लोग सूर्यदेव की स्तुति किया करते हैं वैसे ही पाण्डव, सृञ्जय और पाञ्चालगण प्रसन्न होकर अर्जुन की प्रशंसा करने लगे । इस प्रकार शत्रुओं को परास्त करके कृष्ण सहित अर्जुन प्रसन्नता पूर्वक अपने डेरे को लौटे । सब योद्धाओं के पीछे अर्जुन का रथ चला । हीरे, नीलम, पुखराज, पन्ने, मूँगे, मोती, मानिक, बिल्लौर आदि रत्नों और सुवर्ण से भूषित रथ पर बैठे हुए अर्जुन नक्षत्रों से शोभित आकाशमण्डल में पूर्ण चन्द्रमा के समान शोभायमान हुए॥५०।५४॥

द्रोणपर्व का सोलहवाँ अध्याय समाप्त हुआ ॥ १६ ॥

---

अथ सप्तदशोऽध्यायः ॥ १७ ॥

सञ्जय उवाच—ते सेने शिविरं गत्वा न्यविशेतां विशाम्पते ।
यथाभागं यथान्यायं यथागुल्मं च सर्वशः ॥ १ ॥
कृत्वाऽवहारं सैन्यानां द्रोणः परमदुर्मनाः ।
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ॥ २ ॥
उक्तमेतन्मया पूर्वं न तिष्ठति धनञ्जये ।
शक्यो ग्रहीतुं संग्रामे देवैरपि युधिष्ठिरः ॥ ३ ॥
इति तद्वः प्रयततां कृतं पार्थेन संयुगे ।
मा विशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ॥ ४ ॥
अपनीते तु योगेन केनचिच्छ्वेतवाहने ।
तत एष्यति ते राजन्वशमेष युधिष्ठिरः ॥ ५ ॥
कश्चिदाहूय तं संख्ये देशमन्यं प्रकर्षतु ।
तमजित्वा न कौन्तेयो निवर्तेत कथञ्चन ॥ ६ ॥
एतस्मिन्नन्तरे शून्ये धर्मराजमहं नृप ।
ग्रहीष्यामि चमूं भित्वा धृष्टद्युम्नस्य पश्यतः ॥ ७ ॥

---

सत्रहवाँ अध्याय ॥ १७ ॥

सञ्जय कहते हैं कि हे महाराज ! कौरवों और पाण्डवों की सेनाएँ अपने-अपने शिविरोंमें जाकर अपने-अपने स्थान पर विश्राम करने लगीं । महारथी द्रोणाचार्य ने शिविर में पहुँचकर बहुत ही व्याकुल और लज्जित होकर राजा दुर्योधन की ओर देखकर कहा—हे राजेन्द्र ! मैंने पहले ही तुमसे कह दिया था कि अर्जुन के सन्मुख युद्ध में देवगण भी राजा युधिष्ठिर को नहीं पकड़ सकते । तुम लोगों ने युधिष्ठिर के

अर्जुनेन विहीनस्तु यदि नोत्सृजते रणम् ।
मामुपायान्तमालोक्य गृहीतं विद्धि पाण्डवम् ॥ ८ ॥
एवं तेऽहं महाराज धर्मपुत्रं युधिष्ठिरम् ।
समानेष्यामि सगणं वशमद्य न संशयः ॥ ९ ॥
यदि तिष्ठति संग्रामे मुहूर्त्तमपि पाण्डवः ।
अथाऽपयाति संग्रामाद्विजयात्तद्विशिष्यते ॥ १० ॥

सञ्जय उवाच – द्रोणस्य तद्वचः श्रुत्वा त्रिगर्त्ताधिपतिस्तदा ।
भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ॥ ११ ॥
वयं विनिकृता राजन्सह गाण्डीवधन्वना ।
अनागःस्वपि चाऽऽगस्तत्कृतमस्मासु तेन वै ॥ १२ ॥
ते वयं स्मरमाणास्तान्विनिकारान्पृथग्विधान् ।
क्रोधाग्निना दह्यमाना न शेमहि सदा निशि ॥ १३ ॥
स नो दिष्ट्याऽस्त्रसम्पन्नश्चक्षुर्विषयमागतः ।
कर्तारः स्म वयं कर्म यच्चिकीर्षाम हृद्गतम् ॥ १४ ॥
भवतश्च प्रियं यत्स्यादस्माकं च यशस्करम् ।
वयमेनं हनिष्यामो निकृष्याऽयोधनाद्बहिः ॥ १५ ॥
अद्याऽस्त्वनर्जुना भूमिरत्रिगर्त्ताऽथवा पुनः ।
सत्यं ते प्रतिजानीमो नैतन्मिथ्या च भविष्यति ॥ १६ ॥
एवं सत्यरथश्चोक्त्वा सत्यवर्मा च भारत ।
सत्यव्रतश्च सत्येषुः सत्यकर्मा तथैव च ॥ १७ ॥

---

पकड़ने का बड़ा यत्न किया, परन्तु सफलता नहीं प्राप्त कर सके। अर्जुन ने युधिष्ठिर को बचा लिया। तुम मेरी बात सत्य मानो। श्रीकृष्ण और अर्जुन को कोई नहीं जीत सकता। अतएव किसी उपाय से अर्जुन को रणभूमि से दूर हटा ले जाओ, तो युधिष्ठिर को मैं कल पकड़कर तुम्हारे समीप ले आऊँगा। इसका उपाय यही है कि कोई योद्धा अर्जुन को युद्ध करने के लिए ललकार कर दूर हटा ले जाय। अर्जुन अवश्य उससे युद्ध करने को जायँगे, और उसे युद्ध में जीते बिना कभी न लौटेंगे। मैं इसी मध्य में अवसर पाकर धृष्टद्युम्न के सन्मुख ही, पाण्डव सेना के भीतर प्रवेश होकर, युधिष्ठिर को पकड़ लाऊँगा। अर्जुन की अनुपस्थिति में युधिष्ठिर यदि मुझे देखकर भय से भाग न खड़े हुए तो मैं उनको अवश्य पकड़ लाऊँगा। यदि युधिष्ठिर संग्राम में क्षण भर भी ठहर गये तो मैं उन्हें और उनके साथियों को पकड़कर तुम्हारे समीप ले आऊँगा, अथवा जो वे युद्ध से भाग खड़े हुए तो वह भी विजय से बढ़कर है॥१।१०॥सञ्जय कहते हैं कि हे राजेन्द्र! द्रोणाचार्य के ये वचन सुन कर त्रिगर्तदेश के राजा सुशर्मा ने, अपने भाइयों के साथ, खड़े होकर दुर्योधन से कहा—हे महाराज! अर्जुन ने कई बार हमें परास्त किया है, हम पर चढ़ाई की है। हम लोगों ने उनका कोई अपराध नहीं किया, अर्जुन ही अकारण हम पर आक्रमण

सहिता भ्रातरः पञ्च रथानामयुतेन च ।
न्यवर्तन्त महाराज कृत्वा शपथमाहवे ॥ १८ ॥
मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः ।
सुशर्मा च नरव्याघ्रस्त्रिगर्त्तः प्रस्थलाधिपः ॥ १९ ॥
मावेल्लकैर्ललित्थैश्च सहितो मद्रकैरपि ।
रथानामयुतेनैव सोऽगमद्भ्रातृभिः सह ॥ २० ॥
नानाजनपदेभ्यश्च रथानामयुतं पुनः ।
समुत्थितं विशिष्टानां शपथार्थमुपागमत् ॥ २१ ॥
ततो ज्वलनमानर्च्य हुत्वा सर्वे पृथक् पृथक् ।
जगृहुः कुशचीराणि चित्राणि कवचानि च ॥ २२ ॥
ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः ।
मौर्वीमेखलिनो वीराः सहस्रशतदक्षिणाः ॥ २३ ॥
यज्वानः पुत्रिणो लोक्याः कृतकृत्यास्तनुत्यजः ।
योक्ष्यमाणास्तदाऽऽत्मानं यशसा विजयेन च ॥ २४ ॥
ब्रह्मचर्यश्रुतिमुखैः क्रतुभिश्चाऽऽप्तदक्षिणैः ।
प्राप्यॉंल्लोकान्सुयुद्धेन क्षिप्रमेव यियासवः ॥ २५ ॥
ब्राह्मणांस्तर्पयित्वा च निष्कान्दत्वा पृथक्पृथक् ।
गाश्च वासांसि च पुनः समाभाष्य परस्परम् ॥ २६ ॥
प्रज्वाल्य कृष्णवर्त्मानमुपागम्य रणव्रतम् ।
तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ॥ २७ ॥

करने के कारण अपराधी हैं। उन अपनी पराजयों को स्मरण करके हम सदा क्रोध की अग्नि में भीतर ही भीतर जला करते हैं, यहाँ तक कि उसी ही व्याकुलता के मारे रात्रि को हम सुख की निद्रा नहीं सो सकते॥११।१२॥भाग्यवश ऐसा सुयोग प्राप्त हुआ है कि वही अर्जुन अस्त्र-शस्त्र धारण किये रणभूमि में हमारे सन्मुख उपस्थित है। आज हम अपनी इच्छा के अनुसार ऐसा कार्य करेंगे जिससे आपका कल्याण होगा और हमें भी यश प्राप्त होगा। हम अर्जुन को युद्ध के लिए ललकार कर रण-भूमि के बाहर ले जायेंगे और वहाँ उनको मार डालेंगे। आज पृथ्वी पर या तो अर्जुन नहीं रहेंगे, और या त्रिगर्त (हम लोग) नहीं रहेंगे। हम लोग यह प्रतिज्ञा करते हैं ॥१४।१६॥प्रस्थल के अधिपति त्रिगर्तनरेश सुशर्मा ने अपने पाँचों भाइयों — सत्यवर्मा, सत्यरथ, सत्यव्रत, सत्येषु और सत्यकर्मा — के साथ दस सहस्र रथों सहित युद्ध की सौगन्ध ली। सुशर्मा के साथ मावेल्लक, ललित्थ, मद्रकगण, मालव, तुण्डिकेरगण और अनेक जनपदों (देशों) से आये हुए विशेष-विशेष दस सहस्र रथी भी युद्ध की सौगन्ध लेने के लिए उद्यत हुए॥१७।२१॥तदनन्तर सब लोगों ने हवन के लिए पृथक्-पृथक् वेदियों पर अग्नि को लाकर स्थापित किया। इसके पश्चात् सब योद्धा कुश-चीर और विचित्र कवच धारण करने लगे। घृतस्नान, मौर्वी मेखला

शृण्वतां सर्वभूतानामुच्चैर्वाचो बभाषिरे ।
सर्वे धनञ्जयवधे प्रतिज्ञां चापि चक्रिरे ॥ २८ ॥
ये वै लोकाश्चाऽव्रतिनां ये चैव ब्रह्मघातिनाम् ।
मद्यपस्य च ये लोका गुरुदाररतस्य च ॥ २९ ॥
ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः ।
शरणागतं च त्यजतो याचमानं तथा घ्नतः ॥ ३० ॥
अगारदाहिनां चैव ये च गां निघ्नतामपि ।
अपकारिणां च ये लोका ये च ब्रह्मद्विषामपि ॥ ३१ ॥
स्वभार्यामृतुकालेषु मोहाद्वै नाऽभिगच्छताम् ।
श्राद्धमैथुनिकानां च ये चाऽप्यात्मापहारिणाम् ॥ ३२ ॥
न्यासापहारिणां ये च श्रुतं नाशयतां च ये ।
क्लीबेन युध्यमानानां ये च नीचानुसारिणाम् ॥ ३३ ॥
नास्तिकानां च ये लोका येऽग्निमातृपितृत्यजाम् ।
तानाप्नुयामहे लोकान्ये च पापकृतामपि ॥ ३४ ॥
यद्यहत्वा वयं युद्धे निवर्त्तेम धनञ्जयम् ।
तेन चाऽभ्यर्दितास्त्रासाद्भवेम हि पराङ्मुखा ॥ ३५ ॥
यदि त्वसुकरं लोके कर्म कुर्याम संयुगे ।
इष्टाँल्लोकान्प्राप्नुयामो वयमद्य न संशयः ॥ ३६ ॥
एवमुक्त्वा तदा राजंस्तेऽभ्यवर्तन्त संयुगे ।
आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति ॥ ३७ ॥

आदि से अलङ्कृत, कुश-चीर और कवच धारण किये कृतकृत्य, जीवन के मोह को छोडकर पवित्र लोक, यश और विजय की इच्छा रखनेवाले, पुत्रसम्पन्न, यजमान, वीर महारथीगण रण में शरीर त्यागकर—ब्रह्मचर्य वेदपाठ आदि प्रधान कर्मवाले बहुदक्षिणायुक्त यज्ञों से मिलनेवाले लोकों को—शीघ्र ही पहुँच जाने की इच्छा से हवन, ब्राह्मण भोजन आदि श्रेष्ठ कर्म करने लगे। उन्होंने पृथक् पृथक् भोजन कराकर, गऊ सुवर्ण वस्त्र दक्षिणा आदि देकर, ब्राह्मणों को सन्तुष्ट किया। फिर परस्पर सम्भाषण और समव्रत धारण करके, अग्नि जलाकर दृढ़ निश्चय के साथ, सब लोगों को सुनाकर उन्होंने ऊँचे स्वर से अर्जुन को मारने के लिए प्रतिज्ञा की॥२२।२८॥वे अग्नि को छूकर, साक्षी बनाकर, कहने लगे—"हे नरपतियो! अर्जुन को मारे बिना यदि हम युद्ध से लौटें, अथवा अर्जुन से भयभीत होकर युद्ध से भाग जायँ तो उन्हीं निकृष्ट लोकों को जायँ जहाँ मिथ्यावादी, मदिरा पीनेवाले, ब्रह्महत्या करनेवाले, गुरुस्त्री गामी, ब्राह्मण के धन और राजपिण्ड को हरनेवाले, किसी की धरोहर हजम कर जानेवाले, शरणागत को त्यागनेवाले और दीन वाणी कहते हुए को मारनेवाले पातकी जाते हैं। जो हम अर्जुन के सन्मुख से हटें तो उन्हीं निकृष्ट लोकों को जायँ जहाँ शास्त्रविहित मार्ग को छोडकर कुमार्ग पर चलनेवाले, नास्तिक, किसी के घर में अग्नि लगा

आहूतस्तैर्नरव्याघ्रैः पार्थः परपुरञ्जयः ।
धर्मराजमिदं वाक्यमपदान्तरमब्रवीत् ॥ ३८ ॥
आहूतो न निवर्त्तेयमिति मे व्रतमाहितम् ।
संशप्तकाश्च मां राजन्नाह्वयन्ति महामृधे ॥ ३९ ॥
एष च भ्रातृभिः सार्धं सुशर्माऽऽह्वयते रणे ।
वधाय सगणस्याऽस्य मामनुज्ञातुमर्हसि ॥ ४० ॥
नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ ।
सत्यं ते प्रतिजानामि हतान्विद्धि परान्युधि ॥ ४१ ॥
युधिष्ठिर उवाच---श्रुतं ते तत्त्वतस्तात यद् द्रोणस्य चिकीर्षितम् ।
यथा तदनृतं तस्य भवेत्तत्त्वं समाचर ॥ ४२ ॥
द्रोणो हि बलवाञ्शूरः कृतास्त्रश्च जितश्रमः ।
प्रतिज्ञातं च तेनैतद्ग्रहणं मे महारथ ॥ ४३ ॥
अर्जुन उवाच---अयं वै सत्यजिद्राजन्नद्य त्वां रक्षिता युधि ।
ध्रियमाणे च पाञ्चाल्येनाऽऽचार्यः काममाप्स्यति ॥ ४४ ॥
हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो ।
सर्वैरपि समेतैर्वा न स्थातव्यं कथञ्चन ॥ ४५ ॥
सञ्जय उवाच---अनुज्ञातस्ततो राज्ञा परिष्वक्तश्च फाल्गुनः ।
प्रेम्णा दृष्टश्च बहुधा ह्याशिषश्चाऽस्य योजिताः ॥ ४६ ॥
विहायैनं ततः पार्थस्त्रिगर्त्तान्प्रत्ययाद्बली ।
क्षुधितः क्षुद्विघातार्थं सिंहो मृगगणानिव ॥ ४७ ॥

देनेवाले, गोहत्या करनेवाले, अपकारी, ब्रह्मद्रोही, अग्नि और माता-पिता को छोड़ देनेवाले, मोहवश ऋतुकाल में अपनी पत्नी के समीप न रहनेवाले, श्राद्ध के दिन स्त्री-सङ्ग करनेवाले, नपुंसक से युद्ध करनेवाले तथा अन्य अनेक पातकी जाते हैं। यदि आज हम समर में अर्जुन-वधरूप दुष्कर कर्म कर सकेंगे तो अवश्य उत्तम इष्ट लोकों को पावेंगे।"॥२९।३६॥सुशर्मा आदि योद्धा इस प्रकार सौगन्ध खाकर युद्ध के लिए चले और दक्षिण दिशा की ओर अर्जुन को युद्ध के लिए ललकारते हुए समरभूमि में पहुँचे। उनका युद्ध के लिए ललकारना सुनकर अर्जुन ने कहा—हे धर्मराजजी! मेरी यह प्रतिज्ञा है कि यदि कोई युद्ध के लिए ललकारे तो मैं उससे अवश्य युद्ध करूँगा। इस समय ये संशप्तकगण युद्ध के लिए मुझे बुला रहे हैं। अतएव आप मुझे आज्ञा दीजिए जिससे मैं जाकर उन्हें उनके साथियों सहित नष्ट कर आऊँ। मैं उनके इस आह्वान को नहीं सह सकता। मैं आपके आगे प्रतिज्ञा करता हूँ कि उन्हें अवश्य ही मारूँगा॥३७।४१॥राजा युधिष्ठिर ने कहा—हे पार्थ! महारथी द्रोणाचार्य की प्रतिज्ञा का समाचार तुमसे छिपा नहीं है, तुम सब सुन चुके हो। इस समय तुम वही करो जिसमें द्रोण की प्रतिज्ञा किसी प्रकार पूर्ण न होने पावे। अस्त्रविद्या में निपुण और युद्ध में न थकनेवाले द्रोणाचार्य बड़े पराक्रमी हैं। उन्होंने मुझे

ततो दौर्योधनं सैन्यं मुदा परमया युतम् ।
ऋतेऽर्जुनं भृशं क्रुद्धं धर्मराजस्य निग्रहे ॥ ४८ ॥
ततोऽन्योन्येन ते सैन्यं समाजग्मतुरोजसा ।
गङ्गासरय्वौ वेगेन प्रावृषीवोल्बणोदके ॥ ४९ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि धनञ्जययाने सप्तदशोऽध्यायः ॥ १७ ॥

पकड़कर दुर्योधन के पास ले जाने की प्रतिज्ञा की है॥४२।४३॥इस पर अर्जुन ने कहा—हे महाराज! आज मैं सत्यजित् को आपकी रक्षा का भार सौंपता हूँ; वही आपकी रक्षा करेंगे। इनके जीते जी आचार्य अपनी प्रतिज्ञा पूर्ण न कर सकेंगे। यदि दैवयोग से सत्यजित् वीरगति को प्राप्त हों तो फिर आप लोग युद्धभूमि में कदापि न ठहरिएगा ॥४४।४५॥ सञ्जय कहते हैं—हे महाराज! यह सुनकर महाराज युधिष्ठिर ने प्रीति-प्रफुल्ल नेत्रों से अर्जुन को देखकर गले से लगाया और बारम्बार आशीर्वाद देकर जाने की अनुमति दी। भूखा सिंह जैसे भूख मिटाने के लिए मृगों के झुण्ड की ओर झपटता है वैसे ही अर्जुन त्रिगर्त देश की सेना की ओर वेग से चले। इसी अवसर में दुर्योधन के क्रुद्ध सैनिकगण अर्जुन-परित्यक्त युधिष्ठिर को पकड़ने के लिए प्रसन्नतापूर्वक आगे बढ़े। अब दोनों ओर के योद्धा लोग वैसे ही महावेग से भिड़ गये जैसे वर्षाकाल में गङ्गा और सरयू वेग के साथ समुद्र में जा मिलती हैं॥४५।४९॥

द्रोणपर्व का सत्रहवाँ अध्याय समाप्त हुआ ॥ १७ ॥

अथ अष्टादशोऽध्यायः ॥ १८ ॥

सञ्जय उवाच—ततः संशप्तका राजन्समे देशे व्यवस्थिताः ।
व्यूह्याऽनीकं रथैरेव चन्द्राकारं मुदा युताः ॥ १ ॥
ते किरीटिनमायान्तं दृष्ट्वा हर्षेण मारिष ।
उदक्रोशन्नरव्याघ्राः शब्देन महता तदा ॥ २ ॥
स शब्दः प्रदिशः सर्वा दिशः खं च समावृणोत् ।
आवृतत्वाच्च लोकस्य नाऽसीत्तत्र प्रतिस्वनः ॥ ३ ॥
सोऽतीव संप्रहृष्टांस्तानुपलभ्य धनञ्जयः ।
किञ्चिदभ्युत्स्मयन्कृष्णमिदं वचनमब्रवीत् ॥ ४ ॥
पश्यैतान्देवकीमातर्मुमूर्षूनद्य संयुगे ।
भ्रातॄंस्त्रैगर्त्तकानेवं रोदितव्ये प्रहर्षितान् ॥ ५ ॥
अथवा हर्षकालोऽयं त्रैगर्त्तानामसंशयम् ।
कुनरैर्दुरवापान्हि लोकान्प्राप्स्यन्त्यनुत्तमान् ॥ ६ ॥

अठारहवाँ अध्याय ॥ १८ ॥

संञ्जय ने कहा—हे महाराज! उधर संशप्तकगण समतल भूमि में ठहरकर, प्रसन्नतापूर्वक रथों का अर्धचन्द्राकार मोर्चा बनाकर, अर्जुन को आते देख हर्ष के साथ चिल्लाने और सिंहनाद करने लगे। वह शब्द चारों ओर और अन्तरिक्ष भर में भर गया। किन्तु चारों ओर मनुष्य ही मनुष्य देख पड़ते थे,

एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽर्जुनः ।
आससाद रणे व्यूढां त्रिगर्तानामनीकिनीम् ॥ ७ ॥
स देवदत्तमादाय शङ्खं हेमपरिष्कृतम् ।
दध्मौ वेगेन महता घोषेणाऽऽपूरयन्दिशः ॥ ८ ॥
तेन शब्देन वित्रस्ता संशप्तकवरूथिनी ।
विचेष्टाऽवस्थिता संख्ये ह्यश्मसारमयी यथा ॥ ९ ॥
वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः ।
विष्टब्धचरणा मूत्रं रुधिरं च प्रसुस्रुवुः ॥ १० ॥
उपलभ्य ततः संज्ञामवस्थाप्य च वाहिनीम् ।
युगपत्पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः ॥ ११ ॥
तान्यर्जुनः सहस्राणि दशपञ्चभिराशुगैः ।
अनागतान्येव शरैश्चिच्छेदाऽऽशु पराक्रमी ॥ १२ ॥
ततोऽर्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः ।
प्राविध्यन्त ततः पार्थस्तानविध्यत्त्रिभिस्त्रिभिः ॥ १३ ॥
एकैकस्तु ततः पार्थं राजन्विव्याध पञ्चभिः ।
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी ॥ १४ ॥
भूय एव तु संक्रुद्धास्त्वर्जुनं सहकेशवम् ।
आपूरयञ्शरैस्तीक्ष्णैस्तडागमिव वृष्टिभिः ॥ १५ ॥
ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति ।
भ्रमराणामिव व्राताः फुल्लं द्रुमगणं वने ॥ १६ ॥

---

इस कारण उसकी प्रतिध्वनि नहीं हुई॥१।३॥अर्जुन ने उनको अत्यन्त प्रसन्न देखकर कृष्णचन्द्र से मुसकरा-कर कहा—हे वासुदेव ! इन मरने के लिए उद्यत त्रिगर्त देश के लोगों को देखिए । ये लोग रुदन करने के स्थान प्रसन्नता और हर्ष प्रकट कर रहे हैं। अथवा इसमें सन्देह नहीं कि वे यह समझकर हर्ष प्रकट कर रहे हैं कि कापुरुषों के लिए दुष्प्राप्य उत्तम लोक उन्हें, युद्ध में मरने से, प्राप्त होंगे॥४।६॥अब त्रिगर्त लोगों की विशाल सेना के समीप पहुँचकर अर्जुन ने बड़े जोर से सुवर्णभूषित 'देवदत्त' शङ्ख बजाया, जिससे सब दिशाएँ प्रतिध्वनित हो उठीं । संशप्तक-गण की सेना उस शङ्ख के भयानक शब्द को सुन-कर अत्यन्त शङ्कित और पत्थर की मूर्ति की तरह चेष्टारहित हो गई॥७।९॥उनके घोड़े भय से नेत्र फाड़कर, कान खड़े करके, पाँव और गर्दन समेट-कर एक साथ रक्त उगलने और मल-मूत्र त्याग करने लगे । कुछ समय के पश्चात् संशप्तकगण होश में आये । उन्होंने अपनी सेना को सँभाल करके अर्जुन पर निरन्तर बाण बरसाना आरम्भ किया । अर्जुन ने संशप्तकों के चलाये तीक्ष्ण सहस्रों बाणों को केवल पन्द्रह बाणों से राह में ही टुकड़े टुकड़े कर डाला ॥१०।१२॥तब संशप्तकों में से प्रत्येक ने अर्जुन को दस-दस बाण मारे । अर्जुन ने भी उनको तीन-तीन बाण मारे । अर्जुन को फिर उन्होंने पाँच-पाँच बाण

ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैः शरैः ।
अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनम् ॥ १७ ॥
तैः किरीटी किरीटस्थैर्हेमपुङ्खैरजिह्मगैः ।
शातकुम्भमयापीडो बभौ सूर्य इवोत्थितः ॥ १८ ॥
हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः ।
चिच्छेद तं चैव पुनः शरवर्षैरवाकिरत् ॥ १९ ॥
ततः सुशर्मा दशभिः सुरथस्तु किरीटिनम् ।
सुधर्मा सुधनुश्चैव सुबाहुश्च समार्पयत् ॥ २० ॥
तांस्तु सर्वान्पृथग्बाणैर्वानरप्रवरध्वजः ।
प्रत्यविध्यद् ध्वजांश्चैषां भल्लैश्चिच्छेद सायकान् ॥ २१ ॥
सुधन्वनो धनुश्छित्वा हयांश्चाऽस्याऽवधीच्छरैः ।
अथाऽस्य सशिरस्त्राणं शिरः कायादपातयत् ॥ २२ ॥
तस्मिन्निपतिते वीरे त्रस्तास्तस्य पदानुगाः ।
व्यद्रवन्त भयाद्भीता यत्र दौर्योधनं बलम् ॥ २३ ॥
ततो जघान संक्रुद्धो वासविस्तां महाचमूम् ।
शरजालैरविच्छिन्नैस्तमः सूर्य इवांऽशुभिः ॥ २४ ॥
ततो भग्ने बले तस्मिन्विप्रलीने समन्ततः ।
सव्यसाचिनि संक्रुद्धे त्रैगर्त्तान्भयमाविशत् ॥ २५ ॥
ते वध्यमानाः पार्थेन शरैः सन्नतपर्वभिः ।
अमुह्यंस्तत्र तत्रैव त्रस्ता मृगगणा इव ॥ २६ ॥

मारे। अर्जुन ने उसके उत्तर में फिर दो दो तीक्ष्ण बाण मारकर उनको घायल कर दिया। संशप्तकगण ने फिर कुपित होकर, जैसे जलधाराएँ तालाब को भर देती हैं वैसे ही, तीक्ष्ण बाणों की वर्षा से श्री कृष्ण और अर्जुन सहित उनके रथ को पाट दिया। वन के मध्य जैसे भौंरों की कतार फूले हुए वृक्ष पर गिरती है वैसे ही उस समय अर्जुन के ऊपर सहस्रों बाण गिरने लगे॥१३।१६॥अब सुबाहु ने बड़े, भारी और तीक्ष्ण लोहमय तीस बाण अर्जुन के किरीट में मारे। स्वर्णपुङ्खयुक्त बाण किरीट मुकुट में लगने से अर्जुन उदित दिवाकर से, और सुवर्ण के अलङ्कारों से अलङ्कृत से, जान पड़ने लगे। तब अर्जुन ने भल्ल बाण मारकर सुबाहु का दृढ हस्तावाप ( हाथों के बचाव के लिए पहना जानेवाला ) काट डाला। अर्जुन सुबाहु पर सहस्रों बाणों की वर्षा करने लगे ॥१७।१९॥तब सुशर्मा, सुरथ, सुधर्मा, सुधन्वा और सुबाहु ने अत्यन्त कुपित होकर दस-दस बाण अर्जुन को मारे। अर्जुन ने उन सबको तीक्ष्ण बाणों से घायल करके भल्ल बाणों से उनकी ध्वजाएँ काट डालीं। अर्जुन ने क्रुद्ध होकर सुधन्वा का धनुष काटकर रथ के घोड़े मार डाले, और उसका शिरस्त्राण शोभित सिर पृथ्वी पर काट गिराया॥२०।२२॥इससे सुधन्वा के अनुचर अत्यन्त विह्वल होकर भागकर दुर्योधन की सेना के पास जा खड़े हुए। जैसे सूर्यदेव अपनी

ततस्त्रिगर्त्तराट् क्रुद्धस्तानुवाच महारथान् ।
अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ ॥ २७ ॥
शप्त्वाऽथ शपथान्घोरान्सर्वसैन्यस्य पश्यतः ।
गत्वा दौर्योधनं सैन्यं किं वै वक्ष्यथ मुख्यशः ॥ २८ ॥
नाऽवहास्याः कथं लोके कर्मणाऽनेन संयुगे ।
भवेम सहिताः सर्वे निवर्तध्वं यथाबलम् ॥ २९ ॥
एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्मुहुः ।
शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ॥ ३० ॥
ततस्ते संन्यवर्तन्त संशप्तकगणाः पुनः ।
नारायणाश्च गोपाला मृत्युं कृत्वा निवर्त्तनम् ॥ ३१ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि सुशर्मवाक्ये अष्टादशोऽध्यायः ॥ १८ ॥

किरणों से अँधेरे को नष्ट कर देते हैं वैसे ही वीर अर्जुन कुपित होकर, निरन्तर बाण बरसाकर, त्रिगर्त सेना का संहार करने लगे। त्रिगर्तसेना के लोग शङ्कित और छिन्न भिन्न होकर रक्षक की खोज में इधर उधर भागने लगे। संशप्तकगण अर्जुन को कोप से अत्यन्त अपार देखकर बहुत ही भयभीत अर्जुन के बाणों से घायल होकर वे लोग भयातुर मृगों के समान मोहाभिभूत होने लगे ॥२३।२६॥ त्रिगर्त राज सुशर्मा ने क्रुद्ध होकर संशप्तकगण से कहा—हे वीरो! भयभीत होकर भाग खड़े होना तुम लोगों का कर्तव्य नहीं है। तुम लोग दुर्योधन के सन्मुख वैसी भयङ्कर सौगन्ध खाकर यहाँ युद्ध करने आये हो। अब इस प्रकार रण से भागकर वहाँ प्रधान-प्रधान वीरों से क्या कहोगे? उन्हें क्या मुख दिखाओगे? भागोगे तो लोग क्या तुमको हँसेंगे नहीं? अतएव तुम सब मिलकर यथाशक्ति युद्ध करो। मृत्यु का क्या भय है?॥२७।२९॥सब सैनिकगण सुशर्मा के उत्साहवाक्य सुनकर लौट पड़े। वे तत्क्षण महा-कोलाहल करते हुए, शङ्ख बजाते हुए, हर्ष और सन्तोष के साथ युद्ध करने के लिए डट गये। संशप्तकगण और नारायणी सेना जीवन का मोह छोड़कर युद्ध करने लगी॥३०।३१॥

द्रोणपर्व का अठारहवाँ अध्याय समाप्त हुआ ॥ १८ ॥

अथ ऊनविंशोऽध्यायः ॥ १९ ॥

सञ्जय उवाच—दृष्ट्वा तु सन्निवृत्तांस्तान्संशप्तकगणान्पुनः ।
वासुदेवं महात्मानमर्जुनः समभाषत ॥ १ ॥
चोदयाऽश्वान्हृषीकेश संशप्तकगणान्प्रति ।
नैते हास्यन्ति संग्रामं जीवन्त इति मे मतिः ॥ २ ॥

उन्नीसवाँ अध्याय ॥ १९ ॥

सञ्जय कहते हैं कि हे महाराज! अर्जुन ने संशप्तकगण को लौटकर आते देख महात्मा वासुदेव से कहा—हे श्रीकृष्ण! शीघ्रता से संशप्तकगण के सन्मुख रथ ले चलिए। जान पड़ता है कि प्राण रहते ये युद्ध करना न छोड़ेंगे। हे वासुदेव! आज आप मेरे बाहुबल और धनुष का प्रभाव देखिए रुद्रदेव ने जैसे

पश्य मेऽस्त्रबलं घोरं बाह्वोरिष्वसनस्य च ।
अद्यैतान्पातयिष्यामि क्रुद्धो रुद्रः पशूनिव ॥ ३ ॥
ततः कृष्णः स्मितं कृत्वा प्रतिनन्द्य शिवेन तम् ।
प्रावेशयत दुर्धर्षो यत्र यत्रैच्छदर्जुनः ॥ ४ ॥
स रथो भ्राजतेऽत्यर्थमुह्यमानो रणे तदा ।
उह्यमानमिवाऽऽकाशे विमानं पाण्डुरैर्हयैः ॥ ५ ॥
मण्डलानि ततश्चक्रे गतप्रत्यागतानि च ।
यथा शक्ररथो राजन्युद्धे देवासुरे पुरा ॥ ६ ॥
अथ नारायणाः क्रुद्धा विविधायुधपाणयः ।
छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयम् ॥ ७ ॥
अदृश्यं च मुहूर्तेन चक्रुस्ते भरतर्षभ ।
कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयम् ॥ ८ ॥
क्रुद्धस्तु फाल्गुनः संख्ये द्विगुणीकृतविक्रमः ।
गाण्डीवं धनुरामृज्य तूर्णं जग्राह संयुगे ॥ ९ ॥
बध्वा च भ्रुकुटिं वक्त्रे क्रोधस्य प्रतिलक्षणम् ।
देवदत्तं महाशङ्खं पूरयामास पाण्डवः ॥ १० ॥
अथाऽस्त्रमरिसङ्घघ्नं त्वाष्ट्रमभ्यस्यदर्जुनः ।
ततो रूपसहस्राणि प्रादुरासन्पृथक्पृथक् ॥ ११ ॥
आत्मनः प्रतिरूपैस्तैर्नानारूपैर्विमोहिताः ।
अन्योऽन्येनाऽर्जुनं मत्वा स्वमात्मानं च जघ्निरे ॥ १२ ॥
अयमर्जुनोऽयं गोविन्द इमौ पाण्डवयादवौ ।
इति ब्रुवाणाः सम्मूढा जघ्नुरन्योन्यमाहवे ॥ १३ ॥

पशुओं का संहार किया था वैसे ही मैं आज इन संशप्तकगण का संहार करूँगा॥१।३॥वासुदेव ने अर्जुन के ये वचन सुनकर,मङ्गल-कामना द्वारा उनका अभिनन्दन करके, उनकी इच्छा के अनुसार रथ चलाया। श्वेत घोड़ों से युक्त वह रथ आकाशचारी विमान की तरह शोभा को प्राप्त हुआ। हे राजेन्द्र! देवासुर-संग्राम में इन्द्र के रथ के समान वह अर्जुन का रथ अनेक प्रकार की गतियों से मण्डलाकार घूमने लगा। तब विविध शस्त्र हाथ में लिए नारायणी सेना ने क्षण भर में बाण बरसाकर वासुदेव सहित अर्जुन को अदृश्य कर दिया। महावीर अर्जुन ने भी परम कुपित होकर उस युद्ध में दुगना पराक्रम प्रकट किया। उन्होंने स्फूर्त्ति के साथ गाण्डीव धनुष को हाथ से पोंछकर, क्रोधसूचक भौंहें टेढ़ी करके, 'देवदत्त' शङ्ख बजाया और शत्रुनाशन त्वाष्ट्र अस्त्र छोड़ा। उस अस्त्र के प्रभाव से एक ही अर्जुन के पृथक्-पृथक् सहस्रों रूप चारों ओर दिखाई पड़ने लगे॥४।११॥शत्रुपक्ष के योद्धा लोग उन अनेक प्रतिरूपों से ऐसे मोहित हो

मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम् ।
अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः ॥ १४ ॥
ततः शरसहस्राणि तैर्विमुक्तानि भस्मसात् ।
कृत्वा तदस्त्रं तान्वीराननयद्यमसादनम् ॥ १५ ॥
अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि ।
मावेल्लकांस्त्रिगर्तांश्च यौधेयांश्चाऽर्दयच्छरैः ॥ १६ ॥
ते हन्यमाना वीरेण क्षत्रियाः कालचोदिताः ।
व्यसृजञ्छरजालानि पार्थे नानाविधानि च ॥ १७ ॥
न ध्वजो नाऽर्जुनस्तत्र न रथो न च केशवः ।
प्रत्यदृश्यत घोरेण शरवर्षेण संवृतः ॥ १८ ॥
ततस्तेऽलब्धलक्षत्वादन्योन्यमभिचुक्रुशुः ।
हतौ कृष्णाविति प्रीत्या वासांस्यादुधुवुस्तदा ॥ १९ ॥
भेरीमृदङ्गशङ्खांश्च दध्मुर्वीराः सहस्रशः ।
सिंहनादरवांश्चोग्रांश्चक्रिरे तत्र मारिष ॥ २० ॥
ततः प्रसिष्विदे कृष्णः खिन्नश्चाऽर्जुनमब्रवीत् ।
क्वाऽसि पार्थ न पश्ये त्वां कच्चिज्जीवसि शत्रुहन् ॥ २१ ॥
तस्य तद्भाषितं श्रुत्वा त्वरमाणो धनञ्जयः ।
वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् ॥ २२ ॥
ततः संशप्तकव्रातान्साश्वद्विपरथायुधान् ।
उवाह भगवान्वायुः शुष्कपर्णचयानिव ॥ २३ ॥

---

गये कि परस्पर एक दूसरे को अर्जुन समझकर मारने काटने लगे। "ये कृष्ण और अर्जुन एकत्र उपस्थित हैं," इस प्रकार कहते कहते वे लोग माया से मोहित होकर परस्पर प्रहार करने लगे। हे महाराज! परम दिव्य त्वाष्ट्र अस्त्र से मोहित सशप्तकगण इस प्रकार परस्पर प्रहार करके नष्ट होने लगे। सग्राम में योद्धा लोग फूले हुए ढाक के पेड़ के समान शोभायमान हुए। अर्जुन के उस अस्त्र ने शत्रुओं को यमपुर भेज दिया और उनके बाणों को भस्म कर दिया। अब अर्जुन हँसकर ललित्थ, मालव, मावेल्लक और त्रिगर्तदेश के योद्धाओं को तीक्ष्ण बाणों से पीड़ित करने लगे। वे सब महावीर भी कालप्रेरित होकर अर्जुन के ऊपर अनेक प्रकार के असख्य बाण छोड़ने लगे॥१२।१७॥ उन दारुण बाणों से अर्जुन, वासुदेव और उनका ध्वजासहित दिव्य रथ, सब अदृश्य हो गये। इसी अवसर में निशाना ठीक लग जाने से सशप्तकगण परस्पर कोलाहल करने लगे। वे लोग श्रीकृष्ण और अर्जुन को विनष्ट समझकर प्रसन्नचित्त हो वस्त्रों को हिलाने लगे। सहस्रों योद्धा भेरी, मृदङ्ग, शङ्ख आदि बजाने और कोलाहल करने लगे॥१८।२०॥ वासुदेव बहुत ही थककर और पसीने से तर होकर अर्जुन से बोले—हे पार्थ! तुम कहा हो? हे शत्रुनाशन! मैं तुम्हें देख नहीं पाता। तुम जीवित भी हो? यह सुनकर अर्जुन ने उसी समय वायव्य अस्त्र छोड़ा,

इन्द्राशनिसमस्पर्शा इन्द्रगोपकसन्निभाः ।
काये चित्रान्तराश्चित्राश्चित्रायुधमुदावहन् ॥ ५६ ॥
बिभ्रतो हेममालास्तु चक्रवाकोदरा हयाः ।
कोसलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ॥ ५७ ॥
शबलास्तु बृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः ।
युद्धे सत्यधृतिं क्षेमिमवहन्प्रांशवः शुभाः ॥ ५८ ॥
एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
अश्वैश्च धनुषा चैव शुक्लैः शुक्लो न्यवर्तत ॥ ५९ ॥
समुद्रसेनपुत्रं तु सामुद्रा रुद्रतेजसम् ।
अश्वाः शशाङ्कसदृशाश्चन्द्रसेनमुदावहन् ॥ ६० ॥
नीलोत्पलसवर्णास्तु तपनीयविभूषिताः ।
शैब्यं चित्ररथं संख्ये चित्रमाल्या वहन्हयाः ॥ ६१ ॥
कलायपुष्पवर्णास्तु श्वेतलोहितराजयः ।
रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम् ॥ ६२ ॥
यं तु सर्वमनुष्येभ्यः प्राहुः शूरतरं नृपम् ।
तं पटच्चरहन्तारं शुकवर्णावहन्हयाः ॥ ६३ ॥
चित्रायुधं चित्रमाल्यं चित्रवर्मायुधध्वजम् ।
ऊहुः किंशुकपुष्पाणां समवर्णा हयोत्तमाः ॥ ६४ ॥
एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्तत ॥ ६५ ॥

व्याघ्रदत्त के रथ में अरुण-मलिनवर्ण-शरीर और मूसे के रङ्ग की पीठवाले घोड़े जुते हुए थे। वे घोड़े जाने के लिए बड़ी शीघ्रता दिखा रहे थे॥५२।५४॥विचित्र मालाओं से भूषित, काले मस्तकवाले चितकबरे घोड़े पुरुषसिंह पाञ्चालदेशीय सुधन्वा के रथ में जुते हुए थे। अद्भुतदर्शन, विचित्रवर्ण, बीरबहूटी के रङ्ग के घोड़े चित्रायुध राजा के रथ में जुते हुए थे। कोशलाधिपति के पुत्र सुक्षत्र के रथ में विचित्रवर्ण, ऊँचे, सुवर्णमाला-भूषित, चकवे के पेट के से रङ्गवाले सुन्दर घोड़े जुते हुए थे॥५५।५७॥सत्यधृति क्षेमि भी सुवर्णमाल्य धारी, बड़े और ऊँचे, शुभदर्शन, सधे हुए कबरे घोड़ों से युक्त रथ में बैठकर आगे बढ़े। महावीर शुक्र की ध्वजा, कवच, धनुष और रथ के घोड़े आदि सब सामान श्वेत ही था। रुद्र के समान तेजस्वी समुद्रसेन के पुत्र चन्द्रसेन के रथ के घोड़े चन्द्रमा के समान श्वेत थे। शिबि के पुत्र चित्ररथ के रथ के घोड़े नीलकमल के रङ्ग के, सुवर्णभूषित और विचित्र मालाओं से अलङ्कृत थे। मिश्रश्यामा वर्ण और लाल-श्वेत रोमों से शोभित श्रेष्ठ घोड़ों से युक्त रथ पर बैठकर युद्धप्रिय महायोद्धा रथसेन युद्ध करने चले। पटच्चर नामक असुरों को मारनेवाले और सब मनुष्यों से बढ़कर शूर कहलानेवाले समुद्राधिप के रथ में तोते के रङ्ग के घोड़े जुते हुए थे॥६१।६३॥विचित्र माला, कवच, आयुध और ध्वजा से अलङ्कृत चित्रा-

नानारूपै रत्नचिह्नैर्वरूथरथकार्मुकैः ।
वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ॥ ६६ ॥
ये तु पुष्करवर्णस्य तुल्यवर्णा हयोत्तमाः ।
ते रोचमानस्य सुतं हेमवर्णमुदावहन् ॥ ६७ ॥
योधाश्च भद्रकाराश्च शरदण्डानुदण्डयः ।
श्वेताण्डाः कुक्कुटाण्डाभा दण्डकेतुं हयावहन् ॥ ६८ ॥
केशवेन हते संख्ये पितर्यथ नराधिपे ।
भिन्ने कपाटे पाण्ड्यानां विद्रुतेषु च बन्धुषु ॥ ६९ ॥
भीष्मादवाप्य चास्त्राणि द्रोणाद्रामात्कृपात्तथा ।
अस्त्रैःसमत्वं सम्प्राप्य रुक्मिकर्णार्जुनाच्युतैः ॥ ७० ॥
इयेष द्वारकां हन्तुं कृत्स्नां जेतुं च मेदिनीम् ।
निवारितस्ततः प्राज्ञैः सुहृद्भिर्हितकाम्यया ॥ ७१ ॥
वैरानुबन्धमुत्सृज्य स्वराज्यमनुशास्ति यः ।
स सागरध्वजः पाण्ड्यश्चन्द्ररश्मिनिभैर्हयैः ॥ ७२ ॥
वैदूर्यजालसञ्छन्नैर्वीर्यद्रविणमाश्रितः ।
दिव्यं विस्फारयंश्चापं द्रोणमभ्यद्रवद्बली ॥ ७३ ॥
आटरूपकवर्णाभा हयाः पाण्ड्यानुयायिनाम् ।
अवहन्रथमुख्यानामयुतानि चतुर्दश ॥ ७४ ॥
नानावर्णेन रूपेण नानाकृतिमुखा हयाः ।
रथचक्रध्वजं वीरं घटोत्कचमुदावहन् ॥ ७५ ॥

युध के रथ में ढाक के फूल के रङ्ग के घोड़े जुते हुए थे । महाराज नील की ध्वजा, कवच, धनुष, रथ के घोड़े आदि सब सामान नीले रङ्ग का था । चित्र राजा के घोड़े, ध्वजा, पताका, रथ, धनुष आदि सब सामान विचित्रवर्ण नाना रूप रत्नचिह्नों से विचित्र था॥६४।६६॥रोचमान के पुत्र हेमवर्ण के रथ के श्रेष्ठ घोड़े पद्म के रङ्ग के थे । दण्डकेतु के रथ के घोड़े युद्धसमर्थ, सुडौल, शर-दण्ड के समान उज्ज्वल और पीठवाले, श्वेत अण्डकोशवाले और मुर्गी के अण्डे की सी आभावाले थे॥६७।६८॥श्रीकृष्ण के हाथों युद्ध में पिता की मृत्यु होने पर, पाण्ड्यदेश-नरेश के सहायक मित्रों के भाग जाने और नगर लुट जाने पर जिन्होंने भीष्म, द्रोण और परशुराम से अस्त्रशिक्षा प्राप्त करके अस्त्रविद्या में रुक्मी, कर्ण, अर्जुन और श्रीकृष्ण के समान होकर द्वारकापुरी को नष्ट-भ्रष्ट करने और पृथ्वीमण्डल को जीतने का अभिप्राय किया था; किन्तु फिर हितचिन्तक सुहृदों के समझाने पर श्रीकृष्ण से वैर और बदला लेने का विचार छोड़ दिया और इस समय जो उत्तमता के साथ अपने राज्य का शासन कर रहे हैं, वे पाण्ड्यनरेश सागरध्वज वैदूर्य-जालमण्डित चन्द्रकिरण के रङ्ग के घोड़ों से शोभित रथ पर बैठकर, अपने बाहुबल से दिव्य दृढ़ धनुष चढ़ाकर, द्रोणाचार्य के सन्मुख चले॥६९।७३॥ पाण्ड्यनरेश के अनुयायी १,४०००० श्रेष्ठ रथियों

भरतानां समेतानामुत्सृज्यैको मतानि यः ।
गतो युधिष्ठिरं भक्त्या त्यक्त्वा सर्वमभीप्सितम् ॥ ७६ ॥
लोहिताक्षं महाबाहुं बृहन्तं तमरट्टजाः ।
महासत्वा महाकायाः सौवर्णस्यन्दने स्थितम् ॥ ७७ ॥
सुवर्णवर्णा धर्मज्ञमनीकस्थं युधिष्ठिरम् ।
राजश्रेष्ठं हयश्रेष्ठाः सर्वतः पृष्ठतोऽन्वयुः ॥ ७८ ॥
वर्णैरुच्चावचैरन्यैः सदश्वानां प्रभद्रकाः ।
सन्न्यवर्त्तन्त युद्धाय बहवो देवरूपिणः ॥ ७९ ॥
ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः ॥ ८० ॥
अत्यरोचत तान्सर्वान्धृष्टद्युम्नः समागतान् ।
सर्वाण्यति च सैन्यानि भारद्वाजो व्यरोचत ॥ ८१ ॥
अतीव शुशुभे तस्य ध्वजः कृष्णाजिनोत्तरः ।
कमण्डलुर्महाराज जातरूपमयः शुभः ॥ ८२ ॥
ध्वजं तु भीमसेनस्य वैदूर्यमणिलोचनम् ।
भ्राजमानं महासिंहं राजन्तं दृष्टवानहम् ॥ ८३ ॥
ध्वजं तु कुरुराजस्य पाण्डवस्य महौजसः ।
दृष्टवानस्मि सौवर्णं सोमं ग्रहगणान्वितम् ॥ ८४ ॥
मृदङ्गौ चाऽत्र विपुलौ दिव्यौ नन्दोपनन्दकौ ।
यन्त्रेणाऽऽहन्यमानौ च सुस्वनौ हर्षवर्धनौ ॥ ८५ ॥

के रथों के घोड़े वासकपुष्प के रङ्ग के थे। वीर घटोत्कच के रथ में अनेक रङ्ग, रूप और आकारवाले विचित्र घोड़े जुते हुए थे। उसकी ध्वजा में रथचक्र का चिह्न था। कौरवों के अभिप्राय को और अपनी सब प्रिय वस्तुओं को छोड़कर, भक्तिपूर्वक युधिष्ठिर का आश्रय लेनेवाले, महाबाहु लोहितलोचन युयुत्सु के सुवर्णमय रथ में महाबली पराक्रमी महाकाय घोड़े लगे हुए थे ॥७४।७७॥सेना के मध्यभाग में स्थित धर्मज्ञ नृपश्रेष्ठ युधिष्ठिर के आगे, पीछे और आसपास बहुत से बहुमूल्य घोड़े चले। देवरूपी बहुत से प्रभद्रकगण कई रङ्गों के घोड़ों से शोभित रथों पर बैठकर युद्ध करने के लिए चले। सुवर्णदण्डमण्डित ध्वजाओं से अलङ्कृत वे सब वीर भीमसेन के साथ इन्द्र सहित देवताओं के समान शोभायमान हुए॥७८।८०॥हे राजेन्द्र! पाण्डव-सेना में सब वीरों से अधिक धृष्टद्युम्न शोभायमान थे। वैसे ही इधर कौरवों की सेना में प्रतापी द्रोणाचार्य की शोभा सब वीरों से बढ़कर थी। द्रोणाचार्य के रथ में ध्वजा के ऊपर कृष्णाजिन और सुवर्णमय कमण्डलु बहुत ही शोभायमान हो रहा था। हे महाराज! मैंने देखा कि भीमसेन की ध्वजा पर वैदूर्य-मणिमय नेत्रों से युक्त महासिंह की अपूर्व शोभा हो रही थी। महाराज युधिष्ठिर के रथ में सुवर्णनिर्मित ग्रहों से युक्त चन्द्रमा की अपूर्व शोभा दिखाई पड़ रही थी॥८१।८४॥उनके रथ में बहुत बड़े दिव्य, नन्द-उपनन्द

शरभं पृष्ठसौवर्णं नकुलस्य महाध्वजम् ।
अपश्याम रथेऽत्युग्रं भीषयाणमवस्थितम् ॥ ८६ ॥
हंसस्तु राजतः श्रीमान्ध्वजे घण्टापताकवान् ।
सहदेवस्य दुर्धर्षो द्विषतां शोकवर्धनः ॥ ८७ ॥
पञ्चानां द्रौपदेयानां प्रतिमाध्वजभूषणम् ।
धर्ममारुतशक्राणामश्विनोश्च महात्मनोः ॥ ८८ ॥
अभिमन्योः कुमारस्य शार्ङ्गपक्षी हिरण्मयः ।
रथे ध्वजवरो राजंस्तप्तचामीकरोज्ज्वलः ॥ ८९ ॥
घटोत्कचस्य राजेन्द्र ध्वजे गृध्रो व्यरोचत ।
अश्वाश्च कामगास्तस्य रावणस्य पुरा यथा ॥ ९० ॥
माहेन्द्रं च धनुर्दिव्यं धर्मराजे युधिष्ठिरे ।
वायव्यं भीमसेनस्य धनुर्दिव्यमभून्नृप ॥ ९१ ॥
त्रैलोक्यरक्षणार्थाय ब्रह्मणा सृष्टमायुधम् ।
तद्दिव्यमजरं चैव फाल्गुनार्थाय वै धनुः ॥ ९२ ॥
वैष्णवं नकुलायाऽथ सहदेवाय चाऽश्विजम् ।
घटोत्कचाय पौलस्त्यं धनुर्दिव्यं भयानकम् ॥ ९३ ॥
रौद्रमाग्नेयकौबेरं याम्यं गिरिशमेव च ।
पञ्चानां द्रौपदेयानां धनूरत्नानि भारत ॥ ९४ ॥
रौद्रं धनुर्वरं श्रेष्ठं लेभे यद्रोहिणीसुतः ।
तत्तुष्टः प्रददौ रामः सौभद्राय महात्मने ॥ ९५ ॥

नाम के दो मृदङ्ग——यन्त्र के द्वारा मधुर स्वर से बज कर——हर्ष को बढा रहे थे। नकुल की ध्वजा में सुवर्ण की पीठ से शोभित अतीव उग्र शरभ शत्रु-पक्ष की सेना को भयभीत करता रहा था। सहदेव की ध्वजा में घण्टा-पताका आदि सहित चाँदी का बना हुआ हंस शत्रुओं के शोक को बढ़ा रहा था॥८५।८७॥ द्रौपदी के पाँचों पुत्रों की ध्वजाओं में क्रमशः धर्म, वायु, इन्द्र और अश्विनीकुमारों की प्रतिमाएँ शोभायमान थीं। कुमार अभिमन्यु के रथ की ध्वजा में सुवर्ण का बना हुआ शार्ङ्ग पक्षी था। महाबाहु घटोत्कच की ध्वजा में विकटरूप गिद्ध अङ्कित था। घटोत्कच के रथ में, राक्षसराज रावण के ऐसे इच्छानुसार चलने-वाले, बहुमूल्य घोड़े जुते हुए थे॥८८।९०॥ हे महाराज! राजा युधिष्ठिर के पास दिव्य महेन्द्र का धनुष था। भीमसेन के हाथ में दिव्य वायु का धनुष था। कभी जीर्ण न होनेवाले जिस (गाण्डीव) धनुष को ब्रह्मा जी ने त्रैलोक्य की रक्षा करने के लिए बनाया था वह अर्जुन के हाथ में था। नकुल के हाथ में विष्णु का धनुष और सहदेव के हाथ में अश्विनीकुमारों का दिव्य धनुष था। घटोत्कच के हाथ में बहुत ही भयानक दिव्य पौलस्त्य धनुष था॥९१।९३॥ द्रौपदी के पाँचों पुत्रों के पास क्रमशः रुद्र, अग्नि, कुबेर, यम और गिरीश के श्रेष्ठ धनुष थे। बलराम को जो श्रेष्ठ रौद्र धनुष प्राप्त हुआ था वही धनुष उन्होंने प्रसन्न होकर

एते चाऽन्ये च बहवो ध्वजा हेमविभूषिताः ।
तत्राऽदृश्यन्त शूराणां द्विषतां शोकवर्धनाः ॥ ९६ ॥
तदभूद् ध्वजसम्बाधमकापुरुषसेवितम् ।
द्रोणानीकं महाराज पटे चित्रमिवाऽर्पितम् ॥ ९७ ॥
शुश्रुवुर्नामगोत्राणि वीराणां संयुगे तदा ।
द्रोणमाद्रवतां राजन्स्वयंवर इवाऽऽहवे ॥ ९८ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि हयध्वजादिकथने त्रयोविंशोऽध्याय ॥२३॥

वीर अभिमन्यु को दे दिया था । कुमार अभिमन्यु के हाथ में वही धनुष था॥९४।९५॥हे राजेन्द्र ! ये तथा अन्य अनेक शूरों की सुवर्णमण्डित और शत्रुओं के लिए शोकवर्द्धक ध्वजाएँ दिखाई पड रही थीं। हे महाराज ! द्रोणाचार्य की सेना में चारों ओर ध्वजाएँ देख पड़ती थीं। यहाँ कोई कायर नहीं था। वह सैन्यसागर पट में अङ्कित चित्र के समान दिखाई पडता था। हे राजेन्द्र ! स्वयंवर-सभा के समान उस समरभूमि में द्रोणाचार्य की ओर वेग से जाते हुए वीरों के नाम और गोत्र सुनाई पडने लगे॥९६।९८॥

द्रोणपर्व का तेईसवाँ अध्याय समाप्त हुआ ॥ २३ ॥

अथ चतुर्विंशोऽध्याय ॥ २४ ॥

धृतराष्ट्र उवाच — व्यथयेयुरिमे सेनां देवानामपि सञ्जय ।
आहवे न्यवर्तन्त वृकोदरमुखा नृपाः ॥ १ ॥
सम्प्रयुक्तः किलैवाऽयं दिष्टैर्भवति पूरुषः ।
तस्मिन्नेव च सर्वार्थाः प्रदृश्यन्ते पृथग्विधाः ॥ २ ॥
दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी ।
अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः ॥ ३ ॥
स एव महतीं सेनां समावर्त्तयदाहवे ।
किमन्यद्दैवसंयोगान्मम पुत्रस्य चाऽभवत् ॥ ४ ॥
युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः ।
स तथाऽऽकृष्यते तेन न यथा स्वयमिच्छति ॥ ५ ॥

चौबीसवाँ अध्याय ॥ २४ ॥

धृतराष्ट्र ने कहा—हे सञ्जय ! युद्धभूमि मे भीमसेन के साथ जानेवाले ये वीर राजा लोग देवताओं की सेना को भी व्याकुल और परास्त कर सकते हैं। इनमें कोई भी युद्ध से हटनेवाला नहीं है। हे सञ्जय ! यह जीव भाग्य के अधीन होकर ही जन्म लेता है । मनुष्य चाहे कुछ भी विचार करे, किन्तु उस भाग्य के अनुसार ही फल होता है । यही कारण है कि मनुष्य विचार करता कुछ है और होना कुछ है । मृगछाला पहनकर और जटाधारी होकर युधिष्ठिर बहुत समय तक वन मे रहे, एक वर्ष का अज्ञातवास भी उन्होंने पूर्ण किया। वही युधिष्ठिर अब इतनी भारी सेना एकत्र करके, युद्ध ठानकर, कौरवपक्ष को इस प्रकार परास्त कर रहे हैं। मेरे पुत्र की इस पराजय का कारण अतिरिक्त भाग्य के

द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः ।
स पुनर्भागधेयेन सहायानुपलब्धवान् ॥ ६ ॥
अत्र मे केकया लब्धाः काशिकाः कोसलाश्च ये ।
चेदयश्चाऽपरे वङ्गा मामेव समुपाश्रिताः ॥ ७ ॥
पृथिवी भूयसी तात मम पार्थस्य नो तथा ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ८ ॥
तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः ।
निहतः पार्षतेनाऽऽजौ किमन्यद्भागधेयतः ॥ ९ ॥
मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दिनम् ।
सर्वास्त्रपारगं द्रोणं कथं मृत्युरुपेयिवान् ॥ १० ॥
समनुप्राप्तकृच्छ्रोऽहं मोहं परममागतः ।
भीष्मद्रोणौ हतौ श्रुत्वा नाऽहं जीवितुमुत्सहे ॥ ११ ॥
यन्मां क्षत्ताऽब्रवीत्तात प्रपश्यन्पुत्रगृद्धिनम् ।
दुर्योधनेन तत्सर्वं प्राप्तं सूत मया सह ॥ १२ ॥
नृशंसं तु परं नु स्यात्त्यक्त्वा दुर्योधनं यदि ।
पुत्रशेषं चिकीर्षेयं कृत्स्नं न मरणं व्रजेत् ॥ १३ ॥
यो हि धर्मं परित्यज्य भवत्यर्थपरो नरः ।
सोऽस्माच्च हीयते लोकात्क्षुद्रभावं च गच्छति ॥ १४ ॥
अद्य चाऽप्यस्य राष्ट्रस्य हतोत्साहस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १५ ॥

और क्या हो सकता है ? ॥१।४॥ इसी से मैं कहता हूँ कि प्रत्येक मनुष्य अपने भाग्य को साथ लेकर ही जन्म लेता है । मनुष्य जिसको नहीं चाहता, उसी ओर भाग्य उसे खींच ले जाता है । तात्पर्य यह है कि भाग्य जब तक साथ नहीं देता तब तक मनुष्य अपनी इच्छा के अनुसार कुछ भी नहीं कर पाता । देखो, युधिष्ठिर ने जुआ खेलकर, सर्वस्व हारकर, क्लेश सहे, परन्तु भाग्य के अनुकूल होने से फिर भी उन्हें सहायक साथी मिल गये । मन्दमति दुर्योधन पहले मुझसे कहा करता था कि कैकेय, काशी, कोशल, चेदि और वङ्ग देश के योद्धा मेरे ही पक्ष में हैं । उसने मुझसे यह भी कहा था कि पृथ्वीमण्डल का अधिकांश उसी के अधिकार में है, युधिष्ठिर के अधिकार में उतनी पृथ्वी नहीं है ॥५।८॥ उसी महती सेना से सुरक्षित होने पर भी महावीर द्रोणाचार्य युद्धभूमि में धृष्टद्युम्न के हाथ से मारे गये, तो यह मेरे पुत्र के दुर्भाग्य के अतिरिक्त और क्या कहा जा सकता है ? अहो ! सदा युद्धप्रिय, सब अस्त्रों के प्रयोग में सिद्धहस्त, महाबाहु अद्वितीय योद्धा द्रोणाचार्य इतने राजाओं के मध्य में सुरक्षित रहकर भी कैसे मारे गये ! भीष्म और द्रोण की मृत्यु का समाचार सुनने से मैं बहुत व्याकुल होकर कष्ट प्राप्त कर रहा हूँ । अब यह दुःखमय जीवन रखने को मेरा जी नहीं चाहता ॥९।११॥ मुझे पुत्र की ममता में फँसे देखकर नीतिज्ञ

कथं स्याद्वशेषो हि धुर्ययोरभ्यतीतयोः ।
यौ नित्यमुपजीवामः क्षमिणौ पुरुषर्षभौ ॥ १६ ॥
व्यक्तमेव च मे शंस यथा युद्धमवर्त्तत ।
केऽयुध्यन्के व्यपाकुर्वन्के क्षुद्राः प्राद्रवन्भयात् ॥ १७ ॥
धनञ्जयं च मे शंस यद्यच्चक्रे रथर्षभः ।
तस्माद्भयं नो भूयिष्ठं भ्रातृव्याच्च वृकोदरात् ॥ १८ ॥
यथाऽऽसीच्च निवृत्तेषु पाण्डवेयेषु सञ्जय ।
मम सैन्यावशेषस्य सन्निपातः सुदारुणः ॥ १९ ॥
कथं च वो मनस्तात निवृत्तेष्वभवत्तदा ।
मामकानां च ये शूराः के कांस्तत्र न्यवारयन् ॥ २० ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि धृतराष्ट्रवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

विदुर ने पहले जो कुछ कहा था वह सब मेरे और दुर्योधन के आगे आया। हाय! यदि मैं उसी समय नृशंस दुर्योधन को छोड़ देता तो इस समय मेरे सभी पुत्र न मारे जाते। एक को निकाल देने से शेष सब बच जाते। सत्य है कि जो मनुष्य धर्म को छोड़कर केवल अर्थ (धन) को ही देखता है वह इस लोक में सुखी नहीं होता, लोग उसे क्षुद्र समझते हैं॥१२। १४॥हे सञ्जय! इस राज्य के श्रेष्ठ योद्धा और रक्षक द्रोणाचार्य के मारे जाने से मुझे यह राज्य विनाश से किसी प्रकार बचता नहीं देख पड़ता। जिन दोनों प्रधान वीर पुरुषों के बाहुबल के आश्रय हम लोग निश्चिन्त और निष्कण्टक थे, उन क्षमताशाली भीष्म और द्रोण की जब मृत्यु हो गई है तब हम लोग कैसे बच सकते हैं? कौन हमारी रक्षा कर सकता है? हे सञ्जय! अब तुम उस भयानक युद्ध का सब वृत्तान्त विस्तारपूर्वक मुझे सुनाओ। किस किसने युद्ध किया? किस किसने किस किस पर आक्रमण किया? कौन-कौन क्षुद्रचेता कायर रणभूमि से भाग खड़े हुए? श्रेष्ठ योद्धा अर्जुन ने कौन-कौन अद्भुत कर्म किये?॥१५। १७॥सत्य ही मुझे अपने भतीजे अर्जुन और भीमसेन से ही अपने पक्ष के लिए बड़ा भय है। पाण्डवसेना के यों आक्रमण करने पर मेरे पक्ष की शेष सेना ने किस प्रकार कैसा दारुण संग्राम किया? युद्ध में पाण्डवों के प्रवृत्त होने पर तुम लोगों की मानसिक अवस्था कैसी हुई? मेरे पक्ष के किन-किन शूर वीरों ने पाण्डवपक्ष के वीरों का सामना किया?॥१८।२०॥

द्रोणपर्व का चौबीसवाँ अध्याय समाप्त हुआ ॥ २४ ॥

अथ पञ्चविंशोऽध्यायः ॥ २५ ॥

सञ्जय उवाच—महद्भैरवमासीन्नः सन्निवृत्तेषु पाण्डुषु ।
दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाऽम्बुदैः ॥ १ ॥
तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूं तव ।
ततोऽहतममंस्याम द्रोणं दृष्टिपथे हते ॥ २ ॥

पचीसवाँ अध्याय ॥ २५ ॥

सञ्जय ने कहा—हे महाराज! पाण्डवों ने जब इस प्रकार युद्धभूमि में आकर, सूर्य को जैसे मेघ छिपा लेते हैं, वैसे ही द्रोणाचार्य को घेर लिया तब हम लोग बहुत ही व्याकुल हो उठे। पाण्डवों की

तांस्तु शूरान्महेष्वासान्क्रूरं कर्म चिकीर्षतः ।
दृष्ट्वा दुर्योधनस्तूर्णं स्वसैन्यं समचूचुदत् ॥ ३ ॥
यथाशक्ति यथोत्साहं यथासत्त्वं नराधिपाः ।
वारयध्वं यथायोगं पाण्डवानामनीकिनीम् ॥ ४ ॥
ततो दुर्मर्षणो भीममभ्यगच्छत्सुतस्तव ।
आराद्दृष्ट्वा किरन्बाणैर्जिघृक्षुस्तस्य जीवितम् ॥ ५ ॥
तं बाणैरवतस्तार क्रुद्धो मृत्युरिवाऽऽहवे ।
तं च भीमोऽतुदद्बाणैस्तदाऽऽसीत्तुमुलं महत् ॥ ६ ॥
त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः ।
राज्यं मृत्युभयं त्यक्त्वा प्रत्यतिष्ठन्परान्युधि ॥ ७ ॥
कृतवर्मा शिनेः पौत्रं द्रोणं प्रेप्सुं विशाम्पते ।
पर्यवारयदायान्तं शूरं समरशोभिनम् ॥ ८ ॥
तं शैनेयः शरव्रातैः क्रुद्धः क्रुद्धमवारयत् ।
कृतवर्मा च शैनेयं मत्तो मत्तमिव द्विपम् ॥ ९ ॥
सैन्धवः क्षत्रवर्माणमायान्तं निशितैः शरैः ।
उग्रधन्वा महेष्वासं यत्तो द्रोणादवारयत् ॥ १० ॥
क्षत्रवर्मा सिन्धुपतेश्छित्त्वा केतनकार्मुके ।
नाराचैर्दशभिः क्रुद्धः सर्वमर्मस्वताडयत् ॥ ११ ॥
अथाऽन्यद्धनुरादाय सैन्धवः कृतहस्तवत् ।
विव्याध क्षत्रवर्माणं रणे सर्वायसैः शरैः ॥ १२ ॥

---

सेना के चलने फिरने से इतनी धूल उड़ी कि उससे कौरवों की सेना ढक गई । आचार्य को न देखकर हम लोगों ने समझा कि वे शत्रुओं के हाथों मार डाले गये॥१।२॥उस समय राजा दुर्योधन ने उन शूरों और महाधनुर्द्धरों को द्रोणवधरूप दुष्कर क्रूर कर्म करने के लिए उद्यत देखकर कौरव सेना को उनका सामना करने के लिए इस प्रकार आज्ञा दी—हे वीर सैनिको ! तुम सब नरेश मिलकर, यथाशक्ति उत्साह और पराक्रम के अनुसार, पाण्डवों की इस सेना को रोको और नष्ट करो॥३।४॥हे राजेन्द्र ! तब आपके पुत्र वीर दुर्मर्षण दूर से भीमसेन को देख कर, द्रोणाचार्य के जीवन की रक्षा करने के लिए, भीमसेन के सम्मुख आये और उन पर बड़ी स्फूर्ति के साथ असंख्य बाणों की वर्षा करने लगे । क्रोध से भरे हुए यमराज के समान महावीर दुर्मर्षण ने ज्योंही भीमसेन पर बाणों की वर्षा की त्योंही भीमसेन ने दुर्मर्षण के ऊपर निरन्तर बाण बरसाना आरम्भ किया। इस प्रकार ये दोनों वीर लोमहर्षण संग्राम करने लगे । उधर आपके ये युद्धनिपुण महारथी लोग, अपने अपने स्वामियों की आज्ञा पाकर, राज्य की ममता और मृत्यु का भय छोड़कर शत्रुओं से भिड़ गये॥५।७॥युद्ध के लिए उन्मत्त कृतवर्मा ने मत्त मातङ्ग के समान पराक्रमी सात्यकि को और उग्रधन्वा सिन्धुराज जयद्रथ ने क्षत्रवर्मा को तीक्ष्ण बाण मारकर द्रोणाचार्य के समीप जाने

युयुत्सुं पाण्डवार्थाय यतमानं महारथम् ।
सुबाहुर्भारतं शूरं यत्तो द्रोणादवारयत् ॥ १३ ॥
सुबाहोः सुधनुर्बाणावस्यतः परिघोपमौ ।
युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ ॥ १४ ॥
राजानं पाण्डवश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ।
वेलेव सागरं क्षुब्धं मद्रराट् समवारयत् ॥ १५ ॥
तं धर्मराजो बहुभिर्मर्मभिद्भिरवाकिरत् ।
मद्रेशस्तं चतुःषष्ट्या शरैर्विद्ध्वाऽनदद्भृशम् ॥ १६ ॥
तस्य नानदतः केतुमुच्चकर्त च कार्मुकम् ।
क्षुराभ्यां पाण्डवो ज्येष्ठस्तत उच्चुक्रुशुर्जनाः ॥ १७ ॥
तथैव राजा बाह्लीको राजानं द्रुपदं शरैः ।
आद्रवन्तं सहानीकः सहानीकं न्यवारयत् ॥ १८ ॥
तद्युद्धमभवद्घोरं वृद्धयोः सहसेनयोः ।
यथा महायूथपयोर्द्विपयोः सम्प्रभिन्नयोः ॥ १९ ॥
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ।
सहसैन्यौ सहानीकं यथेन्द्राग्नी पुरा बलिम् ॥ २० ॥
तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम् ।
मत्स्यानां केकयैः सार्धमभीताश्वरथद्विपम् ॥ २१ ॥
नाकुलिं तु शतानीकं भूतकर्मा सभापतिः ।
अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत् ॥ २२ ॥

से रोका। क्रोध से विह्वल क्षत्रवर्मा ने जयद्रथ की ध्वजा और धनुष काटकर उनके मर्मस्थलों में दस नाराच बाण मारे। जयद्रथ ने भी स्फूर्ति के साथ दूसरा दृढ धनुष लेकर लोहमय तीक्ष्ण बाणों से क्षत्रवर्मा को घायल किया॥ १०-१२॥ पाण्डवोंकी विजय के लिए यत्न करनेवाले महारथी शूर युयुत्सु को सुबाहु ने द्रोणाचार्य के समीप जाने से रोका। तब महारथी युयुत्सु ने अत्यन्त तीक्ष्ण दो क्षुर बाणों से सुबाहु की धनुष-बाण-सहित भुजाएँ काट डालीं। जैसे तटभूमि समुद्र के वेग को रोकती है वैसे ही शल्य ने धर्मात्मा राजा युधिष्ठिर को रोका॥ १३-१५॥ धर्मराज ने शल्य के मर्मस्थलों में बहुत से बाण मारे। शल्य भी युधिष्ठिर को चौसठ बाण मारकर ज़ोर से सिंहनाद करने लगे। सिंहनाद करनेवाले शल्य पर अत्यन्त कुपित होकर युधिष्ठिर ने दो क्षुर बाणों से उनकी ध्वजा और धनुष काट डाला। यह देखकर लोग ऊँचे स्वर से चिल्लाने लगे। सेना सहित बाण बरसाते आते राजा द्रुपद को राजा बाह्लीक ने और उनकी सेना ने रोका। मदोन्मत्त महायूथ के अधिपति दो गजराजा के समान ये दोनों अपार सेना के स्वामी बुड्ढे राजा घोर युद्ध करने लगे॥ १६-१९॥ पूर्व समय में इन्द्र और अग्नि ने जिस प्रकार असुराधिप राजा बलि को बाणों से घायल किया था उसी प्रकार अवन्ति देश के राजपुत्र दोनों भाई विन्द और अनुविन्द मत्स्य-

ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः ।
चक्रे विबाहुशिरसं भूतकर्माणमाहवे ॥ २३ ॥
सुतसोमं तु विक्रान्तमायान्तं तं शरौघिणम् ।
द्रोणायाऽभिमुखं वीरं विविंशतिरवारयत् ॥ २४ ॥
सुतसोमस्तु संक्रुद्धः स्वपितृव्यमजिह्मगैः ।
विविंशतिं शरैर्भित्त्वा नाऽभ्यवर्तत दंशितः ॥ २५ ॥
अथ भीमरथः शाल्वमाशुगैरायसैः शितैः ।
षड्भिः साश्वनियन्तारमनयद्यमसादनम् ॥ २६ ॥
श्रुतकर्माणमायान्तं मयूरसदृशैर्हयैः ।
चैत्रसेनिर्महाराज तव पौत्रं न्यवारयत् ॥ २७ ॥
तौ पौत्रौ तव दुर्धर्षौ परस्परवधैषिणौ ।
पितॄणामर्थसिद्ध्यर्थं चक्रतुर्युद्धमुत्तमम् ॥ २८ ॥
तिष्ठन्तमग्रे तं दृष्ट्वा प्रतिविन्ध्यं महाहवे ।
द्रौणिर्मानं पितुः कुर्वन्मार्गणैः समवारयत् ॥ २९ ॥
तं क्रुद्धं प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः ।
सिंहलांगूललक्ष्माणं पितुरर्थे व्यवस्थितम् ॥ ३० ॥
प्रवपन्निव बीजानि बीजकाले नरर्षभ ।
द्रोणायनिं द्रौपदेयाः शरवर्षैरवाकिरन् ॥ ३१ ॥
आर्जुनिं श्रुतकीर्तिं तु द्रौपदेयं महारथम् ।
द्रोणायाऽभिमुखं यान्तं दौःशासनिरवारयत् ॥ ३२ ॥

राज विराट को बाणों से बेधने लगे। मत्स्य और केकय देश के योद्धा लोग परस्पर भिड़कर देवासुर-संग्राम की भाँति अत्यन्त घोर और अद्भुत युद्ध करने लगे। दोनों ओर की चतुरंगिणी सेना भिड़ गई॥२०। २१॥नकुल के पुत्र वीर शतानीक बाणों की वर्षा करते हुए द्रोणाचार्य के सम्मुख जा रहे थे। उनको वीर भूतकर्मा ने आगे बढ़ने से रोका। शतानीक ने अत्यन्त क्रुद्ध होकर तीन तीक्ष्ण भल्ल बाणों से भूतकर्मा के दोनों हाथ काटकर सिर काट डाला। महावीर विविंशति ने आचार्य की ओर जानेवाले बल-विक्रमशाली सुतसोम को रोका। उन्होंने कुपित होकर सीधे निशाने पर पहुँचनेवाले पैने बाण बरसाकर अपने चाचा विविंशति के मर्मस्थलों को छिन्न-भिन्न करना आरम्भ किया॥२२।२५॥महावीर भीमरथ ने पैने लोहमय बाण बरसाकर शाल्व को पीड़ित किया और उनके सारथी तथा रथ के घोड़ों को छः बाणों से मार गिराया। मोर-सदृश घोड़े जिसमें जुते हुए थे, ऐसे रथ पर बैठकर आते हुए महावीर श्रुतकर्मा को चित्रसेन के पुत्र ने आगे बढ़ने से रोका। हे राजेन्द्र! आपके पराक्रमी पोते, अपने-अपने पितृकुल के नाम और मान की रक्षा करने के लिए, एक दूसरे के प्राण लेने का यत्न करते हुए घोर संग्राम करने लगे॥२६।२८॥सिंहपुच्छ के चिह्न से युक्त ध्वजा से शोभित रथ पर बैठे हुए महावीर

तस्य कृष्णसमः कार्ष्णिस्त्रिभिर्भल्लैः सुसंशितैः ।
धनुर्ध्वजं च सूतं च छित्त्वा द्रोणान्तिकं ययौ ॥ ३३ ॥
यस्तु शूरतमो राजन्नुभयोः सेनयोर्मतः ।
तं पटच्चरहन्तारं लक्ष्मणः समवारयत् ॥ ३४ ॥
स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत ।
लक्ष्मणे शरजालानि विसृजन्बह्वशोभत ॥ ३५ ॥
विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनम् ।
पर्यवारयदायान्तं युवानं समरे युवा ॥ ३६ ॥
ततस्तमिषुजालेन याज्ञसेनिः समावृणोत् ।
विधूय तद्बाणजालं बभौ तव सुतो बली ॥ ३७ ॥
अङ्गदोऽभिमुखं वीरमुत्तमौजसमाहवे ।
द्रोणायाऽभिमुखं यान्तं शरौघेण न्यवारयत् ॥ ३८ ॥
स सम्प्रहारस्तुमुलस्तयोः पुरुषसिंहयोः ।
सैनिकानां च सर्वेषां तयोश्च प्रीतिवर्धनः ॥ ३९ ॥
दुर्मुखस्तु महेष्वासो वीरं पुरुजितं बली ।
द्रोणायाऽभिमुखं यान्तं वत्सदन्तैरवारयत् ॥ ४० ॥
सदुर्मुखं भ्रुवोर्मध्ये नाराचेनाऽभ्यताडयत् ।
तस्य तद्विबभौ वक्त्रं सनालमिव पङ्कजम् ॥ ४१ ॥
कर्णस्तु केकयान्भ्रातॄन्पञ्च लोहितकध्वजान् ।
द्रोणायाऽभिमुखं यातांञ्शरवर्षैरवारयत् ॥ ४२ ॥

अश्वत्थामा ने अपने पिता के गौरव और प्राणों की रक्षा करने के लिए बहुत से बाण बरसाकर राजपुत्र प्रतिविन्ध्य को रोका। महाबाहु प्रतिविन्ध्य भी अत्यन्त क्रुद्ध होकर मर्मभेदी अनेक बाण मारकर उन्हें पीडित करने लगे। द्रौपदी के पुत्रगण, खेत में बीज बोने वाले किसान की तरह, अश्वत्थामा के ऊपर निरन्तर बाण बरसाने लगे॥२९।३१॥ अर्जुन के पुत्र महाबाहु श्रुतकीर्ति जब युद्ध के लिए आचार्य की ओर आगे बढ़े तब दुःशासन के पुत्र ने उनको रोका। अर्जुन के तुल्य पराक्रमी श्रुतकीर्ति ने बहुत पैने तीन भल्ल बाणों से दुःशासन के पुत्र के धनुष, ध्वजा और सारथी के सिर को काट डाला और फिर आगे को प्रस्थान किया। हे राजेन्द्र! दोनों पक्ष के योद्धा जिन्हें प्रधान वीर समझते हैं, उन पटच्चर असुरों का संहार करनेवाले वीर को राजकुमार लक्ष्मण ने रोका। पटच्चरविनाशन वीर ने कुपित होकर लक्ष्मण के धनुष और ध्वजा को काट डाला और उन पर बाण बरसाना आरम्भ किया॥३२।३५॥ महाप्राज्ञ नवयुवक विकर्ण ने रणभूमि में द्रोण की ओर जाते हुए शिखण्डी को रोका। तब वे भी विकर्ण के ऊपर बाण बरसाने लगे। महाबाहु विकर्ण ने अनायास शिखण्डी के सब बाण काट डाले। महावीर उत्तमौजा आचार्य की ओर वेग से जा रहे थे, उन्हें महाबाहु अङ्गद ने बाण बरसाकर रोका। ये दोनों वीर क्रमशः अत्यन्त घोर

ते चैनं भृशसन्तप्ताः शरवर्षैरवाकिरन् ।
स च ताञ्छादयामास शरजालैः पुनः पुनः ॥ ४३ ॥
नैवं कर्णो न ते पञ्च ददृशुर्बाणसंवृताः ।
साश्वसूतध्वजरथाः परस्परशराचिताः ॥ ४४ ॥
पुत्रास्ते दुर्जयश्चैव जयश्च विजयश्च ह ।
नीलकाश्यजयत्सेनांस्त्रयस्त्रीन्प्रत्यवारयन् ॥ ४५ ॥
तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्धनम् ।
सिंहव्याघ्रतरक्षूणां यथर्क्षमहिषर्षभैः ॥ ४६ ॥
क्षेमधूर्तिबृहन्तौ तु भ्रातरौ सात्वतं युधि ।
द्रोणायाऽभिमुखं यान्तं शरैस्तीक्ष्णैस्ततक्षतुः ॥ ४७ ॥
तयोस्तस्य च तद्युद्धमत्यद्भुतमिवाऽभवत् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥ ४८ ॥
राजानं तु तथाऽम्बष्ठमेकं युद्धाभिनन्दिनम् ।
चेदिराजः शरानस्यन्क्रुद्धो द्रोणादवारयत् ॥ ४९ ॥
ततोऽम्बष्ठोऽस्थिभेदिन्या निरभिद्यच्छलाकया ।
स त्यक्त्वा सशरं चापं रथाद्भूमिमुपागमत् ॥ ५० ॥
वार्धक्षेमिं तु वार्ष्णेयं कृपः शारद्वतः शरैः ।
अक्षुद्रः क्षुद्रकैर्बाणैः क्रुद्धरूपमवारयत् ॥ ५१ ॥

युद्ध करने लगे। उस महायुद्ध को देखकर दोनों पक्ष के योद्धा लोग परम प्रसन्नता को प्राप्त हुए ॥३६।३९॥महावीर दुर्मुख ने द्रोणाचार्य की ओर जाते हुए महारथी पुरुजित् को कङ्कदन्त बाण बरसाकर रोका। महारथी पुरुजित् ने कुपित होकर दुर्मुख की भौंहों के मध्य में एक नाराच बाण मारा, जिससे दुर्मुख का मुखमण्डल नालयुक्त कमल के समान शोभायमान हुआ॥४०।४१॥महारथी कर्ण ने आचार्य के सन्मुख जाते हुए लाल ध्वजावाले केकयदेशीय पाँचों भाइयों को बाण वर्षा करके रोका। वे कर्ण के बाणप्रहार से अत्यन्त पीड़ित होकर उन पर बाणों की वर्षा करने लगे। कर्ण ने भी बारम्बार बाण बरसाकर उनको अदृश्य सा कर दिया। इस प्रकार कर्ण और केकयदेश के पाचों भाई राजकुमार एक दूसरे के बाणों से घोड़े, सारथी, रथ और ध्वजा-सहित अदृश्य हो गये॥४२।४४॥हे महाराज! आपके तीनों पुत्रों—दुर्जय, जय और विजय—ने नील, काश्य और जयत्सेन इन तीन वीरों को रोका। जैसे सिंह, बाघ और चीते के साथ भालू, भैंसे और साँड़ का संग्राम हो वैसे ही आपके तीन पुत्रों के साथ उक्त तीनों वीरों का घोर युद्ध देखकर दर्शकगण परम सन्तुष्ट हुए। क्षेमधूर्ति और बृहन्त इन दोनों भाइयों ने आचार्य की ओर जाते हुए सात्वत को तीक्ष्ण बाण बरसाकर रोका। जैसे जङ्गल में सिंह के साथ दो मदोन्मत्त गजराजों का युद्ध हो वैसे ही सात्वत के साथ इन दोनों भाइयों का अद्भुत संग्राम होने लगा ॥४५।४८॥कुपित चेदिराज ने असंख्य बाण बरसाकर युद्धप्रिय अम्बष्ठराज को द्रोण के सन्मुख जाने से रोका। राजा अम्बष्ठराज ने अस्थिभेदिनी शलाका के द्वारा चेदिराज को घायल कर दिया। उस दारुण

युध्यन्तौ कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ ।
ते युद्धासक्तमनसो नाऽन्यां बुबुधिरे क्रियाम् ॥ ५२ ॥
सौमदत्तिस्तु राजानं मणिमन्तमतन्द्रितम् ।
पर्यवारयदायान्तं यशो द्रोणस्य वर्धयन् ॥ ५३ ॥
स सौमदत्तेस्त्वरितश्चित्रेष्वसनकेतने ।
पुनः पताकां सूतं च च्छत्रं चाऽपातयद्रथात् ॥ ५४ ॥
अथाऽऽप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा ।
साश्वसूतध्वजरथं तं चकर्त्त वरासिना ॥ ५५ ॥
रथं च स्वं समास्थाय धनुरादाय चाऽपरम् ।
स्वयं यच्छन्हयान्राजन्व्यधमत्पाण्डवीं चमूम् ॥ ५६ ॥
पाड्यमिन्द्रमिवाऽऽयान्तमसुरान्प्रति दुर्जयम् ।
समर्थः सायकौघेन वृषसेनो न्यवारयत् ॥ ५७ ॥
गदापरिघनिस्त्रिंशपट्टिशायोधनोपलैः ।
कडङ्गरैर्भुशुण्डीभिः प्रासैस्तोमरसायकैः ॥ ५८ ॥
मुसलैर्मुद्गरैश्चक्रैर्भिन्दिपालपरश्वधैः ।
पांसुवाताग्निसलिलैर्भस्मलोष्टतृणद्रुमैः ॥ ५९ ॥
आतुदन्प्ररुजन्भञ्जन्निघ्नन्विद्रावयन्क्षिपन् ।
सेनां विभीषयन्नायाद् द्रोणप्रेप्सुर्घटोत्कचः ॥ ६० ॥
तं तु नानाप्रहरणैर्नानायुद्धविशेषणैः ।
राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुषः ॥ ६१ ॥

बाण के प्रहार से चेदिराज रथ से पृथ्वी पर गिर पड़े । उनके हाथ से धनुष और बाण भी गिर पड़ा। शारद्वत कृपाचार्य ने क्षुद्रक बाणों से कुपित वार्द्धक्षेमि को आगे बढ़ने से रोका । हे गजेन्द्र ! विचित्र युद्ध में निपुण और समरप्रिय कृपाचार्य तथा वार्द्धक्षेमि के युद्ध को जो लोग देख रहे थे वे सब उसमें आसक्त-चित्त होकर युद्ध को देखने लगे । वे लोग चित्र-लिखित से रह गये॥४९।५२॥महारथी सौमदत्ति ने आचार्य के यश को बढ़ाते हुए महाराज मणिमान् को घेर लिया । उन्होंने बड़ी स्फूर्त्ति के साथ सौमदत्ति के धनुष, ध्वजा-पताका, छत्र को काटकर और सारथी को मारकर रथ से नीचे गिरा दिया॥५३।५४॥ तब शत्रुदमन यूपकेतु बड़ी स्फूर्ति के साथ अपने रथ पर से कूद पड़े । उन्होंने तलवार के वार से मणिमान् के रथ, घोड़े, ध्वजा और सारथी को नष्ट कर दिया। इसके पश्चात् यूपकेतु अपने रथ पर बैठकर, दूसरा धनुष लेकर, अपने हाथ से घोड़ों को भी हाँकने और तीक्ष्ण बाणों से पाण्डवों की सेना को नष्ट करने लगे । इन्द्र जैसे देवासुर-युद्ध में असुरों को मारने के लिए दौड़े थे वैसे ही वेग से जाकर वृषसेन ने बाण-वर्षा से पाण्ड्यराज को रोका॥५५।५७॥महावीर घटोत्कच गदा, परिघ, खड्ग, पट्टिश, लगुड़, शिला, मूसल, मुद्गर, चक्र, भिंदिपाल, परशु, धूल, वायु, अग्नि, भस्म, कङ्कड़, तृण और वृक्ष आदि की वर्षा करके शत्रुसेना

तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः ।
तादृग्यादृक्पुरा वृत्तं शम्बरामरराजयोः ॥ ६२ ॥
एवं द्वन्द्वशतान्यासन्रथवारणवाजिनाम् ।
पदातीनां च भद्रं ते तव तेषां च सङ्कुले ॥ ६३ ॥
नैतादृशो दृष्टपूर्वः संग्रामो नैव च श्रुतः ।
द्रोणस्याऽभावभावे तु प्रसक्तानां यथाऽभवत् ॥ ६४ ॥
इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो ।
तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च ॥ ६५ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि द्वन्द्वयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

को विह्वल करने, भगाने, पीड़ित और नष्ट करने लगा। इस प्रकार विजयी होकर वह द्रोणाचार्य की ओर बढ़ा॥५८।६०॥तब राक्षसश्रेष्ठ अलम्बुष भी अत्यन्त क्रोध से बहुत से अस्त्र-शस्त्र बरसाकर और नाना प्रकार के मायायुद्ध करके घटोत्कच को रोकने लगा। पूर्व समय में शम्बरासुर और इन्द्र का जैसा घोर संग्राम हुआ था वैसा ही घोर संग्राम दोनों राक्षस करने लगे॥६१।६२॥हे राजेन्द्र! इस प्रकार सैकड़ों-सहस्रों रथी, घुड़सवार, पैदल और हाथीसवार योद्धा लोमहर्षण संग्राम करने लगे। हे महाराज! उस समय द्रोणाचार्य के वध के लिए जैसा घोर संग्राम हुआ था वैसा ही संग्राम पहले न कभी देखा गया और न सुना गया। उस समय रणभूमि में चारों ओर अनेक घोर विचित्र और रौद्र युद्ध होते हुए दिखाई पड़ने लगे॥६३।६५॥

—०—

द्रोणपर्व का पच्चीसवाँ अध्याय समाप्त हुआ ॥ २५ ॥

अथ षट्विंशोऽध्याय ॥ २६ ॥

धृतराष्ट्र उवाच—तेष्वेवं सन्निवृत्तेषु प्रत्युद्यातेषु भागशः ।
कथं युयुधिरे पार्था मामकाश्च तरस्विनः ॥ १ ॥
किमर्जुनश्चाऽप्यकरोत्संशप्तकबलं प्रति ।
संशप्तका वा पार्थस्य किमकुर्वत सञ्जय ॥ २ ॥
सञ्जय उवाच—तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागशः ।
स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ॥ ३ ॥
स नाग इव नागेन गोवृषेणेव गोवृषः ।
समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत् ॥ ४ ॥

छब्बीसवाँ अध्याय ॥ २६ ॥

धृतराष्ट्र ने पूछा—हे सञ्जय! सब योद्धा जब इस प्रकार रणभूमि में जाकर, परस्पर विभाग के अनुसार, द्वन्द्वयुद्ध करने लगे तब मेरे पक्ष के और पाण्डवों के पक्ष के वीरों ने कैसा युद्ध किया? उधर महावीर अर्जुन ने संशप्तकगण पर किस प्रकार आक्रमण किया और संशप्तकगण ने उनका किस प्रकार सामना किया?॥१।२॥सञ्जय ने कहा—हे महाराज! सुनिए, दोनों सेनाओं के योद्धाओं ने जब इस प्रकार अपने-

स युद्धकुशलः पार्थो बाहुवीर्येण चाऽन्वितः ।
अभिनत्कुञ्जरानीकमचिरेणैव मारिष ॥ ५ ॥
ते गजा गिरिसङ्काशाः क्षरन्तः सर्वतो मदम् ।
भीमसेनस्य नाराचैर्विमुखा विमदीकृताः ॥ ६ ॥
विधमेदभ्रजालानि यथा वायुः समुद्धतः ।
व्यधमत्तान्यनीकानि तथैव पवनात्मजः ॥ ७ ॥
स तेषु विसृजन्बाणान्भीमो नागेष्वशोभत ।
भुवनेष्विव सर्वेषु गभस्तीनुदितो रविः ॥ ८ ॥
ते भीमबाणाभिहताः संस्यूता विबभुर्गजाः ।
गभस्तिभिरिवाऽर्कस्य व्योम्नि नानाबलाहकाः ॥ ९ ॥
तथा गजानां कदनं कुर्वाणमनिलात्मजम् ।
क्रुद्धो दुर्योधनोऽभ्येत्य प्रत्यविध्याच्छितैः शरैः ॥ १० ॥
ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः ।
क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ॥ ११ ॥
स शराचितसर्वाङ्गः क्रुद्धो विव्याध पाण्डवम् ।
नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव ॥ १२ ॥
तस्य नागं मणिमयं रत्नचित्रध्वजे स्थितम् ।
भल्लाभ्यां कार्मुकं चैव क्षिप्रं चिच्छेद पाण्डवः ॥ १३ ॥
दुर्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष ।
चुक्षोभयिषुरभ्यागादङ्गो मातङ्गमास्थितः ॥ १४ ॥

अपने प्रतिद्वन्द्वी को छोड़कर युद्ध ठान दिया तब आपके ज्येष्ठ पुत्र दुर्योधन स्वयं हाथियों की सेना साथ लेकर भीमसेन का सामना करने पहुँचे। जैसे हाथी पर हाथी या साँड पर साँड आक्रमण करता है वैसे ही राजा दुर्योधन ने भीमसेन पर आक्रमण किया। समरनिपुण असाधारण भुजबलसम्पन्न वीर भीमसेन क्रोध करके हाथियों की सेना पर झपटकर टूट पड़े और स्फूर्ति के साथ हाथियों को मारने, गिराने तथा भगाने लगे॥३।५॥पर्वताकार बड़े-बड़े हाथी भीमसेन के लोहमय बाणों के प्रहार से छिन्न-भिन्न होकर, मद-हीन होकर, इधर-उधर भागने लगे। मेघमण्डल जैसे आँधी के वेग से नष्ट-भ्रष्ट हो जाता है वैसे ही वे हाथी भीमसेन के प्रहार से पीड़ित होकर भागने लगे। सूर्यदेव उदय होकर जैसे भूमण्डल पर अपनी किरणें फैलाते हैं वैसे ही भीमसेन हाथियों पर बाणों की वर्षा करने लगे। उनके बाणप्रहार से हाथियों के शरीर फट-फटकर रक्त से भीग गये। सूर्य की किरणों से लाल सन्ध्या-काल के आकाश में शोभायमान मेघों के समान वे हाथी दिखाई पड़ने लगे॥६।९॥भीमसेन को इस प्रकार हाथियों की सेना का नाश करते देखकर दुर्योधन अत्यन्त क्रोध से उन पर बाण चलाने लगे। महाबाहु भीमसेन के नेत्र क्रोध से लाल हो रहे थे। वे दुर्योधन के प्राण लेने के लिए उनको तीक्ष्ण बाण मारने लगे। भीम के बाणों से दुर्योधन का शरीर फट-फट

तमापतन्तं नागेन्द्रमम्बुदप्रतिमस्वनम् ।
कुम्भान्तरे भीमसेनो नाराचैरार्दयत्कृशम् ॥ १५ ॥
तस्य कायं विनिर्भिद्य न्यमज्जद्धरणीतले ।
ततः पपात द्विरदो वज्राहत इवाऽचलः ॥ १६ ॥
तस्याऽऽवर्जितनागस्य म्लेच्छस्याऽधः पतिष्यतः ।
शिरश्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः ॥ १७ ॥
तस्मिन्निपतिते वीरे सम्प्राद्रवत सा चमूः ।
सम्भ्रान्ताश्वद्विपरथा पदातीनवमृद्नती ॥ १८ ॥
तेष्वनीकेषु भग्नेषु विद्रवत्सु समन्ततः ।
प्राग्ज्योतिषस्ततो भीमं कुञ्जरेण समाद्रवत् ॥ १९ ॥
येन नागेन मघवानजयद्दैत्यदानवान् ।
तदन्वयेन नागेन भीमसेनमुपाद्रवत् ॥ २० ॥
स नागप्रवरो भीमं सहसा समुपाद्रवत् ।
चरणाभ्यामथो द्वाभ्यां संहतेन करेण च ॥ २१ ॥
व्यावृत्तनयनः क्रुद्धः प्रमथन्निव पाण्डवम् ।
वृकोदररथं साश्वमविशेषमचूर्णयत् ॥ २२ ॥
पद्भ्यां भीमोऽप्यथो धावंस्तस्य गात्रेष्वलीयत ।
जानन्नञ्जलिकावेधं नाऽपाक्रामत पाण्डवः ॥ २३ ॥
गात्राभ्यन्तरगो भूत्वा करेणाऽताडयन्मुहुः ।
लालयामास तं नागं वधाकांक्षिणमव्ययम् ॥ २४ ॥

---

गया । वे क्रोध मे विह्वल होकर भीमसेन पर, सूर्य की किरणों के समान चमकीले, बाण चलाने लगे । महाबाहु भीमसेन ने क्रुद्ध होकर दो भल्ल बाणों से स्फूर्ति के साथ दुर्योधन की ध्वजा मे स्थित चिह्न जो मणिमय रत्नखचित नाग था उसे, और दुर्योधन के हाथ के धनुष को, काट डाला । तब दुर्योधन को भीमसेन के बल से अत्यन्त पीडित देखकर अङ्गराज हाथी पर बैठकर भीमसेन की ओर झपटे । महावीर भीमसेन ने अङ्गाधिपति के हाथी को मेघ की तरह गरजते आते देखकर उसके मस्तक पर तीक्ष्ण बाण मारे । भीमसेन का चलाया हुआ एक बाण हाथी को फाड़ता हुआ पृथ्वी में प्रवेश हो गया । वह हाथी वज्राघात से फटे हुए पर्वत की तरह पृथ्वी [illegible] पड़ा । उसके गिरते ही अङ्गाधिपति पृथ्वी पर [illegible] गिरते सँभल गये, किन्तु इसी मध्य में [illegible] स्फूर्ति के साथ एक भल्ल बाण से उनका [illegible] डाला । महावीर अङ्गराज की मृत्यु पर [illegible] चारों ओर भागने लगी । हाथी, घोड़े [illegible] योद्धा इधर उधर भाग खड़े हुए । उनके [illegible] गये सहस्रों पैदल सिपाही विना आई [illegible] ॥१४।१८॥ हे महाराज ! तब सेना [illegible] ओर भागने लगी तब प्राग्ज्योतिषपुर [illegible] अपना हाथी बढ़ाकर वेग से [illegible] वह हाथी इन्द्र के उस ऐरावत [illegible]

कुलालचक्रवन्नागस्तदा तूर्णमथाऽभ्रमत् ।
नागायुतबलः श्रीमान्कालयानो वृकोदरम् ॥ २५ ॥
भीमोऽपि निष्क्रम्य ततः सुप्रतीकाग्रतोऽभवत् ।
भीमं करेणाऽवनम्य जानुभ्यामभ्यताडयत् ॥ २६ ॥
ग्रीवायां वेष्टयित्वैनं स गजो हन्तुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्वा व्यमोचयत् ॥ २७ ॥
पुनर्गात्राणि नागस्य प्रविवेश वृकोदरः ।
यावत्प्रतिगजायातं स्वबले प्रत्यवैक्षत ॥ २८ ॥
भीमोऽपि नागगात्रेभ्यो विनिःसृत्याऽपयाज्जवात् ।
ततः सर्वस्य सैन्यस्य नादः समभवन्महान् ॥ २९ ॥
अहो धिङ् निहतो भीमः कुञ्जरेणेति मारिष ।
तेन नागेन सन्त्रस्ता पाण्डवानामनीकनी ॥ ३० ॥
सहसाऽभ्यद्रवद्राजन्यत्र तस्थौ वृकोदरः ।
ततो युधिष्ठिरो राजा हतं मत्वा वृकोदरम् ॥ ३१ ॥
भगदत्तं सपाञ्चाल्यः सर्वतः समवारयत् ।
तं रथं रथिनां श्रेष्ठाः परिवार्य परन्तपाः ॥ ३२ ॥
अवाकिरञ्छरैस्तीक्ष्णैः शतशोऽथ सहस्रशः ।
सविघातं पृषत्कानामंकुशेन समाहरन् ॥ ३३ ॥
गजेन पाण्डुपञ्चालान्व्यधमत्पर्वतेश्वरः ।
तदद्भुतमपश्याम भगदत्तस्य संयुगे ॥ ३४ ॥

था, जिस पर बैठकर इन्द्र ने दैत्य-दानवों को जीता था। क्रोध के मारे लाल-लाल नेत्र फाड़कर, दोनों पाँव उठाकर, सूँड़ सिकोड़कर वह गजराज भीमसेन की ओर इस प्रकार चला मानों उनको भस्म ही कर देगा। उसने उनके रथ और घोड़ों को चूर-चूर कर डाला॥१९।२२॥महावीर भीमसेन को अञ्जलिक वेध-विद्या प्रतीत थी। इससे वे पैदल हो जाने पर भी जहाँ के तहाँ खड़े रहे। जब हाथी समीप पहुँच गया तब भीमसेन झपटकर उस हाथी के ही तले छिप गये। मार डालने की घात में लगे हुए उस हाथी को वे हाथ के प्रहार से पीड़ित करके खिझाने लगे। वह हाथी, उन्हें पकड़ने के लिए, उनके पीछे कुम्हार के चाक की तरह चक्कर काटने लगा और भीमसेन उसी की आड़ में चारों ओर घूमने लगे॥२३।२५॥ इसके पश्चात् दस सहस्र मस्त हाथियों का बल रखने-वाले भीमसेन, उस हाथी की आड़ छोड़कर, सन्मुख आ गये। गजराज अवसर पाकर, सूँड़ से भीमसेन की गर्दन लपेटकर, दोनों घुटनों से उन्हें गिराकर मार डालने को तैयार हुआ। तब उन्होंने चटपट सूँड़ की लपेट से अपने को छुड़ा लिया। अब वे फिर उसी की ओट में छिपकर उसके आक्रमण की राह देखने लगे। इसके पश्चात् महाबली भीमसेन उस हाथी की आड़ से निकलकर वेग से दूसरी ओर चले गये॥२६।२९॥इसी समय सेना के सब लोग

तथा वृद्धस्य चरितं कुञ्जरेण विशाम्पते ।
ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् ॥ ३५ ॥
तिर्यग्यातेन नागेन समदेनाऽऽशुगामिना ।
तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः ॥ ३६ ॥
सपक्षयोः पर्वतयोर्यथा सद्रुमयोः पुरा ।
प्राग्ज्योतिषपतेर्नागः सन्निवृत्याऽपसृत्य च ॥ ३७ ॥
पार्श्वे दशार्णाधिपतेर्भित्वा नागमपातयत् ।
तोमरैः सूर्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः ॥ ३८ ॥
जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ।
व्यवच्छिद्य तु राजानं भगदत्तं युधिष्ठिरः ॥ ३९ ॥
रथानीकेन महता सर्वतः पर्यवारयत् ।
स कुञ्जरस्थो रथिभिः शुशुभे सर्वतोवृतः ॥ ४० ॥
पर्वते वनमध्यस्थो ज्वलन्निव हुताशनः ।
मण्डलं सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम् ॥ ४१ ॥
किरतां शरवर्षाणि स नागः पर्यवर्तत ।
ततः प्राग्ज्योतिषो राजा परिगृह्य महागजम् ॥ ४२ ॥
प्रेषयामास सहसा युयुधानरथं प्रति ।
शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः ॥ ४३ ॥

"हाय ! धिक्कार है हमें ! भीमसेन को गजराज ने मार डाला !" कह कहकर चिल्लाने लगे। इस चिल्लाहट से पाण्डवों की सेना ऐसी पीड़ित हुई कि सब लोग भागकर वहाँ पहुँचे जहाँ भीमसेन खड़े हुए थे ॥२९।३१॥ हे राजेन्द्र ! इधर राजा युधिष्ठिर भीमसेन को हाथी के आक्रमण से मरा हुआ जानकर बहुत ही शोकाकुल हुए। वे उसी समय धृष्टद्युम्न को साथ लेकर भगदत्त के सम्मुख पहुँचे और चारों ओर से भगदत्त को घेरकर उन पर सहस्र सहस्र अत्यन्त तीक्ष्ण बाण बरसाने लगे। भगदत्त ने अंकुश के द्वारा ही उन बाणों को व्यर्थ करके, हाथी को प्रहार से उत्तेजित करके, दम भर में पाण्डवों और पाञ्चालों की बहुत सी सेना नष्ट भ्रष्ट कर दी। हे राजेन्द्र ! हम लोगों ने रणभूमि में वृद्ध राजा भगदत्त और उनके हाथी का अद्भुत पराक्रम देखा, उसे देखकर हमें बड़ा ही विस्मय हुआ॥३१।३५॥इसी समय दशार्ण देश के नरेश शीघ्रगामी पार्श्वगामी मदमत्त हाथी पर बैठकर वेग के साथ राजा भगदत्त के सम्मुख युद्ध के लिए आये। पूर्व समय में भीमरूप, परदार और वृक्षों से शोभित पर्वत जैसे परस्पर टकराते थे वैसे ही वे दोनों वीर प्राणों का मोह छोड़कर घोर युद्ध करने लगे। प्राग्ज्योतिषपति महाराज भगदत्त के गजराज ने आगे बढ़कर, फिर पीछे हटकर, घूमकर बड़े वेग से दशार्णपति के हाथी की पसलियों में टक्कर मारकर उसे हटा दिया। इसी मध्य में भगदत्त ने सूर्य की किरण के समान चमकीले सात पैने तोमर अपने शत्रु दशार्णपति को और उनके हाथी को उस प्रहार से दशार्णपति का आसन विचलित हो उठा॥३५।३९॥ उधर धर्मराज युधिष्ठिर ने रथसेना साथ लेकर भगदत्त को चारों ओर से घेर लिया। हाथी पर बैठे महावीर

अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत् ।
बृहतः सैन्धवानश्वान्समुत्थाप्याऽथ सारथिः ॥ ४४ ॥
तस्थौ सात्यकिमासाद्य सम्प्लुतस्तं रथं प्रति ।
स तु लब्ध्वाऽन्तरं नागस्त्वरितो रथमण्डलात् ॥ ४५ ॥
निश्चक्राम ततः सर्वान्परिचिक्षेप पार्थिवान् ।
ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः ॥ ४६ ॥
तमेकं द्विरदं संख्ये मेनिरे शतशो द्विपान् ।
ते गजस्थेन काल्यन्ते भगदत्तेन पाण्डवाः ॥ ४७ ॥
ऐरावतस्थेन यथा देवराजेन दानवाः ।
तेषां प्रद्रवतां भीमः पाञ्चालानामितस्ततः ॥ ४८ ॥
गजवाजिकृतः शब्दः सुमहान्समजायत ।
भगदत्तेन समरे काल्यमानेषु पाण्डुषु ॥ ४९ ॥
प्राग्ज्योतिषमभिक्रुद्धः पुनर्भीमः समभ्ययात् ।
तस्याऽभिद्रवतो वाहान्हस्तमुक्तेन वारिणा ॥ ५० ॥
सिक्त्वा व्यत्रासयन्नागस्तं पार्थमहरंस्ततः ।
ततस्तमभ्यात्तूर्णं रुचिपर्वाऽऽकृतीसुतः ॥ ५१ ॥
समभ्यञ्छरवर्षेण रथस्थोऽन्तकसन्निभः ।
ततः स रुचिपर्वाणं शरेणाऽनतपर्वणा ॥ ५२ ॥
सुपर्वा पर्वतपतिर्निन्ये वैवस्वतक्षयम् ।
तस्मिन्निपतिते वीरे सौभद्रो द्रौपदीसुतः ॥ ५३ ॥

भगदत्त उन रथों से घिरकर पर्वत के ऊपर जङ्गल में प्रज्वलित अग्नि के समान शोभायमान हुए। चारों ओर से मण्डल बाँधकर सब रथी भगदत्त के ऊपर बाणों की निरन्तर वर्षा करने लगे। परन्तु भगदत्त उनके मध्य में बेखटके डटे रहे। इसके उपरान्त युद्धदुर्मद प्राग्ज्योतिषपुर के राजा भगदत्त ने अपने हाथी को सात्यकि के रथ के पास पहुँचाया। गजराज ने सात्यकि के रथ को सूँड़ से लपेटकर दूर फेंक दिया, जिससे रथ के टुकड़े-टुकड़े हो गये। सात्यकि स्फूर्ति के साथ रथ से पृथ्वी पर कूदकर वहाँ से भाग खड़े हुए॥३९।४४॥उनका सारथी भी सिन्धु देश के, घोड़ों की रास छोड़कर उनके पीछे ही भाग गया। अब वह गजराज उस रथों के घेरे से बाहर निकलकर राजाओं को मारने, फेंकने और रथों को तोड़ने-फोड़ने लगा। उस शीघ्रगामी हाथी के आक्रमण से राजा लोग ऐसे व्याकुल और शङ्कित हो गये कि उन्हें उस एक हाथी के सैकड़ों रूप दिखाई देने लगे ॥४४।४६॥राजा भगदत्त जब अपने हाथी की सहायता से पाण्डवों और पाञ्चालों की सेना को नष्ट-भ्रष्ट करने लगे तब सब सैनिक सिलसिला तोड़ करके इधर-उधर भागने लगे। उस समय हाथियों और घोड़ों के चिल्लाने का घोर आर्त्तनाद सुनाई पड़ने लगा॥४६।४९॥हे महाराज! तब महावीर भीमसेन फिर भगदत्त के सन्मुख आये। भगदत्त का हाथी

चोकितानो धृष्टकेतुर्युयुत्सुश्चाऽर्दयन्द्विपम् ।
त एनं शरधाराभिर्धाराभिरिव तोयदाः ॥ ५४ ॥
सिंहनादेन महता नदन्तो जिघांसवः ।
ततः पार्ष्ण्यंकुशांगुष्ठैः कृतिना चोदितो द्विपः ॥ ५५ ॥
प्रसारितकरः प्रायात्स्तब्धकर्णेक्षणोद्रुतम् ।
सोऽधिष्ठाय पदा वाहान्युयुत्सोः सूतमारुजत् ॥ ५६ ॥
युयुत्सुस्तु रथाद्राजन्नपाक्रामत्त्वरान्वितः ।
ततः पाण्डवयोधास्ते नागराजं शरैर्द्रुतम् ॥ ५७ ॥
सिंहनादेन महता नदन्तो जिघांसवः ।
पुत्रस्तु तव सम्भ्रान्तः सौभद्रस्याऽऽप्लुतो रथम् ॥ ५८ ॥
स कुञ्जरस्थो विसृजन्निषूनरिषु पार्थिवः ।
बभौ रश्मीनिवाऽऽदित्यो भुवनेषु समुत्सृजन् ॥ ५९ ॥
तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः ।
त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः ॥ ६० ॥
सोऽतियत्नार्पितैर्बाणैराचितो द्विरदो बभौ ।
संस्यूत इव सूर्यस्य रश्मिभिर्जलदो महान् ॥ ६१ ॥
नियन्तुः शिल्पयत्नाभ्यां प्रेरितोऽरिशरार्दितः ।
परिचिक्षेप तान्नागः स रिपून्सव्यदक्षिणम् ॥ ६२ ॥
गोपाल इव दण्डेन यथा पशुगणान्वने ।
आवेष्टयत तां सेनां भगदत्तस्तथा मुहुः ॥ ६३ ॥

---

सूँड से फेंके हुए मद से भीमसेन के वाहनों को भय-विह्वल करने लगा। भीमसेन के रथ के घोड़े रथ को लिये वेगपूर्वक भाग खड़े हुए। उस समय राजा कृती के पुत्र रुचिपर्वा रथ पर बैठकर बाण बरसाते हुए साक्षात् काल की तरह भीमसेन के पीछे दौड़ा॥४९।५२॥ पहाड़ी देश के राजा सुपर्वा ने नतपर्व तीक्ष्ण बाण मारकर रुचिपर्वा को मार गिराया। वीर रुचिपर्वा के मारे जाने पर महावीर अभिमन्यु, द्रौपदी के पाँचों पुत्र, चेकितान, धृष्टकेतु और युयुत्सु, ये सब उस हाथी को मार डालने के लिए भयानक सिंहनाद के साथ जलधारा की तरह निरन्तर तीक्ष्ण बाण बरसाते हुए उसे व्यथित करने लगे॥५३।५५॥ तब रणनिपुण महावीर भगदत्त ने पार्ष्णि, अंकुश और अंगूठे के प्रहार से उत्तेजित करके उस हाथी को आगे बढ़ाया। भगदत्त के द्वारा सञ्चालित वह भयानक हाथी सूँड़ फैलाकर, कानों और नेत्रों को संकुचित करके, बड़े वेग से चला। उसने आक्रमण करके युयुत्सु के सारथी और वाहनों को नष्ट कर दिया। महावीर युयुत्सु ने स्फूर्ति के साथ रथ से कूदकर अपनी जान बचाई। उनके भागने पर पाण्डवपक्ष के वीरगण अत्यन्त भयङ्कर सिंहनाद करते हुए तीक्ष्ण बाणों की वर्षा से उस गजराज को घायल करने लगे॥५६।५८॥ हे राजेन्द्र! उस समय आपके पुत्र स्फूर्ति के साथ बड़े वेग से अभिमन्यु के रथ की ओर

क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः ।
बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ॥ ६४ ॥
स नागराजः प्रवरांकुशाहतः पुरा सपक्षोऽद्रिवरो यथा नृप ।
भयं तदा रिपुषु समादधद्भृशं वणिग्जनानां क्षुभितो यथार्णवः ॥ ६५ ॥
ततो ध्वनिर्द्विरदरथाश्वपार्थिवैर्भयाद् द्रवद्भिर्जनितोऽतिभैरवः ।
क्षितिं वियद्द्यां विदिशो दिशस्तथा समावृणोत्पार्थिवसंयुगे ततः ॥ ६६ ॥
स तेन नागप्रवरेण पार्थिवो भृशं जगाहे द्विषतामनीकिनीम् ।
पुरा सुगुप्तां विबुधैरिवाहवे विरोचनो देववरूथिनीमिव ॥ ६७ ॥
भृशं ववौ ज्वलनसखो वियद्रजः समावृणोन्मुहुरपि चैव सैनिकान् ।
तमेकनागं गणशो यथा गजान्समन्ततो द्रुतमथ मेनिरे जनाः ॥ ६८ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि भगदत्तयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

चले। हे राजेन्द्र ! अब महावीर भगदत्त हाथी के ऊपर से शत्रुओं पर बाण बरसाते हुए वैसे ही शोभायमान हुए जैसे अपनी किरणें फैलाते हुए सूर्यदेव उदय पर्वत पर शोभा को प्राप्त होते हैं। उधर अभिमन्यु ने बारह, युयुत्सु ने दस, द्रौपदी के पाँचों पुत्रों ने और धृष्टकेतु ने तीन-तीन बाण मारकर उस गजराज को विह्वल और घायल कर दिया। इन वीरों ने बड़े यत्न और कौशल से उस हाथी को जो बाण मारे, उनसे वह सूर्य की किरणों से शोभित मेघ के समान जान पड़ा॥५८।६१॥इसके पश्चात् अंकुश से सञ्चालित वह भयङ्कर हाथी कुपित होकर अपने दाहने-बायें भाग की सेना को रौंदकर, सूँड़ से पटक-पटक कर, नष्ट करने लगा। चरवाहा जैसे बन में डण्डे से पशुओं को पीटता है वैसे ही वीर भगदत्त बाणों से पाण्डवों की सेना को बारम्बार ताड़ित करने लगे। बाज के आक्रमण से चिल्लाते हुए कौओं के समान पाण्डवों की सेना चिल्ला करके भाग गई। हुई॥६२।६४॥हे महाराज ! उस समय भगदत्त का मस्त हाथी अंकुश की चोट से उत्तेजित होकर परदार पर्वत की तरह बड़े वेग से रणभूमि में विचरने लगा। जहाज पर बैठे हुए सौदागर जैसे अपने आस-पास समुद्र में तूफान उठने वाली दारुण लहरें देखकर शङ्कित और व्याकुल होते हैं वैसे ही शत्रुपक्ष के योद्धा लोग उस गजराज को देखकर व्याकुल हो उठे। भयभीत होकर भागते हुए हाथी, घोड़े, रथी और पैदल आदि के कोलाहल से पृथ्वीमण्डल, आकाशमण्डल और सब दिशाओं के मण्डल गूँज उठे। जैसे पूर्व समय में दानवपति विरोचन ने सुरक्षित सुरसेना में प्रवेश होकर हलचल डाल दी थी वैसे ही हाथी सहित वीर भगदत्त ने शत्रुसेना के भीतर प्रवेश होकर हलचल मचा दी। धरती की धूल वायु के साथ आकाशमण्डल में छा गई। सब सेना उस अँधेरे से ढक गई। सैनिकों को वह एक ही हाथी, वेग से भ्रमण, करने के कारण, अनेक रूप सा प्रतीत होने लगा॥६५।६८॥

द्रोणपर्व का छब्बीसवाँ अध्याय समाप्त हुआ ॥ २६ ॥

अथ सप्तविंशोऽध्याय ॥ २७ ॥

सञ्जय उवाच—यन्मां पार्थस्य संग्रामे कर्माणि परिपृच्छसि ।
तच्छृणुष्व महाबाहो पार्थो यदकरोद्रणे ॥ १ ॥
रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिःस्वनम् ।
भगदत्ते विकुर्वाणे कौन्तेयः कृष्णमब्रवीत् ॥ २ ॥

यथा प्राग्जोतिषो राजा गजेन मधुसूदन ।
त्वरमाणो विनिष्क्रान्तो ध्रुवं तस्यैष निःस्वनः ॥ ३ ॥
इन्द्रादनवरः संख्ये गजयानविशारदः ।
प्रथमो गजयोधानां पृथिव्यामिति मे मतिः ॥ ४ ॥
स चापि द्विरदश्रेष्ठः सदाऽऽप्रतिगजो युधि ।
सर्वशस्त्रातिगः संख्ये कृतवर्मा जितक्लमः ॥ ५ ॥
सहः शस्त्रनिपातानामग्निस्पर्शस्य चाऽनघ ।
स पाण्डवबलं सर्वमद्यैको नाशयिष्यति ॥ ६ ॥
न चाऽऽवाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुम् ।
त्वरमाणस्ततो याहि यतः प्राग्जोतिषाधिपः ॥ ७ ॥
दृप्तं संख्ये द्विपबलाद्वयसा चापि विस्मितम् ।
अथैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिम् ॥ ८ ॥
वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः ।
दीर्यते भगदत्तेन यत्र पाण्डववाहिनी ॥ ९ ॥
तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः ।
संशप्तकाः समारोहन्सहस्राणि चतुर्दश ॥ १० ॥
दशैव तु सहस्राणि त्रिगर्त्तानां महारथाः ।
चत्वारि च सहस्राणि वासुदेवस्य चाऽनुगाः ॥ ११ ॥

सत्ताईसवाँ अध्याय ॥ २७ ॥

सञ्जय कहते हैं — हे महाराज ! आप मुझसे अर्जुन के युद्धकौशल का वृत्तान्त पूछते हैं, सो मैं वर्णन करता हूँ, सुनिए । अर्जुन ने युद्धभूमि में भगदत्त की विविध क्रियाओं से उठनेवाली विकट धूल देखकर और सैनिकों का कोलाहल सुनकर वासुदेव से कहा— हे केशव ! महावीर भगदत्त न जाने अपने सूर्ती हाथी को लेकर युद्ध के मैदान में आये हैं । उसी से पीड़ित होकर सब सैनिक लोग चिल्ला रहे और भाग रहे हैं । महाराज भगदत्त का हाथी बड़ा विकट है और वे स्वयं भी इन्द्र के समान पराक्रमी हैं । हाथी पर से युद्ध करनेवाले जितने योद्धा पृथ्वी पर हैं, उन सबमें भगदत्त श्रेष्ठ हैं ॥१।४॥ उनके हाथी के बराबर कोई दूसरा हाथी नहीं है । वह हाथी लोह-मय कवच से सुरक्षित, कभी न थकनेवाला, अस्त्र-शस्त्र के प्रहार और अग्नि-स्पर्श को सहनेवाला है । उसे अस्त्र से नष्ट करना असम्भव नहीं तो दुःसाध्य अवश्य है । मेरी समझ में यह अकेला हाथी ही आज हमारी सेना को नष्ट कर देगा । मेरे और आपके अतिरिक्त और कोई भगदत्त तथा उनके हाथी को रोक नहीं सकता । इसलिए अब आप शीघ्रता के साथ मेरा रथ भगदत्त के सन्मुख ले चलिए । अपने हाथी के बल से और अपनी अवस्था तथा बाहुबल से अहङ्कारी भगदत्त को मैं आज स्वर्ग भेजकर इन्द्र का प्रिय अतिथि बनाऊँगा॥५।८॥हे राजेन्द्र ! अर्जुन के ये वचन सुनकर महात्मा श्रीकृष्ण ने रथ को भगदत्त की ओर हाँक दिया । [महावीर अर्जुन जब भगदत्त

दीर्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष ।
आहूयमानस्य च तैरभवद्धृदयं द्विधा ॥ १२ ॥
किं नु श्रेयस्करं कर्म भवेद्येति चिन्तयन् ।
इह वा विनिवर्त्तेयं गच्छेयं वा युधिष्ठिरम् ॥ १३ ॥
तस्य बुद्ध्या विचार्यैवमर्जुनस्य कुरूद्वह ।
अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ॥ १४ ॥
स सन्निवृत्तः सहसा कपिप्रवरकेतनः ।
एको रथसहस्राणि निहन्तुं वासवी रणे ॥ १५ ॥
सा हि दुर्योधनस्याऽऽसीन्मतिः कर्णस्य चोभयोः ।
अर्जुनस्य वधोपाये तेन द्वैधमकल्पयत् ॥ १६ ॥
स तु दोलायमानोऽभूद् द्वैधीभावेन पाण्डवः ।
वधेन तु नराग्र्याणामकरोत्तां मृषा तदा ॥ १७ ॥
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
असृजन्नर्जुने राजन्संशप्तकमहारथाः ॥ १८ ॥
नैव कुन्तीसुतः पार्थो नैव कृष्णो जनार्दनः ।
न हया न रथो राजन्दृश्यन्ते स्म शरैश्चिताः ॥ १९ ॥
तदा मोहमनुप्राप्तः सिष्विदे हि जनार्दनः ।
ततस्तान्प्रायशः पार्थो ब्रह्मास्त्रेण निजघ्निवान् ॥ २० ॥
शतशः पाणयश्छिन्नाः सेषुज्यातलकार्मुकाः ।
केतवो वाजिनः सूता रथिनश्चाऽपतन्क्षितौ ॥ २१ ॥

के साथ युद्ध करने के अभिप्राय से उधर चले ] तब महारथी त्रिगर्तदेशीय दस सहस्र और श्रीकृष्ण के अनुचर चार सहस्र, इस प्रकार चौदह सहस्र संशप्तकगण युद्ध के लिए ललकारते हुए अर्जुन के पीछे चले॥९।११॥इधर भगदत्त सब सेना का संहार कर रहे थे और उधर संशप्तकगण युद्ध के लिए ललकार रहे थे। इस दुहरे सङ्कट में पड़ने से अर्जुन का हृदय हिंडोले के समान दोनों ओर डोलने लगा। वे यह सोचकर बहुत व्याकुल हुए कि अब क्या करना उचित है। यहाँ से लौटकर संशप्तकगण से युद्ध करूँ, अथवा युधिष्ठिर को बचाने के लिए भगदत्त से जाकर भिड़ूँ ! हे महाराज ! बहुत देर सोचकर अन्त को वीर अर्जुन ने संशप्तकों को ही मारने का निश्चय किया। वे उन्हीं की ओर लौट पड़े॥१२।१५॥ अर्जुन का वध करने के लिए महावीर दुर्योधन और कर्ण ने ही सम्मति करके यह उपाय निकाला था कि एक ओर संशप्तकगण युद्ध करें और दूसरी ओर भगदत्त युद्ध करें। किन्तु वीर श्रेष्ठ अर्जुन ने पहले चिन्ता में पड़कर अन्त को संशप्तकवध का ही निश्चय करके उस कौशल को व्यर्थ कर दिया। उस समय महावीर संशप्तकगण पराक्रमी अर्जुन के ऊपर चारों ओर से तीक्ष्ण असंख्य बाण बरसाने लगे। उनके बाण सब दिशाओं में व्याप्त हो गये। उन बाणों के मध्य अर्जुन, श्रीकृष्ण, घोड़े और रथ सब अदृश्य हो गये। संशप्तक-

द्रुमाचलाग्राम्बुधरैः समकायाः सुकल्पिताः ।
हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ॥ २२ ॥
विप्रविद्धकुथा नागाश्छिन्नभाण्डाः परासवः ।
सारोहास्तु रणे पेतुर्मथिता मार्गणैर्भृशम् ॥ २३ ॥
सर्ष्टिप्रासासिनखराः समुद्गरपरश्वधाः ।
विच्छिन्नबाहवः पेतुर्नृणां भल्लैः किरीटिना ॥ २४ ॥
बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष ।
सञ्छिन्नान्यर्जुनशरैः शिरांस्युर्व्यां प्रपेदिरे ॥ २५ ॥
जज्वालाऽलङ्कृता सेना पत्रिभिः प्राणिभोजनैः ।
नानारूपैस्तदाऽमित्रान्क्रुद्धे निघ्नति फाल्गुने ॥ २६ ॥
क्षोभयन्तं तदा सेनां द्विरदं नलिनीमिव ।
धनञ्जयं भूतगणाः साधुसाध्वित्यपूजयन् ॥ २७ ॥
दृष्ट्वा तत्कर्म पार्थस्य वासवस्येव माधवः ।
विस्मयं परमं गत्वा प्राञ्जलिस्तमुवाच ह ॥ २८ ॥
कर्मैतत्पार्थ शक्रेण यमेन धनदेन च ।
दुष्करं समरे यत्ते कृतमद्येति मे मतिः ॥ २९ ॥
युगपच्चैव संग्रामे शतशोऽथ सहस्रशः ।
पतिता एव मे दृष्टाः संशप्तकमहारथाः ॥ ३० ॥
संशप्तकांस्ततो हत्वा भूयिष्ठा ये व्यवस्थिताः ।
भगदत्ताय याहीति कृष्णं पार्थोऽभ्यनोदयन् ॥ ३१ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि संशप्तकवधे सप्तविंशोऽध्यायः ॥ २७ ॥

गण के उस अद्भुत पराक्रम को देखकर कृष्णचन्द्र विमुग्ध हो उठे । उन्हें इस प्रकार मोहित और पसीने से तर देखकर अर्जुन ने ब्रह्मास्त्र छोड़ा । उस ब्रह्मास्त्र से प्रायः सभी संशप्तकगण नष्टप्राय हो गये ॥ १६।२० ॥ सैकड़ों-सहस्रों बाण, धनुष, डोरियाँ, हाथ पैर, ध्वजाएँ, घोड़े, सारथी और रथी छिन्न भिन्न होकर पृथ्वी पर गिरने लगे । जिनके शरीर वृक्ष, पर्वत और मेघ के समान देख पड़ते थे ऐसे सहस्रों सुसज्जित, सवारों और महावतों से युक्त पीठवाले बड़े-बड़े हाथी अर्जुन के बाणों से नष्ट होकर पृथ्वी पर गिरने लगे । अर्जुन के बाणों से हाथियों की झूलें कट गईं, मस्तक फट गये और वे मरकर अपने सवारों सहित धरती पर धमाधम गिरने लगे । अर्जुन के भल्ल बाणों से कटे हुए और ऋष्टि, प्रास, खड्ग, मुद्गर, परशु आदि शस्त्रों से शोभित वीरों के हाथ पृथ्वी पर गिर गये ॥ २१।२४ ॥ बालसूर्य, कमल और चन्द्रमण्डल के समान योद्धाओं के मस्तक वीर अर्जुन के बाणों से कट-कटकर पृथ्वी पर गिरने लगे । महावीर अर्जुन कुपित होकर जब इस प्रकार शत्रुसेना का संहार करने लगे तब शत्रुपक्ष के योद्धा लोग उनके प्राणनाशक बाणों से अत्यन्त पीड़ित हुए । कमलवन को दलित करनेवाले गजराज की तरह महावीर अर्जुन की सेना

का संहार करते देखकर शत्रु-मित्र सब उनकी प्रशंसा करने लगे। महामति श्रीकृष्ण अर्जुन को इन्द्र के सदृश अद्भुत कर्म करते देखकर विस्मयपूर्वक हाथ जोड़कर उनसे कहने लगे—हे धनञ्जय! आज समरभूमि में तुमने जैसा अद्भुत कार्य किया है वह, मेरी समझ में, इन्द्र, यम, वरुण, कुबेर आदि लोकपालों के लिए भी दुष्कर है। तुमने एकसाथ सैंकड़ों-सहस्रों वीर संशप्तकों का संहार कर डाला, यह कम आश्चर्य की बात नहीं है। इस प्रकार बहुसंख्यक संशप्तकगण को विनष्ट करके महावीर अर्जुन ने श्रीकृष्ण से राजा भगदत्त की ओर रथ ले चलने के लिए कहा॥२५।३१॥

—०—

द्रोणपर्व का सत्ताईसवाँ अध्याय समाप्त हुआ॥ २७॥

अथ अष्टाविंशोऽध्यायः॥ २८॥

सञ्जय उवाच—यियासतस्ततः कृष्णः पार्थस्याऽश्वान्मनोजवान्।
सम्प्रैषीद्धेमसञ्छन्नान्द्रोणानीकाय सन्त्वरन्॥ १॥
तं प्रयान्तं कुरुश्रेष्ठं स्वान्भ्रातॄन्द्रोणतापितान्।
सुशर्मा भ्रातृभिः सार्धं युद्धार्थी पृष्ठतोऽन्वयात्॥ २॥
ततः श्वेतहयः कृष्णमब्रवीदजितं जयः।
एष मां भ्रातृभिः सार्धं सुशर्माऽऽह्वयतेऽच्युत॥ ३॥
दीर्यते चोत्तरेणैव तत्सैन्यं मधुसूदन।
द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम्॥ ४॥
किं नु संशप्तकान्हन्मि स्वान्रक्षाम्यहितार्दितान्।
इति मे त्वं मतं वेत्सि तत्र किं सुकृतं भवेत्॥ ५॥
एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्त्तयत्।
येन त्रिगर्त्ताधिपतिः पाण्डवं समुपाह्वयत्॥ ६॥
ततोऽर्जुनः सुशर्माणं विध्वा सप्तभिराशुगैः।
ध्वजं धनुश्चाऽस्य तथा क्षुराभ्यां समकृन्तत॥ ७॥
त्रिगर्त्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः।
साश्वं ससूतं परितः पार्थः प्रैषीद्यमक्षयम्॥ ८॥

अट्ठाईसवाँ अध्याय॥ २८॥

सञ्जय कहते हैं—हे महाराज! महामति श्रीकृष्ण ने अर्जुन की इच्छा के अनुसार सुवर्णभूषित तेज घोड़ों को द्रोणाचार्य की सेना के सम्मुख चलाया। द्रोणाचार्य के बाणों से पीड़ित अपने भाइयों की सहायता और रक्षा के लिए महारथी अर्जुन चले। इसी समय महावीर सुशर्मा अपने भाइयों के साथ अर्जुन से युद्ध करने के लिए उनके पीछे दौड़े॥१।२॥ तब अर्जुन ने श्रीकृष्ण से कहा—हे शत्रुदमन! वह देखिए, अपने भाइयों सहित सुशर्मा युद्ध के लिए मुझे ललकार रहा है। उधर उत्तर ओर आचार्य अपने तीक्ष्ण बाणों से हमारी सेना को मारकर भगा रहे हैं। संशप्तकगण ने इस प्रकार मेरे मन को दुहरे सङ्कट में डाल रक्खा है। अब आप ही विचार करके मुझसे कहिए कि इस समय मेरा क्या कर्तव्य है? [पहले

ततो भुजगसङ्काशां सुशर्मा शक्तिमायसीम् ।
चिक्षेपाऽर्जुनमादिश्य वासुदेवाय तोमरम् ॥ ९ ॥
शक्तिं त्रिभिः शरैश्छित्वा तोमरं त्रिभिरर्जुनः ।
सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्त्तयत् ॥ १० ॥
तं वासवमिवाऽऽयान्तं भूरिवर्षं शरौघिणम् ।
राजंस्तावकसैन्यानां नोग्रं कश्चिदवारयत् ॥ ११ ॥
ततो धनञ्जयो बाणैः सर्वानेव महारथान् ।
आयाद्विनिघ्नन्कौरव्यान्दहन्कक्षमिवाऽनलः ॥ १२ ॥
तस्य वेगमसह्यं तं कुन्तीपुत्रस्य धीमतः ।
नाऽशक्नुवंस्ते संसोढुं स्पर्शमग्नेरिव प्रजाः ॥ १३ ॥
संवेष्टयन्ननीकानि शरवर्षेण पाण्डवः ।
सुपर्णपातवद्राजन्नायात्प्राग्ज्योतिषं प्रति ॥ १४ ॥
यत्तदाऽनामयज्जिष्णुर्भरतानामपापिनाम् ।
धनुः क्षेमकरं संख्ये द्विषतामश्रुवर्धनम् ॥ १५ ॥
तदेव तव पुत्रस्य राजन्दुर्द्यूतदेविनः ।
कृते क्षत्रविनाशाय धनुरायच्छदर्जुनः ॥ १६ ॥
तथा विक्षोभ्यमाणा सा पार्थेन तव वाहिनी ।
व्यशीर्यत महाराज नौरिवाऽऽसाद्य पर्वतम् ॥ १७ ॥
ततो दशसहस्राणि न्यवर्त्तन्त धनुष्मताम् ।
मतिं कृत्वा रणे क्रूरां वीरा जयपराजये ॥ १८ ॥

संशप्तकगण का संहार करूँ, या द्रोणाचार्य गुरु के बाणों से पीड़ित अपनी सेना की रक्षा करूँ ?॥३।५॥ श्रीकृष्ण ने अर्जुन के वचन सुनकर त्रिगर्तनरेश सुशर्मा की ओर रथ हाँक दिया। उस समय रणप्रिय अर्जुन ने सात बाणों से सुशर्मा को घायल करके उनकी ध्वजा और धनुष को काट डाला और फिर छः बाणों से उनके घोड़े, सारथी और भाई को मार डाला॥६।८॥ यह देखकर महावीर सुशर्मा ने क्रोध से विह्वल होकर अर्जुन के ऊपर भयानक सर्पाकार लोहमय शक्ति और श्रीकृष्ण के ऊपर तीक्ष्ण तोमर का प्रहार किया। अर्जुन ने तीन बाणों से उस शक्ति और तोमर को काट डाला और बाण-वर्षा से सुशर्मा को मूर्च्छित करके वे निरन्तर बाण छोड़ते हुए आगे बढ़े। कौरव-सेना के वीरों में से कोई भी उन्हें रोक नहीं सका॥९।११॥ हे महाराज! महारथी अर्जुन अपने बाणों से बड़े-बड़े वीरों को मारकर सूखे वन को जलानेवाली अग्नि के समान रणभूमि में आगे बढ़े। सैनिक लोग अर्जुन के अग्निस्पर्श-सदृश दारुण बाणों के वेग को सहने में असमर्थ हो उठे। महावीर अर्जुन अपने बाणों से सैनिकों का इस प्रकार संहार करके गरुड़ की तरह बड़े वेग से भगदत्त के सम्मुख चले॥१२।१४॥ उस समय युद्धविजयी अर्जुन कपट-द्यूत रचनेवाले दुरात्मा दुर्योधन के दोष से होनेवाले क्षत्रिय-संहार के लिए, पाण्डवों के लिए कल्याणप्रद और

व्यपेतहृदयत्रासा आवव्रुस्तं महारथाः ।
आर्च्छत्पार्थो गुरुं भारं सर्वभारसहो युधि ॥ १९ ॥
यथा नलवनं क्रुद्धः प्रभिन्नः षष्टिहायनः ।
मृद्गीयात्तद्वदायस्तः पार्थोऽमृद्नाच्चमूं तव ॥ २० ॥
तस्मिन्प्रमथिते सैन्ये भगदत्तो नराधिपः ।
तेन नागेन सहसा धनञ्जयमुपाद्रवत् ॥ २१ ॥
तं रथेन नरव्याघ्रः प्रत्यगृह्णाद्धनञ्जयः ।
स सन्निपातस्तुमुलो बभूव रथनागयोः ॥ २२ ॥
कल्पिताभ्यां यथाशास्त्रं रथेन च गजेन च ।
संग्रामे चेरतुर्वीरौ भगदत्तधनञ्जयौ ॥ २३ ॥
ततो जीमूतसङ्काशान्नागादिन्द्र इव प्रभुः ।
अभ्यवर्षच्छरौघेण भगदत्तो धनञ्जयम् ॥ २४ ॥
स चापि शरवर्षं तं शरवर्षेण वासविः ।
अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्यवान् ॥ २५ ॥
ततः प्राग्ज्योतिषो राजा शरवर्षं निवार्य तत् ।
शरैर्जघ्ने महाबाहुं पार्थं कृष्णं च मारिष ॥ २६ ॥
ततस्तु शरजालेन महताऽभ्यवकीर्य तौ ।
चोदयामास तं नागं वधायाऽच्युतपार्थयोः ॥ २७ ॥
तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवाऽन्तकम् ।
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः ॥ २८ ॥

शत्रुओं की आँखों से शोक के आँसू बहानेवाले, गाण्डीव धनुष को हाथ में लिये हुए थे। कौरव-सेना के योद्धा लोग अर्जुन के बाणों से विह्वल होकर और भागकर, पर्वत से टकराई हुई नाव की तरह, विपत्ति-ग्रस्त होने लगे॥१५।१७॥उस समय क्रूरमति दस सहस्र कौरव-सेना के योद्धा, जय-पराजय के लिए दृढ़ निश्चय करके, अर्जुन को युद्ध के लिए बेधड़क ललकारने लगे। सब प्रकार की विपत्तियों को सहनेवाले अर्जुन, जैसे कोई गजराज कमलवन में प्रवेश करके उसे दलमल डाले वैसे ही, शत्रु-सेना के भीतर प्रवेश होकर उसे नष्ट-भ्रष्ट करने लगे॥१८।२०॥ कौरवपक्ष के सैनिक लोग इस प्रकार जब अर्जुन के बाणों से मारे जाने लगे तब महारथी भगदत्त क्रुद्ध होकर, उसी गजराज पर बैठकर, अर्जुन की ओर वेग से चले। पुरुषसिंह अर्जुन ने रथ पर बैठकर उन पर आक्रमण किया। रथ और हाथी पर से उन दोनों वीरों का घोर संग्राम होने लगा। महावीर भगदत्त सुशिक्षित हाथी पर और महारथी अर्जुन सुसज्जित रथ पर बैठकर अपना-अपना कौशल दिखाते रणभूमि में विचरने लगे॥२१।२३॥महारथी भगदत्त मेघसदृश मत्त मातङ्ग के ऊपर से इन्द्र की भाँति अर्जुन के ऊपर निरन्तर बाणों की वर्षा करने लगे। युद्धविद्या-विशारद अर्जुन ने भी अपने बाणों से मध्य राह में भगदत्त के बाणों को काट करके उन पर बाण

सम्प्राप्तमपि नेयेष परावृत्तं महाद्विपम् ।
सारोहं मृत्युसात्कर्तुं स्मरन्धर्मं धनञ्जयः ॥ २९ ॥
स तु नागो द्विपरथान्हयांश्चाऽऽमृद्य मारिष ।
प्राहिणोन्मृत्युलोकाय ततः क्रुद्धो धनञ्जयः ॥ ३० ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि भगदत्तयुद्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

बरसाने लगे। प्राग्ज्योतिषपुर के राजा भगदत्त अनायास ही अर्जुन के बाणों को काटकर सिंहनाद करते हुए कई प्रकार के बाणों से अर्जुन और श्रीकृष्ण जी को पीड़ित करके उन्हें मार डालने की अभिलाषा से हाथी को आगे बढ़ाने लगे। महामति श्रीकृष्ण, यम के समान भयङ्कर भगदत्त के हाथी को आते देखकर, शीघ्र रथ को लिये उसके दक्षिण पार्श्व में हट गये। महावीर अर्जुन चाहते तो इस सुयोग में उस हाथी और उसके सवार भगदत्त को पीछे से मार डालते, किन्तु उन्होंने युद्ध के धर्म का विचार करके ऐसा नहीं किया। उस समय भगदत्त का भयानक हाथी कुपित होकर राह में पड़नेवाले असंख्य पैदलों, हाथियों, घोड़ों और रथों को रौंदने और तोड़ने-फोड़ने लगा। यह देखकर अर्जुन को बड़ा क्रोध चढ़ आया। उन्होंने उसे मार डाला॥२५।३०॥

—०—

द्रोणपर्व का अट्ठाईसवाँ अध्याय समाप्त हुआ ॥ २८ ॥

अथ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

धृतराष्ट्र उवाच – तथा क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः ।
प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथम् ॥ १ ॥

सञ्जय उवाच – प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ ।
मृत्युदंष्ट्रान्तिकं प्राप्तौ सर्वभूतानि मेनिरे ॥ २ ॥
तथा तु शरवर्षाणि पातयत्यनिशं प्रभो ।
गजस्कन्धान्महाराज कृष्णयोः स्यन्दनस्थयोः ॥ ३ ॥
अथ कार्ष्णायसैर्बाणैः पूर्णकार्मुकनिःसृतैः ।
अविध्यद्देवकीपुत्रं हेमपुङ्खैः शिलाशितैः ॥ ४ ॥
अग्निस्पर्शसमास्तीक्ष्णा भगदत्तेन चोदिताः ।
निर्भिद्य देवकीपुत्रं क्षितिं जग्मुः सुवाससः ॥ ५ ॥

उनतीसवाँ अध्याय ॥ २९ ॥

धृतराष्ट्र ने कहा— हे सञ्जय ! अर्जुन ने इस प्रकार कुपित होकर भगदत्त का क्या किया ? और भगदत्त ने ही उनका क्या किया ? इस वृत्तान्त का वर्णन विस्तार के साथ करो॥१॥सञ्जय ने कहा— हे महाराज ! महारथी अर्जुन और श्रीकृष्ण जब भगदत्त के सम्मुख पहुँचे तब सबने समझ लिया कि ये दोनों अब मृत्यु के मुख में जाने से नहीं बच सकेंगे। महावीर भगदत्त हाथी पर बैठे बैठे श्रीकृष्ण और अर्जुन के ऊपर निरन्तर बाण बरसाने लगे। वे अपना धनुष चढ़ाकर, कानों तक खींचकर, सुवर्ण-पुङ्ख-भूषित, शिला पर घिसकर तीक्ष्ण बनाये गये बाणों से श्रीकृष्ण के मर्मस्थलों को पीड़ा पहुँचाने लगे। भगदत्त के चलाये हुए अग्निस्पर्शी बाण श्रीकृष्ण के शरीर को भेदकर पृथ्वी में प्रवेश होने लगे॥२।

तस्य पार्थो धनुश्छित्त्वा परिवारं निहत्य च ।
लालयन्निव राजानं भगदत्तमयोधयत् ॥ ६ ॥
सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान्वै चतुर्दश ।
अप्रेषयत्सव्यसाची द्विधैकैकमथाऽच्छिनत् ॥ ७ ॥
ततो नागस्य तद्वर्म व्यधमत्पाकशासनिः ।
शरजालेन महता तद्व्यशीर्यत भूतले ॥ ८ ॥
शीर्णवर्मा स तु गजः शरैः सुभृशमार्दितः ।
बभौ धारानिपाताक्तो व्यभ्रः पर्वतराडिव ॥ ९ ॥
ततः प्राग्ज्योतिषः शक्तिं हेमदण्डामयस्मयीम् ।
व्यसृजद्वासुदेवाय द्विधा तामर्जुनोऽच्छिनत् ॥ १० ॥
ततश्छत्रं ध्वजं चैव छित्त्वा राज्ञोऽर्जुनः शरैः ।
विव्याध दशभिस्तूर्णमुत्स्मयन्पर्वतेश्वरम् ॥ ११ ॥
सोऽतिविद्धोऽर्जुनशरैः सुपुङ्खैः कङ्कपत्रिभिः ।
भगदत्तस्ततः क्रुद्धः पाण्डवस्य जनाधिपः ॥ १२ ॥
व्यसृजत्तोमरान्मूर्ध्नि श्वेताश्वस्योन्ननाद च ।
तैरर्जुनस्य समरे किरीटं परिवर्त्तितम् ॥ १३ ॥
परिवृत्तं किरीटं तद्यमयन्नेव पाण्डवः ।
सुदृष्टः क्रियतां लोक इति राजानमब्रवीत् ॥ १४ ॥
एवमुक्तस्तु संक्रुद्धः शरवर्षेण पाण्डवम् ।
अभ्यवर्षत्सगोविन्दं धनुरादाय भास्वरम् ॥ १५ ॥

४॥उस समय महारथी अर्जुन ने भगदत्त का धनुष काटकर उनकी रक्षा करनेवालों को मार डाला। अब वे उनके साथ खेल खेलने की तरह युद्ध करने लगे। रण-निपुण भगदत्त ने अर्जुन के ऊपर अत्यन्त तीक्ष्ण चौदह तोमर चलाये। उनके चलाये हुए प्रत्येक तोमर के अर्जुन ने तीन-तीन टुकड़े कर डाले॥५।७॥ इसके पश्चात् भगदत्त के हाथी का कवच भी देखते ही देखते अपने बाणों से काट गिराया। अर्जुन के बाणों से कवच कट जाने पर उनके प्रहारों से वह महागजराज अत्यन्त-व्यथित हो उठा और जलधाराओं से स्नान किये हुए मेघहीन पर्वतराज की तरह शोभायमान हुआ। तब प्राग्ज्योतिष के राजा भगदत्त ने श्रीकृष्ण को लोहमय सुवर्णदण्डभूषित शक्ति मारी। रणनिपुण अर्जुन ने उसी समय स्फूर्ति के साथ उस शक्ति को बाणों से दो जगह से काट डाला। इसके पश्चात् भगदत्त के छत्र और ध्वजा को काटकर उनके अङ्गों में दस बाण मारे॥८।११॥अर्जुन के पङ्खपत्र-शोभित तीक्ष्ण बाणों से बुरी तरह घायल होने के कारण भगदत्त को बड़ा क्रोध चढ़ आया। वे अर्जुन के मस्तक पर अमल्य तोमर फेंककर बड़े जोर से सिंहनाद करने लगे। भगदत्त के बाणों से अर्जुन के सिर पर का किरीट मुकुट पलट गया। महावीर अर्जुन ने उस उलटे हुए किरीट को उचित रीति से रखकर भगदत्त से कहा—हे प्राग्ज्योतिषेश्वर!

तस्य पार्थो धनुश्छित्वा तूणीरान्सन्निकृत्य च ।
त्वरमाणो द्विसप्तत्या सर्वमर्मस्वताडयत् ॥ १६ ॥
विद्धस्ततोऽतिव्यथितो वैष्णवास्त्रमुदीरयन् ।
अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत्पाण्डवोरसि ॥ १७ ॥
विसृष्टं भगदत्तेन तदस्त्रं सर्वघाति वै ।
उरसा प्रतिजग्राह पार्थं सञ्छाद्य केशवः ॥ १८ ॥
वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि ।
पद्मकोशविचित्राढ्या सर्वर्तुकुसुमोत्कटा ॥ १९ ॥
ज्वलनार्केन्दुवर्णाभा पावकोज्ज्वलपल्लवा ।
तया पद्मपलाशिन्या वातकम्पितपत्रया ॥ २० ॥
शुशुभेऽभ्यधिकं शौरिरतसीपुष्पसन्निभः ।
ततोऽर्जुनः क्लान्तमनाः केशवं प्रत्यभाषत ॥ २१ ॥
अयुध्यमानस्तुरगान्संयन्ताऽस्मीति चाऽनघ ।
इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि ॥ २२ ॥
यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे ।
ततस्त्वयैवं कार्यं स्यान्न तत्कार्यं मयि स्थिते ॥ २३ ॥
सबाणः सधनुश्चाऽहं ससुरासुरमानुषान् ।
शक्तो लोकानिमाञ्जेतुं तच्चाऽपि विदितं तव ॥ २४ ॥
ततोऽर्जुनं वासुदेवः प्रत्युवाचाऽर्थवद्वचः ।
शृणु गुह्यमिदं पार्थ पुरावृत्तं यथाऽनघ ॥ २५ ॥

तुम अब इस समय सब लोगों को एक बार सदा के लिए अच्छी प्रकार देखलो; (क्योंकि अब तुम्हारी मृत्यु का समय आ गया है )॥१२।१४॥अर्जुन के इन वचनों को सुनकर महारथी भगदत्त अत्यन्त क्रोध में व्याकुल हो, चमकीला धनुष हाथ में लेकर, अर्जुन और श्रीकृष्ण के ऊपर निरन्तर तीक्ष्ण बाण बरसाने लगे। उस समय रणविशारद अर्जुन ने बड़ी स्फूर्ति से भगदत्त का धनुष और तरकस काटकर बहत्तर बाणों से उनके मर्मस्थलों को छेद डाला। अर्जुन के तीक्ष्ण बाणों से मर्मस्थलों में अत्यन्त पीड़ित होने के कारण भगदत्त को बड़ा क्रोध हो आया। तब उन्होंने अर्जुन की छाती ताककर वैष्णव अस्त्र छोड़ा। महात्मा श्रीकृष्ण ने, अर्जुन की रक्षा करने के लिए, वह सर्वघाती अमोघ वैष्णवास्त्र अपनी छाती पर रोक लिया। [ श्रीकृष्ण की आड़ में आ जाने से अर्जुन बच गये। ] वह वैष्णवास्त्र श्रीकृष्ण के वक्षस्थल में वैजयन्ती माला के रूप में स्थित हुआ॥१५।२१॥ उस समय महावीर अर्जुन ने अत्यन्त क्लेश पाकर श्रीकृष्ण से कहा—हे मधुसूदन! आपने प्रतिज्ञा की थी कि 'मैं युद्ध नहीं करूँगा, केवल अर्जुन का रथ हाँकूँगा।' फिर इस समय आपने अपनी उस प्रतिज्ञा को क्यों तोड़ दिया? मैं यदि विपत्ति या प्राण-सङ्कट में पड़ा हुआ होता अथवा शत्रु का सामना करने में असमर्थ होता तो आप युद्ध कर सकते थे। किन्तु

चतुर्मूर्त्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥ २६ ॥
एका मूर्त्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी ॥ २७ ॥
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ।
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकम् ॥ २८ ॥
याऽसौ वर्षसहस्रान्ते मूर्त्तिरुत्तिष्ठते मम ।
वरार्हेभ्यो वराञ्श्रेष्ठांस्तस्मिन्काले ददाति सा ॥ २९ ॥
तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा ।
अयाचत वरं यन्मां नरकार्थाय तच्छृणु ॥ ३० ॥
देवानां दानवानां च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ ३१ ॥
एवं वरमहं श्रुत्वा जगत्यास्तनये तदा ।
अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा ॥ ३२ ॥
अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे ।
नरकस्याऽभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥ ३३ ॥
अनेनाऽस्त्रेण ते गुप्तः सुतः परबलार्दनः ।
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ ३४ ॥
तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी ।
स चाऽप्यासीद् दुराधर्षो नरकः शत्रुतापनः ॥ ३५ ॥

मेरे जीवित रहते युद्ध करना कदापि आपका कर्तव्य नहीं है। आपसे यह छिपा हुआ नहीं है कि गाण्डीव धनुष लेकर मैं देवता, दैत्य, मनुष्य आदि सहित सब लोकों को परास्त कर सकता हूँ॥२२।२४॥तब श्रीकृष्ण ने कहा—हे अर्जुन ! मैं तुमसे एक बहुत ही गुप्त प्राचीन वृत्तान्त कहता हूँ, सुनो। मैंने लोकों का हित और रक्षा करने के लिए अपनी मूर्ति को चार अंशों में विभक्त किया है। उन चार मूर्तियों में एक मूर्ति पृथ्वी पर तपस्या करती है, दूसरी मूर्ति जगत् के उचित और अनुचित कर्मों का निरीक्षण करती है, तीसरी मूर्ति मनुष्यलोक में उत्पन्न होकर मनुष्यों के कार्य का साधन करती है और चौथी मूर्ति सहस्र वर्ष की निद्रा के सुख का अनुभव करती है॥२५।२८॥सहस्र वर्ष के पश्चात् वह चौथी मूर्ति जागकर वरदान के योग्य व्यक्तियों को श्रेष्ठ वर देती है। उस समय पृथ्वी ने, मेरे वरदान के समय को जानकर, अपने पुत्र नरकासुर के लिए मुझसे जो वर माँगा था, सो सुनो॥२९।३०॥पृथ्वी ने मुझसे कहा—हे नारायण ! आपके वर से मेरा पुत्र नरकासुर वैष्णव अस्त्र को प्राप्त करके दानव और दैत्य दोनों के हाथ से न मारा जा सके। मैंने कहा— हे पृथ्वी ! यह वैष्णव अस्त्र नरकासुर की रक्षा के लिए अमोघ हो। इसके प्रभाव से नरकासुर को कोई नहीं मार सकेगा तुम्हारा पुत्र इस अमोघ दिव्य अस्त्र से सुरक्षित रहने

तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् ।
नाऽस्याऽवध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ३६ ॥
तन्मया त्वत्कृते चैतदन्यथा व्यपनामितम् ।
विमुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ ३७ ॥
वैरिणं जहि दुर्धर्षं भगदत्तं सुरद्विषम् ।
यथाऽहं जघ्निवान्पूर्वं हितार्थं नरकं तथा ॥ ३८ ॥
एवमुक्तस्तदा पार्थः केशवेन महात्मना ।
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ॥ ३९ ॥
ततः पार्थो महाबाहुरसम्भ्रान्तो महामनाः ।
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ॥ ४० ॥
स समासाद्य तं नागं बाणो वज्र इवाऽचलम् ।
अभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ॥ ४१ ॥
स करी भगदत्तेन प्रेर्यमाणो मुहुर्मुहुः ।
न करोति वचस्तस्य दरिद्रस्येव योषिता ॥ ४२ ॥
स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ ।
नदन्नार्तस्वनं प्राणानुत्ससर्ज महाद्विपः ॥ ४३ ॥
ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
अयं महत्तरः पार्थ पलितेन समावृतः ॥ ४४ ॥
वलीसञ्छन्ननयनः शूरः परमदुर्जयः ।
अक्ष्णोरुन्मीलनार्थाय बद्धपट्टो ह्यसौ नृपः ॥ ४५ ॥

के कारण सब लोकों के लिए दुराधर्ष और शत्रुसेना का संहार करने में समर्थ होगा॥३१।३४॥हे अर्जुन! पृथ्वी मुझसे यह वर पाकर चली गई। तभी से नरकासुर बड़ा ही दुर्द्धर्ष हो उठा। महावीर प्राग्ज्योतिषपति भगदत्त ने उसी नरकासुर से यह अमोघ वैष्णवास्त्र प्राप्त किया था। त्रिलोक में इन्द्र, चन्द्र, रुद्र, वरुण आदि कोई ऐसा नहीं है, जिसका वध यह अस्त्र न कर सकता हो। इसी कारण मैंने अपनी प्रतिज्ञा की परवा न करके स्वयं इस अस्त्र के वेग को रोक लिया। देवद्वेषी महासुर भगदत्त इस समय उस वैष्णव अस्त्र से हीन हो गये हैं। अतएव जिस प्रकार मैंने नरकासुर को मारा था उसी प्रकार अब तुम इस दारुण शत्रु को नष्ट करो॥३५।३८॥महावीर अर्जुन ने यह सुनकर भगदत्त को मारने का निश्चय कर लिया। वे भगदत्त के ऊपर तीक्ष्ण बाण बरसाने लगे। अर्जुन ने धैर्य के साथ भगदत्त के हाथी को यमदण्ड-सदृश नाराच बाण मारा। सर्प जैसे बिल के भीतर प्रवेश होता है वैसे ही अर्जुन का चलाया हुआ वह वज्रसदृश नाराच बाण उस हाथी के मस्तक में प्रवेश हो गया॥३९।४१॥भगदत्त उस हाथी को बारम्बार अर्जुन की ओर चलाने लगे, किन्तु जैसे दरिद्री की स्त्री अपने पति की बातों पर ध्यान नहीं देती वैसे ही उस हाथी ने भी भगदत्त की चेष्टा पर ध्यान नहीं दिया। कुछ ही समय के पश्चात् उस हाथी का शरीर निश्चेष्ट

देववाक्यात्प्रचिच्छेद शरेण भृशमर्जुनः ।
छिन्नमात्रेंऽशुके तस्मिन्रुद्धनेत्रो बभूव सः ॥ ४६ ॥
तमोमयं जगन्मेने भगदत्तः प्रतापवान् ।
ततश्चन्द्रार्धबिम्बेन बाणेन नतपर्वणा ॥ ४७ ॥
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ।
स भिन्नहृदयो राजा भगदत्तः किरीटिना ॥ ४८ ॥
शरासनं शरांश्चैव गतासुः प्रमुमोच ह ।
शिरसस्तस्य विभ्रष्टं पपात च वरांशुकम् ।
नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ ४९ ॥
स हेममाली तपनीयभाण्डात्पपात नागाद्गिरिसन्निकाशात् ।
सुपुष्पितो मारुतवेगरुग्णो महीधराग्रादिव कर्णिकारः ॥ ५० ॥
निहत्य तं नरपतिमिन्द्रविक्रमं सखायमिन्द्रस्य तदैन्द्रिराहवे ।
ततोऽपरांस्तव जयकांक्षिणो नरान्बभञ्ज वायुर्बलवान्द्रुमानिव ॥ ५१ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि भगदत्तवधे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

हो गया और वह दाँतों के बल पृथ्वी पर गिरकर, चिल्ला-चिल्लाकर, मर गया॥४२।४३॥अर्जुनसे श्रीकृष्ण ने कहा कि इस राजा को वृद्ध अवस्था ने घेर रक्खा है। यह शूर है तो बड़ा बलवान् किन्तु इसकी पलकें इतनी लटक गई हैं कि आँखें खुली रखने के लिए इसने पलकों को पट्टी से बाँध रक्खा है॥४४।४५॥ यह सुनकर अर्जुन ने बाण से उस पट्टी को काट दिया; इससे भगदत्त की आखों पर पलकें गिर जाने के कारण वे कुछ भी देख न सके। अब अर्जुन ने अर्धचन्द्र बाण से भगदत्त का वक्ष स्थल फाड़ डाला। तब भगदत्त के हाथ से धनुष और बाण छूटकर गिर गये और उनका शरीर प्राणहीन होकर गिर पड़ा। सन्ताड़ित पद्म-नाल से जैसे पत्ते झड़ जाते हैं वैसे ही भगदत्त के मस्तक पर से बहुमूल्य पगड़ी गिर पड़ी॥४६।४९॥अच्छी प्रकार फूला हुआ कनेर का पेड़ जैसे उखड़कर पर्वत के ऊपर से गिर पड़े वैसे ही सुवर्णमाल्य-भूषित भगदत्त का शरीर सुवर्ण-भूषण-भूषित हाथी पर से पृथ्वी पर गिर पड़ा। उस समय महावीर अर्जुन इन्द्रतुल्य महाबली इन्द्र के सखा वीर भगदत्त को मारकर वैसे ही कौरव-सेना के वीरों का संहार करने लगे जैसे आँधी बड़े-बड़े वृक्षों को तोड़ती और उखाड़ती चली जाती है॥५०।५१॥

द्रोणपर्व का उनतीसवाँ अध्याय समाप्त हुआ ॥ २९ ॥

अथ त्रिंशोऽध्याय ॥ ३० ॥

सञ्जय उवाच — प्रियमिन्द्रस्य सततं सखायममितौजसम् ।
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्त्तत ॥ १ ॥

---

तीसवाँ अध्याय ॥ ३० ॥

सञ्जय कहते हैं—हे राजेन्द्र ! अर्जुन इस प्रकार इन्द्र के प्रिय सखा भगदत्त को मारकर रणभूमि में घूमने लगे। उस समय वृषक और अचल नामवाले दो गान्धारराज-नन्दन अर्जुन को, सन्मुख आकर,

ततो गान्धारराजस्य सुतौ परपुरञ्जयौ । 
अर्दंतामर्जुनं संख्ये भ्रातरौ वृषकाचलौ ॥ २ ॥
तौ समेत्याऽर्जुनं वीरौ पुरः पश्चाच्च धन्विनौ । 
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ॥ ३ ॥
वृषकस्य हयान्सूतं धनुश्छत्रं रथं ध्वजम् । 
तिलशो व्यधमत्पार्थः सौवलस्य शितैः शरैः ॥ ४ ॥
ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि । 
गान्धारानाकुलांश्चक्रे सौवलप्रमुखान्पुनः ॥ ५ ॥
ततः पञ्चशतान्वीरान्गान्धारानुद्यतायुधान् । 
प्राहिणोन्मृत्युलोकाय क्रुद्धो वाणैर्धनञ्जयः ॥ ६ ॥
हताश्वात्तु रथात्तूर्णमवतीर्य महाभुजः । 
आरुरोह रथं भ्रातुरन्यच्च धनुराददे ॥ ७ ॥
तावेकरथमारूढौ भ्रातरौ वृषकाचलौ । 
शरवर्षेण वीभत्सुमविध्येतां मुहुर्मुहुः ॥ ८ ॥
स्यालौ तव महात्मानौ राजानौ वृषकाचलौ । 
भृशं विजघ्नतुः पार्थमिन्द्रं वृत्रवलाविव ॥ ९ ॥
लब्धलक्षौ तु गान्धारावहतां पाण्डवं पुनः । 
निदाघवार्षिकौ मासौ लोकं घर्मांशुभिर्यथा ॥ १० ॥
तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ । 
संश्लिष्टाङ्गौ स्थितौ राजञ्जघानैकेषुणाऽर्जुनः ॥ ११ ॥

वाणवर्षा से पीड़ित करने लगे। कभी सन्मुख से और कभी पीछे से वे अर्जुन के ऊपर वेगगामी तीक्ष्ण वाण चलाने लगे, जिनसे उनका शरीर घायल हो गया॥१।३॥अर्जुन ने क्रुद्ध होकर क्षण भर में तीक्ष्ण वाणों से गान्धार देश के राजकुमार वृषक के रथ के सारथी और घोड़ों को मार डाला और उनके धनुष, ध्वजा, छत्र और रथ को छिन्न-भिन्न करके काट डाला। महारथी अर्जुन अनेक प्रकार के अस्त्रों और शस्त्रों से शकुनि आदि गान्धार देश के योद्धाओं को बारम्बार व्याकुल करने लगे। फिर अर्जुन ने कुपित होकर शस्त्र ताने हुए पाँच सौ गान्धारवीरों को क्षण भर में मार गिराया। वृषक बड़ी स्फूर्ति के साथ अपने बिना घोड़ा के रथ से कूदकर, भाई के रथ पर जाकर, दूसरा धनुष लेकर युद्ध करने लगे॥४।७॥वीर अर्जुन, एक ही रथ पर बैठे हुए, वृषक और अचल नाम के दोनों भाइयों को बारम्बार तीक्ष्ण वाण मारने लगे। पूर्व समय में जैसे वृत्रासुर और बलासुर ने इन्द्र पर प्रहार किये थे वैसे ही वे दोनों भाई अर्जुन को तीक्ष्ण वाणों से घेरने लगे। जैसे गर्मी और वर्षा ऋतु के दो-दो महीने ताप और जल के द्वारा मनुष्यों को अत्यन्त व्याकुल करते हैं वैसे ही वे दोनों वीर राजकुमार स्वयं प्रहारों से बचकर अर्जुन पर प्रहार करने लगे ॥८।१०॥इसके पश्चात् अर्जुन ने एक ही रथ पर बैठे हुए दोनों भाइयों को एक ही वाण से मार डाला।

तौ रथात्सिंहसङ्काशौ लोहिताक्षौ महाभुजौ ।
राजन्सम्पेततुर्वीरौ सोदर्यावेकलक्षणौ ॥ १२ ॥
तयोर्भूमिं गतौ देहौ रथाद्बन्धुजनप्रियौ ।
यशो दश दिशः पुण्यं गमयित्वा व्यवस्थितौ ॥ १३ ॥
दृष्ट्वा विनिहतौ संख्ये मातुलावपलायिनौ ।
भृशं मुमुचुरश्रूणि पुत्रास्तव विशाम्पते ॥ १४ ॥
निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः ।
कृष्णौ सम्मोहयन्मायां विदधे शकुनिस्ततः ॥ १५ ॥
लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः ।
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः ॥ १६ ॥
सकम्पनर्ष्टिनखरा मुसलानि परश्वधाः ।
क्षुराः क्षुरप्रणालीका वत्सदन्तास्थिसन्धयः ॥ १७ ॥
चक्राणि विशिखाः प्रासा विविधान्यायुधानि च ।
प्रपेतुः शतशो दिग्भ्यः प्रदिग्भ्यश्चाऽर्जुनं प्रति ॥ १८ ॥
खरोष्ट्रमहिषाः सिंहा व्याघ्राः सृमरचित्रकाः ।
ऋक्षाः शालावृका गृध्राः कपयश्च सरीसृपाः ॥ १९ ॥
विविधानि च रक्षांसि क्षुधितान्यर्जुनं प्रति ।
संक्रुद्धान्यभ्यधावन्त विविधानि वयांसि च ॥ २० ॥
ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः ।
विसृजन्निषुजालानि सहसा तान्यताडयत् ॥ २१ ॥

उसी समय वे सिंहतुल्य लाल-लाल नेत्रों वाले, एक ही रूप और आकार के, दोनों भाई मरकर रथ पर से गिर पड़े। अत्यन्त पवित्र वीर-यश को पृथ्वी पर सब ओर फैलाकर वे दोनों वीर स्वर्ग को सिधारे ॥११।१३॥ हे महाराज ! इसके पश्चात् आपके पुत्र-गण संग्राम से न हटनेवाले, बन्धुजनप्रिय, दोनों मातुलों को मरकर गिरते देखकर आँसू बहाने लगे। माया-निपुण शकुनि ने जब देखा कि उनके दोनों भाई मारे गये तब वे श्रीकृष्ण और अर्जुन को मोहित करने के लिए माया-युद्ध करने लगे। उस समय शकुनि की माया के प्रभाव से सब दिशाओं और विदिशाओं से अर्जुन के ऊपर लाठी, अयोगुड, पत्थर, शतघ्नी, गदा, बेलन, खड्ग, शूल, मुद्गर, पट्टिश, कम्पन, ऋष्टि, नखर, मुशल, परशु, क्षुर, क्षुरप्र, नालीक, वत्सदन्त, अस्थिसन्धि, चक्र, विशिख, प्रास और अन्यान्य बहुत से शस्त्रों की वर्षा होने लगी॥१४।१८॥ गधे, ऊँट, भैंसे, बाघ, सिंह, सृमर (एक प्रकार के मृग), चीते, रीछ, कुत्ते, गिद्ध, वानर, सर्प आदि बहुत से जीव भूख से व्याकुल और क्रोध से अन्धे होकर अर्जुन की ओर दौड़ते दिखाई पड़ने लगे। तब दिव्य अस्त्रों के जाननेवाले अर्जुन [अस्त्रों से अभिमन्त्रित] बाण चलाकर उन जीवों को नष्ट करने लगे। अर्जुन के बाणों से पीड़ित होकर भयानक चीत्कार करते हुए वे मर-मरकर यमपुर को जाने लगे॥१९।२१॥ अब बहुत

ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः ।
विरुवन्तो महारावान्विनेशुः सर्वतो हताः ॥ २२ ॥
ततस्तमः प्रादुरभूदर्जुनस्य रथं प्रति ।
तस्माच्च तमसो वाचः क्रूराः पार्थमभर्त्सयन् ॥ २३ ॥
तत्तमो भैरवं घोरं भयकर्तृ महाहवे ।
उत्तमास्त्रेण महता ज्यौतिषेणाऽर्जुनोऽवधीत् ॥ २४ ॥
हते तस्मिञ्जलौघास्तु प्रादुरासन्भयानकाः ।
अम्भसस्तस्य नाशार्थमादित्यास्त्रमथाऽर्जुनः ॥ २५ ॥
प्रायुंक्ताम्भस्ततस्तेन प्रायशोऽस्त्रेण शोषितम् ।
एवं बहुविधा मायाः सौबलस्य कृताः कृताः ॥ २६ ॥
जघानाऽस्त्रबलेनाऽऽशु प्रहसन्नर्जुनस्तदा ।
तदा हतासु मायासु त्रस्तोऽर्जुनशराहतः ॥ २७ ॥
अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा ।
ततोऽर्जुनोऽस्त्रविच्छ्रैष्ठ्यं दर्शयन्नात्मनोऽरिषु ॥ २८ ॥
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् ।
सा हन्यमाना पार्थेन तव पुत्रस्य वाहिनी ॥ २९ ॥
द्वैधीभूता महाराज गङ्गेवाऽऽसाद्य पर्वतम् ।
द्रोणमेवाऽन्वपद्यन्त केचित्तत्र नरर्षभाः ॥ ३० ॥
केचिद् दुर्योधनं राजन्नर्द्यमानाः किरीटिना ।
नाऽपश्याम ततस्त्वेनं सैन्ये वै रजसाऽऽवृते ॥ ३१ ॥

ही घना अँधेरा विस्तृत हो गया, जिसने अर्जुन के रथ को छिपा लिया। उस अँधेरे के भीतर से कठोर वाक्य कहकर अदृश्य जीव अर्जुन की भर्त्सना करने लगे। अर्जुन ने ज्योतिर्मय अस्त्र का प्रयोग करके तुरन्त ही उस भयङ्कर अँधेरे को दूर कर दिया। इसके पश्चात् भयानक जल के प्रवाह प्रकट हुए। अर्जुन ने वह जल सुखाने के लिए आदित्यास्त्र का प्रयोग किया। उस अस्त्र के प्रभाव से प्राय सब जल सूख गया॥२३।२६॥इसी प्रकार महावीर अर्जुन ने हँसते हँसते अस्त्रविद्या के बल से शकुनि की प्रकट की हुई सब मायाओं को नष्ट कर दिया। तब शकुनि अर्जुन के बाणप्रहार से पीडित होकर, बड़े स्फूर्तिशाली घोड़ोंवाले रथ पर बैठकर, कायरों की तरह रण छोड़कर भाग खड़े हुए॥२६।२८॥अब महाबाहु अर्जुन अपने हाथों की स्फूर्ति दिखाते हुए कौरव सेना पर बाण बरसाने लगे। जैसे गङ्गा का प्रवाह पर्वत से टकराकर दो धाराओं में बँट जाता है वैसे ही कौरव सेना अर्जुन के बाणों से पीड़ित होकर दो भागों में बँट गई। कुछ सेना आचार्य के समीप और कुछ सेना दुर्योधन के समीप चली गई। उस समय ऐसी धूल उड़ी कि अर्जुन को हम लोग देख नहीं पाते थे। केवल दक्षिण ओर निरन्तर गाण्डीव धनुष का घोर शब्द सुनाई पड़ रहा था। वह गाण्डीव का शब्द शङ्ख, दुन्दुभि और अन्य युद्ध के बाजों की

गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया ।
शङ्खदुन्दुभिनिर्घोषं वादित्राणां च निःस्वनम् ॥ ३२ ॥
गाण्डीवस्य तु निर्घोषो व्यतिक्रम्याऽस्पृशद्दिवम् ।
ततः पुनर्दक्षिणतः संग्रामश्चित्रयोधिनाम् ॥ ३३ ॥
सुयुद्धं चाऽर्जुनस्याऽऽसीदहं तु द्रोणमन्वियाम् ।
यौधिष्ठिराण्यनीकानि प्रहरन्ति ततस्ततः ॥ ३४ ॥
नानाविधान्यनीकानि पुत्राणां तव भारत ।
अर्जुनो व्यधमत्काले दिवीवाऽभ्राणि मारुतः ॥ ३५ ॥
तं वासवमिवाऽऽयान्तं भूरिवर्षं शरौघिणम् ।
महेष्वासा नरव्याघ्रा नोग्रं केचिदवारयन् ॥ ३६ ॥
ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशम् ।
स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः ॥ ३७ ॥
तेऽर्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः ।
शलभा इव सम्पेतुः संवृण्वाना दिशो दश ॥ ३८ ॥
तुरगं रथिनं नागं पदातिमपि मारिष ।
विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ॥ ३९ ॥
न च द्वितीयं व्यसृजत्कुञ्जराश्वनरेषु सः ।
पृथगेकशरा रुग्णा निपेतुस्ते गतासवः ॥ ४० ॥
हतैर्मनुष्यैर्द्विरदैश्च सर्वतः शराभिसृष्टैश्च हयैर्निपातितैः ।
तदाऽश्वगोमायुबलाभिनादितं विचित्रमायोधशिरो बभूव तत् ॥ ४१ ॥

ध्वनि से मिलकर आकाश में गूँज उठा॥२८।३३॥ हे महाराज ! उस समय दक्षिण ओर घोर संग्राम होने लगा । मैं द्रोणाचार्य के साथ था । धर्मराज युधिष्ठिर के वीर योद्धा कौरवपक्ष की सेना का संहार करने लगे । वर्षाकाल में वायु जैसे मेघों को छिन्न-भिन्न कर देती है वैसे ही अर्जुन अपने बाणों के प्रहार से शत्रुसेना को छिन्न-भिन्न करने और भगाने लगे ॥३३।३५॥ जल बरसाते हुए इन्द्र के समान बाणवर्षा करनेवाले अर्जुन को आते देखकर कोई भी वीर उन्हें नहीं रोक सका । अर्जुन के बाणों की चोट से अत्यन्त व्यथित होकर कौरवपक्ष के वीर ऐसे भागे कि भागते समय अपने ही पक्ष के लोगों को रौंदते-कुचलते आर मारते हुए चले जाते थे । अर्जुन के चलाये हुए कङ्कपत्रशोभित और शरीरों को फाटनेवाले बाण टीड़ियों की तरह चारों ओर फैलने और गिरने लगे ॥३५।३८॥ सर्प जैसे बिलों में प्रवेश होते हैं वैसे ही वे रक्त पनैले बाण घोड़ों, हाथियों, पैदलों और रथी लोगों के शरीरों को फोड़कर पृथ्वी में प्रवेश होते हुए दिखाई देते थे । अर्जुन अपनी प्रतिज्ञा के अनुसार हाथियों, घोड़ों और मनुष्यों को दूसरा बाण नहीं मारते थे; एक ही बाण लगने से वे जीव अत्यन्त व्यथित और प्राणहीन होकर पृथ्वी पर लोटने लगते थे । मरे हुए मनुष्यों, हाथियों और घोड़ों की लाशों से समरभूमि परिपूर्ण हो उठी । चारों ओर गीदड़ और कुत्ते कोला

पिता सुतं त्यजति सुहृद्वरं सुहृत्तथैव पुत्रः पितरं शरातुरः ।
स्वरक्षणे कृतमतयस्तदा जनास्त्यजन्ति वाहानपि पार्थपीडिताः ॥ ४२ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि शकुनिपलायने त्रिंशोऽध्याय ॥ ३० ॥

हल कर रहे थे। इस प्रकार वह युद्धभूमि अत्यन्त भयानक और अद्भुत दिखाई पड़ने लगी। पिता पुत्र को, पुत्र पिता को, मित्र मित्र को और स्वजन स्वजन को छोड़कर आत्मरक्षा के लिए यत्न कर रहा था। अधिक क्या कहें, लोग अपने-अपने वाहनों को भी छोड़कर भागे चले जा रहे थे॥३९,४२॥

द्रोणपर्व का तीसवाँ अध्याय समाप्त हुआ ॥ ३० ॥

अथ एकत्रिंशोऽध्याय. ॥ ३१ ॥

धृतराष्ट्र उवाच- तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय ।
चलितानां द्रुतानां च कथमासीन्मनो हि वः ॥ १ ॥
अनीकानां प्रभग्नानामवस्थानमपश्यताम् ।
दुष्करं प्रतिसन्धानं तन्ममाऽऽचक्ष्व सञ्जय ॥ २ ॥
सञ्जय उवाच - तथाऽपि तव पुत्रस्य प्रियकामा विशाम्पते ।
यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ॥ ३ ॥
समुद्यतेषु चाऽस्त्रेषु सम्प्राप्ते च युधिष्ठिरे ।
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ॥ ४ ॥
अन्तरं भीमसेनस्य प्रापतन्नमितौजसः ।
सात्यकेश्चैव वीरस्य धृष्टद्युम्नस्य वा विभो ॥ ५ ॥
द्रोणं द्रोणमिति क्रूराः पञ्चालाः समचोदयन् ।
मा द्रोणमिति पुत्रास्ते कुरून्सर्वानचोदयन् ॥ ६ ॥
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चाऽपरे ।
कुरूणां पाण्डवानां च द्रोणद्यूतमवर्त्तत ॥ ७ ॥
यं यं प्रमथते द्रोणः पञ्चालानां रथव्रजम् ।
तत्र तत्र तु पाञ्चाल्यो धृष्टद्युम्नोऽभ्यवर्तत ॥ ८ ॥

इकतीसवाँ अध्याय ॥ ३१ ॥

धृतराष्ट्र ने कहा—हे सञ्जय ! जिस समय कौरव सेना छिन्न भिन्न हो गई और तुम लोग रणभूमि छोड़कर भागने लगे उस समय तुम लोगों की क्या दशा हुई ? छिन्न-भिन्न होकर इधर-उधर भागती और शरणस्थान को न देखती हुई सेना को संभालना और एकत्र करना बहुत ही दुष्कर होता है। मेरे पक्ष के सेनापति ने यह कार्य कैसे किया ? तुम सब वृत्तान्त विस्तार के साथ मुझ से कहो ॥१।२॥ सञ्जय ने कहा—हे महाराज ! साधारण सैनिक लोग जब वे सिलसिले भाग खड़े हुए तब भी महाराज दुर्योधन का प्रिय और अपने यश की रक्षा करने के निमित्त श्रेष्ठ वीरगण द्रोणाचार्य के पीछे चले। अस्त्र-शस्त्र तन गये, युधिष्ठिर अपने योद्धाओं के साथ युद्धभूमि में उपस्थित हुए और भयानक युद्ध होने

तथा भागविपर्यासैः संग्रामे भैरवे सति ।
वीराः समासदन्वीरान्कुर्वन्तो भैरवं रवम् ॥ ९ ॥
अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः ।
अकम्पयन्ननीकानि स्मरन्तः क्लेशमात्मनः ॥ १० ॥
ते त्वमर्षवशं प्राप्ता ह्रीमन्तः सत्त्वचोदिताः ।
त्यक्त्वा प्राणान्न्यवर्त्तन्त घ्नन्तो द्रोणं महाहवे ॥ ११ ॥
अयसामिव सम्पातः शिलानामिव चाऽभवत् ।
दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम् ॥ १२ ॥
न तु स्मरन्ति संग्राममपि वृद्धास्तथाविधम् ।
दृष्टपूर्वं महाराज श्रुतपूर्वमथापि वा ॥ १३ ॥
प्राकम्पतेव पृथिवी तस्मिन्वीरावसादने ।
निवर्तता बलौघेन महता भारपीडिता ॥ १४ ॥
घूर्णतोऽपि बलौघस्य दिवं स्तब्ध्वेव निःस्वनः ।
अजातशत्रोस्तत्सैन्यमाविवेश सुभैरवः ॥ १५ ॥
समासाद्य तु पाण्डूनामनीकानि सहस्रशः ।
द्रोणेन चरता संख्ये प्रभग्ना निशितैः शरैः ॥ १६ ॥
तेषु प्रमथ्यमानेषु द्रोणेनाऽद्भुतकर्मणा ।
पर्यवारयदासाद्य द्रोणं सेनापतिः स्वयम् ॥ १७ ॥
तदद्भुतमभूद्युद्धं द्रोणपाञ्चालयोस्तथा ।
नैव तस्योपमा काचिदिति मे निश्चिता मतिः ॥ १८ ॥

लगा। उस समय आपके पक्ष के वीर योद्धा लोग निर्भय अद्भुत कर्म करके अपना पराक्रम प्रकट करने लगे। कौरवपक्ष के महापराक्रमी वीर अवसर पाकर भीमसेन, सात्यकि और धृष्टद्युम्न आदि पर आक्रमण करने लगे॥३।५॥क्रूरमति पाञ्चालगण "द्रोण को मारो, द्रोण को मारो' कहकर अपने पक्ष के लोगों को उत्तेजित करने लगे। वैसे ही आपके पुत्रगण "द्रोणाचार्य की रक्षा करो, द्रोणाचार्य की रक्षा करो" ऐसा कहकर अपने पक्ष के वीरों को आगे बढ़ने के लिए उत्साहित करते हुए प्रेरणा करने लगे। द्रोणाचार्य के जीवन को लेकर कौरवों और पाण्डवों में बाजी सी लग गई। पाण्डव लोग कहते थे कि द्रोणाचार्य को मारो और कौरव लोग कहते थे कि द्रोणाचार्य को न मारने पावें ॥६।७॥आचार्य द्रोण पाञ्चाल देश की रथ-सेना के जिस-जिस अंश को अपने बाणों से छिन्न-भिन्न करने लगते थे उस-उस अंश की रक्षा करने के निमित्त वीर धृष्टद्युम्न वहीं पहुँच जाते थे। इस प्रकार सब सेना में उथल-पुथल मच गई और युद्ध ने भयानक रूप धारण कर लिया। वीर योद्धा लोग भयानक सिंहनाद करते हुए अपने शत्रुओं पर आक्रमण करने लगे। पाण्डवों पर आक्रमण करना कौरवपक्ष के वीरों के लिए असम्भव सा हो उठा। कौरवों के दिये हुए कष्टों को स्मरण करके पाण्डव भयानक आक्रमण से शत्रुपक्ष की सेना को व्याकुल करने

ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् ।
शरस्फुलिङ्गश्चापार्चिर्दहन्कक्षमिवाऽनलः ॥ १९ ॥
तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान् ।
पूर्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत ॥ २० ॥
नील किं बहुभिर्दग्धैस्तव योधैः शरार्चिषा ।
मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाऽऽशु माम् ॥ २१ ॥
तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोशपद्माभमुखो नीलो विव्याध सायकैः ॥ २२ ॥
तेनापि विद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः ।
धनुर्ध्वजं च छत्रं च द्विषतः स न्यकृन्तत ॥ २३ ॥
स प्लुतः स्यन्दनात्तस्मान्नीलश्चर्मवरासिभृत् ।
द्रौणायनेः शिरः कायाद्धर्तुमैच्छत्पतत्रिवत् ॥ २४ ॥
तस्योन्नतांसं सुनसं शिरः कायात्सकुण्डलम् ।
भल्लेनाऽपाहरद् द्रौणिः स्मयमान इवाऽनघ ॥ २५ ॥
सम्पूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः ।
प्रांशुरुत्पलपत्राभो निहतो न्यपतद्भुवि ॥ २६ ॥
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला ।
आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ २७ ॥

लगे॥८।१०॥ पाण्डव लोग कुपित होकर द्रोणाचार्य को मारने के लिए प्राणपण करके घोरतर संग्राम करने लगे। वह संग्राम पत्थर और लोहे की वर्षा के समान अत्यन्त भयङ्कर हो उठा। बड़े बूढ़े लोगों को भी, जिन्होंने पहले देवताओं और दानवों के घोर संग्राम देखे-सुने हैं, स्मरण नहीं आता कि कभी ऐसा भयङ्कर युद्ध हुआ था॥११।१३॥उस वीर-संहारकारी समर में सेना के बोझ से पृथ्वी अत्यन्त व्यथित होकर काँपने लगी। चारों ओर घूमते फिरते हुए कौरवपक्ष के सैनिकों का कोलाहल आकाशमण्डल में गूँजता हुआ पाण्डव-सेना में छा गया। पाण्डवपक्ष के सैनिकों को सन्मुख देखकर द्रोणाचार्य सुतीक्ष्ण बाणों से छिन्न-भिन्न करने लगे। तब पाण्डव पक्ष के सेनापति धृष्टद्युम्न क्रोध से विह्वल होकर उनके सन्मुख आये और उन्हें रोकने की चेष्टा करने लगे। द्रोणाचार्य और धृष्टद्युम्न के उस अद्भुत समर को देखकर हम लोगों ने निश्चय कर लिया कि यह युद्ध अतुलनीय है॥१४।१८॥इसके पश्चात् अग्निसदृश तेजस्वी महाराज नील कौरव सेना को उसी प्रकार अपने बाणों से भस्म करने लगे जिस प्रकार से प्रज्वलित हुई अग्नि सूखी घास के ढेर को जलाती है। उनका धनुष ही ज्वाला था और बाण ही चिनगारियों के समान देख पड़ते थे। तब महाप्रतापी वीर अश्वत्थामा हँसते हुए नील के सन्मुख आकर कहने लगे—हे नील! इन बहुत से योद्धाओं को अपने बाणों की अग्नि में तुम व्यर्थ भस्म कर रहे हो। इन्हें मारने से क्या फल प्राप्त होगा? आओ, मुझ अकेले से ही युद्ध करो, शीघ्र ही क्रुद्ध होकर मुझ पर वार करो॥१९।२१॥हे महाराज! यह सुनकर महापराक्रमी और खिले हुए कमल के समान मुखवाले नील राजा ने कमल-वर्ण

अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः ।
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष ॥ २८ ॥
दक्षिणेन तु सेनायाः कुरुते कदनं बली ।
संशप्तकावशेषस्य नारायणबलस्य च ॥ २९ ॥

इति श्री महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि संशप्तकवधपर्वणि नीलवधे एकत्रिंशोऽध्यायः ॥ ३१ ॥

कमल-लोचन अश्वत्थामा को कई तीक्ष्ण बाण मारे। महाबली अश्वत्थामा ने तुरन्त ही तीन भल्ल बाणों से नील के धनुष, ध्वजा और छत्र के टुकड़े-टुकड़े, कर डाले। तब नील रथ से कूदकर ढाल तलवार लेकर अश्वत्थामा का सिर काटने के निमित्त पक्षी की भांति उनकी ओर झपटे। अश्वत्थामा ने भी हँसकर स्फूर्ति के साथ एक भल्ल बाण से नील का, सुन्दर नासिका से शोभित और मणिमय कुण्डलों से अलङ्कृत, मस्तक काट डाला॥२२।२५॥लम्बे,कमलवर्ण, पूर्ण चन्द्रमा के समान मुखवाले, कमल-लोचन नील जब पृथ्वी पर मरकर गिर पड़े तब पाण्डवों की सेना बहुत ही व्यथित हो उठी। पाण्डवपक्ष के योद्धा और महारथी लोग उस समय इस चिन्ता से अधीर हो उठे कि इस समय हमारी रक्षा कौन करेगा। क्योंकि महावीर अर्जुन तो दक्षिण-रणभूमि में दूर पर, बचे हुए संशप्तकों और नारायणी सेना के वीरों से, संग्राम कर रहे हैं। फिर वे कैसे हमारी रक्षा कर सकते हैं॥२६।२९॥

द्रोणपर्व का इकतीसवाँ अध्याय समाप्त हुआ ॥ ३१ ॥

अथ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

सञ्जय उवाच—प्रतिघातं तु सैन्यस्य नाऽमृष्यत वृकोदरः ।
सोऽभ्याहनद्गुरुं षष्ट्या कर्णं च दशभिः शरैः ॥ १ ॥
तस्य द्रोणः शितैर्बाणैस्तीक्ष्णधारैरजिह्मगैः ।
जीवितान्तमभिप्रेप्सुर्मर्मण्याशु जघान ह ॥ २ ॥
आनन्तर्यमभिप्रेप्सुः षड्विंशत्या समार्पयत् ।
कर्णो द्वादशभिर्बाणैरश्वत्थामा च सप्तभिः ॥ ३ ॥
षड्भिर्दुर्योधनो राजा तत एनमथाऽकिरत् ।
भीमसेनोऽपि तान्सर्वान्प्रत्यविध्यन्महाबलः ॥ ४ ॥
द्रोणं पञ्चाशतेषूणां कर्णं च दशभिः शरैः ।
दुर्योधनं द्वादशभिर्द्रौणिमष्टाभिराशुगैः ॥ ५ ॥

बत्तीसवाँ अध्याय ॥ ३२ ॥

सञ्जय कहते हैं—हे राजेन्द्र! इसके उपरान्त महावीर भीमसेन इस प्रकार अपनी सेना का संहार होना न देख सकने के कारण आगे बढ़े। उन्होंने क्रुद्ध होकर बाह्लीक को साठ और कर्ण को दस बाण मारे। द्रोणाचार्य ने भीमसेन के प्राण लेने के लिए उनके मर्मस्थलों में निरन्तर तीक्ष्ण धारवाले छब्बीस बाण मारे। कर्ण ने बारह, अश्वत्थामा ने सात और दुर्योधन ने छः तीक्ष्ण बाण भीमसेन को मारे॥१।४॥तब भीम ने कुपित होकर स्फूर्ति दिखाते हुए द्रोणाचार्य को पचास, कर्ण को दस, दुर्योधन को बारह और अश्वत्थामा को आठ बाण मारकर सिंहनाद किया। इस प्रकार वे अकेले ही उनके

आरावं तुमुलं कुर्वन्नभ्यवर्त्तत तान्रणे ।
तस्मिन्सन्त्यजति प्राणान्मृत्युसाधारणीकृते ॥ ६ ॥
अजातशत्रुस्तान्योधान्भीमं त्रातेत्यचोदयत् ।
ते ययुर्भीमसेनस्य समीपममितौजसः ॥ ७ ॥
युयुधानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ ।
ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः ॥ ८ ॥
महेष्वासवरैर्गुप्ता द्रोणानीकं बिभित्सवः ।
समापेतुर्महावीर्या भीमप्रभृतयो रथाः ॥ ९ ॥
तान्प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः ।
महारथानतिबलान्वीरान्समरयोधिनः ॥ १० ॥
बाह्यं मृत्युभयं कृत्वा तावकान्पाण्डवा ययुः ।
सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान् ॥ ११ ॥
आसीच्छक्त्यसिसम्पातो युद्धमासीत्परश्वधैः ।
प्रकृष्टमसियुद्धं च बभूव कटुकोदयम् ॥ १२ ॥
कुञ्जराणां च सम्पाते युद्धमासीत्सुदारुणम् ।
अपतत्कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः ॥ १३ ॥
नरो बाणविनिर्भिन्नो रथादन्यश्च मारिष ।
तत्राऽन्यस्य च सम्मर्दे पतितस्य विवर्मणः ॥ १४ ॥
शिरः प्रध्वंसयामास वक्षस्याक्रम्य कुञ्जरः ।
अपरांश्चाऽपरे मृद्नन्वारणाः पतितान्नरान् ॥ १५ ॥

साथ संग्राम करने लगे। वह युद्धभूमि उस समय महाभयानक हो उठी। उस समय वहाँ मृत्यु बहुत ही सुलभ हो रही थी। धर्मराज युधिष्ठिर ने भीमसेन की रक्षा करने के निमित्त कई वीर योद्धाओं को भेजा ॥४।७॥ नकुल, सहदेव और सात्यकि आदि योद्धा सहायता करने के निमित्त भीमसेन के समीप पहुँचे। भीमसेन आदि सब वीर मिलकर क्रोध के साथ आगे बढ़े और द्रोणाचार्य की सेना को मारने का उद्योग करने लगे। महारथी द्रोणाचार्य ने भी उन महाबली वीरों का अकेले ही सामना किया॥७।१०॥ उस समय कौरव लोग, राज्य की आशा और मृत्यु का भय छोड़कर, पाण्डवों के सम्मुख आये। हाथी का सवार हाथी के सवार को, रथी रथी को और घुड़सवार घुड़सवार को मारकर गिराने लगा। वीर लोग शक्ति, खड्ग और परशु आदि शस्त्रों के द्वारा परस्पर घोर प्रहार करने लगे। किसी-किसी का सिर नीचे हो गया और वह हाथी या घोड़े की पीठ से पृथ्वी पर गिर पड़ा। कोई बाण लगने से मरकर रथ से धरती पर आ रहा। किसी शूर का शरीर छिन्न-भिन्न हो गया और वह चेष्टारहित होकर पृथ्वी पर गिर पड़ा, इसी मध्य में एक हाथी उसकी छाती पर होकर चला गया, जिससे उसकी छाती और मस्तक चूर-चूर हो गया। इसी प्रकार अनेक प्रकार के हाथी इधर-उधर भागकर बहुत से जीवित, घायल, अधमरे और मरे हुए लोगों को रौंदने

विषाणैश्चाऽवनिं गत्वा व्यभिन्दन्रथिनो बहून् ।
नरान्त्रैः केचिदपरे विषाणालग्नसंश्रयैः ॥ १६ ॥
बभ्रमुः समरे नागा मृद्नन्तः शतशो नरान् ।
कार्ष्णायसतनुत्राणान्नराश्वरथकुञ्जरान् ॥ १७ ॥
पतितान्पोथयाञ्चक्रुर्द्विपाः स्थूलनलानिव ।
गृध्रपत्राधिवासांसि शयनानि नराधिपाः ॥ १८ ॥
ह्रीमन्तः कालसम्पर्कात्सुदुःखान्यनुशेरते ।
हन्ति स्माऽत्र पिता पुत्रं रथेनाऽभ्येत्य संयुगे ॥ १९ ॥
पुत्रश्च पितरं मोहान्निर्मर्यादमवर्त्तत ।
रथो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्यां निपातितम् ॥ २० ॥
युगार्द्धं छिन्नमादाय प्रदुद्राव तथा हयः ।
सासिर्बाहुर्निपतितः शिरश्छिन्नं सकुण्डलम् ॥ २१ ॥
गजेनाऽऽक्षिप्य बलिना रथः सञ्चूर्णितः क्षितौ ।
रथिना ताडितो नागो नाराचेनाऽपतत्क्षितौ ॥ २२ ॥
सारोहश्चाऽपतद्वाजी गजेनाऽभ्यहतो भृशम् ।
निर्मर्यादं महद्युद्धमवर्तत सुदारुणम् ॥ २३ ॥
हा तात हा पुत्र सखे क्वाऽसि तिष्ठ क्व धावसि ।
प्रहराऽहर जह्येनं स्मितक्ष्वेडितगर्जितैः ॥ २४ ॥
इत्येवमुच्चरन्ति स्म श्रूयन्ते विविधा गिरः ।
नरस्याऽश्वस्य नागस्य समसज्जत शोणितम् ॥ २५ ॥

लगे॥११।१५॥कुछ हाथी बाणों के प्रहार से चुटियल होकर धरती पर गिर पड़े और अपने बड़े-बड़े दाँतों से बहुत से गिरे हुए रथी लोगों के शरीरों को फाड़ने लगे। कुछ हाथी दाँतों में लगे हुए नाराच बाणों से सैंकड़ों मनुष्यों को घायल करते हुए इधर-उधर विचरने लगे। हाथियों के दल इधर-उधर भागकर गिरे हुए घोड़ों, रथों, हाथियों और कवचधारी पैदलों को — मोटे नरकुल के वन की तरह — पाँव से कुचलते और रौंदते हुए चले जाते थे। अपनी बात पर दृढ़ राजा लोग काल के वश होकर गिद्धों के पङ्खों की बिछी हुई अत्यन्त क्लेशकर मृत्यु-शय्या पर पड़े हुए थे॥१५।१९॥उस समय मर्यादा तोड़कर भयानक युद्ध हो रहा था। मोहवश पिता पुत्र को और पुत्र पिता को मार रहा था। चारों ओर रथों के टूटे हुए धुरे, कटे हुए धनुष, ध्वजा और छत्र आदि का गिर-गिरकर ढेर होने लगा। कोई घोड़ा,जुएँ का आधा अंश कट जाने पर, बड़े वेग से भाग खड़ा हुआ। तलवार की मूठ पकड़े हुए हाथ और कुण्डल-मण्डित मुण्ड कट-कटकर गिरने लगे। महापराक्रमी हाथी बिगड़ खड़े हुए और रथों को खींच-खींचकर तोड़ने-फोड़ने लगे। किसी-किसी स्थान पर हाथी के आक्रमण से घोड़े घायल हो-होकर अपने सवारों सहित धरती पर गिर रहे थे। इस प्रकार मर्यादा-हीन अत्यन्त भीषण संग्राम हो रहा था॥२०।२३॥ 'हाय तात! हाय पुत्र! हाय

उपाशाम्यद्रजो भौमं भीरून्कश्मलमाविशत् ।
चक्रेण चक्रमासाद्य वीरो वीरस्य संयुगे ॥ २६ ॥
अतीतेषुपथे काले जहार गदया शिरः ।
आसीत्केशपरामर्शो मुष्टियुद्धं च दारुणम् ॥ २७ ॥
नखैर्दन्तैश्च शूराणामद्वीपे द्वीपमिच्छताम् ।
तत्राऽच्छिद्यत शूरस्य सखड्गो बाहुरुद्यतः ॥ २८ ॥
सधनुश्चाऽपरस्यापि सशरः सांकुशस्तथा ।
आक्रोशदन्यमन्योऽत्र तथाऽन्यो विमुखोऽद्रवत् ॥ २९ ॥
अन्यः प्राप्तस्य चाऽन्यस्य शिरः कायादपाहरत् ।
सशब्दमद्रवच्चाऽन्यः शब्दादन्योऽत्रसद्भृशम् ॥ ३० ॥
स्वानन्योऽथ परानन्यो जघान निशितैः शरैः ।
गिरिशृङ्गोपमश्चाऽत्र नाराचेन निपातितः ॥ ३१ ॥
मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ।
तथैव रथिनं नागः क्षरन्गिरिरिवाऽरुजन् ॥ ३२ ॥
अभ्यतिष्ठत्पदा भूमौ सहाश्वं सहसारथिम् ।
शूरान्प्रहरतो दृष्ट्वा कृतास्त्रान्रुधिरोक्षितान् ॥ ३३ ॥
बहूनप्याविशन्मोहो भीरून्हृदयदुर्बलान् ।
सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ॥ ३४ ॥

मित्र ! तुम कहाँ हो ! कहां भागे जा रहे हो ! इसे मारो ! उसे इस स्थान पर ले आओ ! इस व्यक्ति को मार डालो !"—इस प्रकार की और अन्यान्य प्रकार की अनेक बातें चारों ओर सुनाई पड़ रही थीं। हास्य, सिंहनाद, शङ्खनाद, आर्तनाद और गर्जनशब्द चारों ओर उठकर उस रणभूमि को भयानक बना रहे थे। मनुष्यों, हाथियों और घोड़ों के शरीरों से रक्त का प्रवाह बह चला, जिससे पृथ्वी की उठी हुई धूल बैठ गई। डरपोक मनुष्य उस दृश्य को देख-कर भयभीत हो गये। किसी वीर के रथ का पहिया शत्रु के रथ के पहिये में फँस गया जिससे, अन्य अस्त्र मारने का अवसर न रहने के कारण, उसने गदाप्रहार करके शत्रु का सिर चूर्ण कर डाला। उस निराश्रय संग्राम में आश्रयप्राथी वीर परस्पर केशा-कर्षण, घूँसेबाजी और नख दन्त प्रहार आदि करके युद्ध करने लगे। किसी वीर ने तलवार तानने के लिए हाथ उठाया, इसी समय शत्रु ने उस खड्ग-सहित हाथ के टुकड़े टुकड़े करके गिरा दिये। किसी-किसी के धनुष-बाण-अंकुश आदि शस्त्रों से शोभित हाथ छिन्न भिन्न होने लगे। कोई किसी के प्रति अपने हार्दिक विद्वेष को प्रकट करने लगा। किसी योद्धा ने समर से भागकर जान बचाई और किसी ने अपने समकक्ष योद्धा का सिर काट डाला। कोई आर्तनाद करता हुआ बड़े वेग से भाग खड़ा हुआ। कोई अत्यन्त भयविह्वल होकर चिल्लाने लगा। कोई तीक्ष्ण बाणों से शत्रु को और कोई अपने ही पक्ष के योद्धा को मार रहा था॥२४।३१॥पर्वतशिखरतुल्य कोई गजराज बाण की चोट खाकर वर्षाकाल के नदी के फटे हुए कगारे के समान गिर पड़ा। झरने से युक्त पर्वत के समान मदमत्त अन्य एक हाथी रथी, घोड़े और

सैन्येन रजसा ध्वस्तं निर्मर्यादमवर्त्तत ।
ततः सेनापतिः शीघ्रमयं काल इति ब्रुवन् ॥ ३५ ॥
नित्याभित्वरितानेव त्वरयामास पाण्डवान् ।
कुर्वन्तः शासनं तस्य पाण्डवा बाहुशालिनः ॥ ३६ ॥
सरो हंसा इवाऽऽपेतुर्घ्नन्तो द्रोणरथं प्रति ।
गृह्णीताऽऽद्रवताऽन्योन्यं विभीता विनिकृन्तत ॥ ३७ ॥
इत्यासीत्तुमुलः शब्दो दुर्धर्षस्य रथं प्रति ।
ततो द्रोणः कृपः कर्णो द्रौणी राजा जयद्रथः ॥ ३८ ॥
विन्दानुविन्दावावन्त्यौ शल्यश्चैतान्यवारयन् ।
ते त्वार्यधर्मसंरब्धा दुर्निवारा दुरासदाः ॥ ३९ ॥
शरार्त्ता न जहुर्द्रोणं पञ्चालाः पाण्डवैः सह ।
ततो द्रोणोऽतिसंक्रुद्धो विसृजञ्शतशः शरान् ॥ ४० ॥
चेदिपञ्चालपाण्डूनामकरोत्कदनं महत् ।
तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षु मारिष ॥ ४१ ॥
वज्रसंह्लादसङ्काशस्त्रासयन्मानवान्बहून् ।
एतस्मिन्नन्तरे जिष्णुर्जित्वा संशप्तकान्बहून् ॥ ४२ ॥
अभ्यायात्तत्र यत्राऽसौ द्रोणः पाण्डून्प्रमर्दति ।
ताञ्शरौघान्महावर्त्ताञ्शोणितोदान्महाह्रदान् ॥ ४३ ॥

सारथी को पीड़ित करता हुआ खड़ा था। डरपोक दुर्बल हृदयवाले लोग रक्त से तर महावीरों को मार-काट करते देखकर मोह को प्राप्त और मूर्च्छित होने लगे। सभी लोग उद्विग्न हो रहे थे। ऐसा अँधेरा था कि कुछ भी नहीं प्रतीत पड़ता था। कोई किसी को नहीं पहचानता था। सैनिकों की दौड़-धूप से उठी हुई धूल आकाशमण्डल में छा गई। समर में कोई नियम नहीं रहा॥३१।३५॥उधर पाण्डवपक्ष के सेनापति धृष्टद्युम्न सदा युद्ध का उत्साह रखनेवाले पाण्डवों और अन्य वीरों को "यही ठीक अवसर है" कहकर उत्तेजित करने लगे। बाहुबलसम्पन्न पाण्डव-गण सेनापति की आज्ञा के अनुसार शत्रुसेना का संहार करते हुए, राजहंस जैसे सरोवर में विचरते हैं वैसे ही, रणभूमि में द्रोणाचार्य की ओर जा रहे थे। आचार्य द्रोण के रथ के सन्मुख "उसे पकड़ो; भागो नहीं; शङ्का न करो; उसे मार डालो" इत्यादि भयङ्कर शब्द सुन पड़ते थे॥३५।३८॥उधर से द्रोणाचार्य, कृपाचार्य, कर्ण, अश्वत्थामा, जयद्रथ, शल्य, अवन्ति-देशीय विन्द और अनुविन्द आदि वीर योद्धा लोग शत्रुपक्ष के वीरों को रोकने लगे। इधर अत्यन्त कुपित, दुर्द्धर्ष और दुर्निवार्य पाञ्चालगण और पाण्डवगण शत्रुओं के बाणप्रहार से अत्यन्त पीड़ित होकर वीर आर्यों के धर्म का विचार करके द्रोणाचार्य के सन्मुख समर में डटे रहे। इसके उपरान्त क्रोध से विह्वल होकर वीरश्रेष्ठ आचार्य सहस्रों बाण बरसाकर चेदि, पाञ्चाल और पाण्डवगण को अत्यन्त पीड़ित करने लगे। उनकी प्रत्यञ्चा की, वज्रपात के शब्द के समान मनुष्यों को भयविह्वल बना देनेवाली- ध्वनि और ताल-ध्वनि चारों ओर सुनाई पड़ने लगी॥३८।४१॥ हे महाराज! द्रोणाचार्य इस प्रकार पाञ्चालों और पाण्डवों

तीर्णः संशप्तकान्हत्वा प्रत्यदृश्यत फाल्गुनः ।
तस्य कीर्तिमतो लक्ष्म सूर्यप्रतिमतेजसः ॥ ४४ ॥
दीप्यमानमपश्याम तेजसा वानरध्वजम् ।
संशप्तकसमुद्रं तमुच्छोष्याऽस्त्रगभस्तिभिः ॥ ४५ ॥
स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ।
प्रददाह कुरून्सर्वानर्जुनः शस्त्रतेजसा ॥ ४६ ॥
युगान्ते सर्वभूतानि धूमकेतुरिवोत्थितः ।
तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः ॥ ४७ ॥
ताड्यमानाः क्षितिं जग्मुर्मुक्तकेशाः शरार्दिताः ।
केचिदार्तस्वनं चक्रुर्विनेशुरपरे पुनः ॥ ४८ ॥
पार्थबाणहताः केचिन्निपेतुर्विगतासवः ।
तेषामुत्पतितान्कांश्चित्पतितांश्च पराङ्मुखान् ॥ ४९ ॥
न जघानाऽर्जुनो योधान्योधव्रतमनुस्मरन् ।
ते विकीर्णरथाश्चित्राः प्रायशश्च पराङ्मुखाः ॥ ५० ॥
कुरवः कर्ण कर्णेति हाहेति च विचुक्रुशुः ।
तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम् ॥ ५१ ॥
मा भैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्जुनम् ।
स भारतरथश्रेष्ठः सर्वभारतहर्षणः ॥ ५२ ॥
प्रादुश्चक्रे तदाऽऽग्नेयमस्त्रमस्त्रविदां वरः ।
तस्य दीप्तशरौघस्य दीप्तचापधरस्य च ॥ ५३ ॥

के दल का विनाश कर ही रहे थे इसी समय महावीर अर्जुन संशप्तकगण को हराकर, रुधिर रूप जल और बाण-समूह रूप आवर्त से युक्त भयानक रणकुण्ड में उत्तीर्ण होकर, वहाँ पर आ गये। हम लोगों ने महायशस्वी सूर्यतुल्य अर्जुन की वानरचिह्नयुक्त ध्वजा देखी॥४२।४५॥पाण्डवदल के मध्यवर्ती, युगान्तकाल के सूर्य के समान प्रचण्ड, महावीर अर्जुन अस्त्ररूप किरणों से संशप्तकसैन्यसागर को सुखाकर कौरव-सेना को तपाने और पीड़ित करने लगे। जैसे प्रलयकाल में धूमकेतु उदय होकर सब प्राणियों को भयाकुल और भस्म करता है वैसे ही अर्जुन भी अस्त्रतेज से वीरों को जलाने लगे। हाथी, घोड़े, रथ आदि पर बैठे हुए वीरगण अर्जुन के बाणों से मरकर गिरने लगे। उनके अङ्ग छिन्न-भिन्न और केश बिखरे हुए थे। कोई आर्तनाद और कोई चीत्कार करने लगा। कई एक लोग अर्जुन के बाणों से तत्काल ही मरकर पृथ्वी पर गिर पड़े॥४५।४८॥महावीर अर्जुन योद्धाओं के वीर-धर्म का विचार करके गिरे-पड़े और भागे हुए शत्रुओं को नहीं मारते थे। कौरवपक्ष के प्रायः सभी लोग विच्छिन्न और समर से विमुख होकर हाहाकार करने और "हा कर्ण! हा कर्ण!" चिल्लाने लगे॥४८।५२॥ शरणार्थी वीरों का रोना-चिल्लाना सुनकर "भयभीत होओ नहीं" कहकर कर्ण ने अर्जुन का सामना किया। उन्होंने आते ही अर्जुन के ऊपर आग्नेय अस्त्र छोड़ा।

शरौघाञ्शरजालेन विदुधाव धनञ्जयः ।
तथैवाऽऽधिरथिस्तस्य बाणाञ्ज्वलिततेजसः ॥ ५४ ॥
अस्त्रमस्त्रेण संवार्य प्राणदद्विसृजञ्शरान् ।
धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः ॥ ५५ ॥
विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः ।
अर्जुनास्त्रं तु राधेयः संवार्य शरवृष्टिभिः ॥ ५६ ॥
तेषां त्रयाणां चापानि चिच्छेद विशिखैस्त्रिभिः ।
ते निकृत्तायुधाः शूरा निर्विषा भुजगा इव ॥ ५७ ॥
रथशक्तीः समुत्क्षिप्य भृशं सिंहा इवाऽनदन् ।
ता भुजाग्रैर्महावेगा निसृष्टा भुजगोपमाः ॥ ५८ ॥
दीप्यमाना महाशक्त्यो जग्मुराधिरथिं प्रति ।
ता निकृत्य शरव्रातैस्त्रिभिस्त्रिभिरजिह्मगैः ॥ ५९ ॥
ननाद बलवान्कर्णः पार्थाय विसृजञ्शरान् ।
अर्जुनश्चापि राधेयं विद्ध्वा सप्तभिराशुगैः ॥ ६० ॥
कर्णादवरजं बाणैर्जघान निशितैः शरैः ।
ततः शत्रुञ्जयं हत्वा षड्भिरजिह्मगैः ॥ ६१ ॥
जहार सद्यो भल्लेन विपाटस्य शिरो रथात् ।
पश्यतां धार्त्तराष्ट्राणामेकेनैव किरीटिना ॥ ६२ ॥
प्रमुखे सूतपुत्रस्य सोदर्या निहतास्त्रयः ।
ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत् ॥ ६३ ॥

॥५१।५३॥चमचमाते धनुष को घुमाकर तीक्ष्ण बाण बरसानेवाले कर्ण के बाणों को अर्जुन ने अपने बाणों से निष्फल करना आरम्भ किया। कर्ण भी अपने बाणों से अर्जुन के बाणों को रोकते और बाण-वर्षा करते हुए सिंहनाद करने लगे। इसी मध्य में धृष्टद्युम्न, भीमसेन और सात्यकि ने एक साथ कर्ण को तीन तीन बाण मारे॥५३।५६॥कर्ण ने अर्जुन के ऊपर बाण बरसाकर, उनके बाणों को व्यर्थ करके, तीन बाणों से धृष्टद्युम्न, भीम और सात्यकि के धनुष काट डाले। तब उक्त तीनों वीर, धनुष कट जाने से, विषहीन सर्प के समान हो गये। वे अपने-अपने रथ पर से कर्ण के ऊपर शक्ति चला करके सिंहनाद करने लगे। वे विषैले नाग के समान प्रज्वलित अग्नि-शिखा सी शक्तियाँ बड़े वेग से कर्ण की ओर चलीं। महावीर स्फूर्तिशाली कर्ण ने तीन तीन बाणों से मार्ग में ही प्रत्येक शक्ति के तीन तीन टुकड़े कर डाले॥५६।५९॥फिर वे अर्जुन के ऊपर बाण बरसाकर सिंहनाद करने लगे। महावीर अर्जुन ने भी कर्ण को सात बाण मारकर अत्यन्त तीक्ष्ण भयानक बाणों से कर्ण के छोटे भाई को मार डाला। उसके पश्चात् छ बाणों से शत्रुञ्जय को मारकर एक भल्ल बाण से विपाट का सिर काट गिराया। इस प्रकार कर्ण के तीनों भाइयों को, कर्ण और दुर्योधन आदि के सन्मुख ही, अकेले ही अर्जुन ने मार डाला॥५९।६३॥अब महावेगशाली

वरासिना कर्णपक्षाञ्जघान दश पञ्च च ।
पुनस्तु रथमास्थाय धनुरादाय चाऽपरम् ॥ ६४ ॥
विव्याध दशभिः कर्णं सूतमश्वांश्च पञ्चभिः ।
धृष्टद्युम्नोऽप्यसिवरं चर्म चाऽऽदाय भास्वरम् ॥ ६५ ॥
जघान चन्द्रवर्माणं बृहत्क्षत्रं च नैषधम् ।
ततः स्वरथमास्थाय पाञ्चाल्योऽन्यच्च कार्मुकम् ॥ ६६ ॥
आदाय कर्णं विव्याध त्रिसप्तत्या नदन्रणे ।
शैनेयोऽप्यन्यदादाय धनुरिन्दुसमद्युतिः ॥ ६७ ॥
सूतपुत्रं चतुःषष्ट्या विद्ध्वा सिंह इवाऽनदत् ।
भल्लाभ्यां साधुमुक्ताभ्यां छित्वा कर्णस्य कार्मुकम् ॥ ६८ ॥
पुनः कर्णं त्रिभिर्बाणैर्बाह्वोरुरसि चाऽपर्यत् ।
ततो दुर्योधनो द्रोणो राजा चैव जयद्रथः ॥ ६९ ॥
निमज्जमानं राधेयमुज्जह्रुः सात्यकार्णवात् ।
पत्त्यश्वरथमातङ्गास्त्वदीयाः शतशोऽपरे ॥ ७० ॥
कर्णमेवाऽभ्यधावन्त त्रास्यमानाः प्रहारिणः ।
धृष्टद्युम्नश्च भीमश्च सौभद्रोऽर्जुन एव च ॥ ७१ ॥
नकुलः सहदेवश्च सात्यकिं जुगुपू रणे ।
एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम् ॥ ७२ ॥
तावकानां परेषां च त्यक्त्वा प्राणानभूद्रणः ।
पदातिरथनागाश्वा गजाश्वरथपत्तिभिः ॥ ७३ ॥

भीमसेन ने रथ से उतरकर, पक्षिराज गरुड की तरह झपटकर, खड्ग के प्रहार से कर्ण के पक्ष के पन्द्रह वीरों को देखते ही देखते मार डाला। फिर रथ पर बैठकर दूसरा धनुष हाथ में लेकर दस बाण कर्ण को, पाँच बाण कर्ण के सारथी को और घोड़ों को भी उन्होंने मारे। महाबली धृष्टद्युम्न ने भी पहले ढाल-तलवार लेकर चन्द्रवर्मा और निषध देश के राजा बृहत्क्षत्र का सिर काट डाला और फिर रथ पर बैठकर, दूसरा धनुष लेकर, सिंहनादपूर्वक वीर कर्ण को इक्कीस बाण मारे॥६३।६७॥सात्यकि ने भी दूसरा धनुष लेकर सिंहनाद करके चौंसठ बाणों से कर्ण को घायल किया। फिर दो भल्ल बाणों से उनका धनुष काट डाला। इसके पश्चात् उनके दोनों हाथों में और वक्षःस्थल में तीन बाण मारे। तब राजा दुर्योधन, द्रोणाचार्य और जयद्रथ ने आकर सात्यकि-रूप महासागर में डूबते हुए कर्ण का उद्धार किया। कर्ण के साथ के सैंकड़ों पैदल, घोड़े, हाथी और रथी योद्धा अत्यन्त भयविह्वल होकर उन्हीं के पीछे भाग खड़े हुए॥६७।७१॥इधर धृष्टद्युम्न, भीमसेन, अभिमन्यु, अर्जुन, नकुल और सहदेव सात्यकि की सहायता करने लगे। हे महाराज! इस प्रकार आपके और पाण्डवपक्ष के वीरगण परस्पर विनाश के लिए घोरतर संग्राम करने लगे। वे सब लोग प्राणपण से युद्ध कर रहे थे। पैदल, रथी, हाथियों और घोड़ों के

दुःशासनस्तु तच्छ्रुत्वा दुर्योधनवचस्तदा ।
अब्रवीत्कुरुशार्दूल दुर्योधनमिदं वचः ॥ २१ ॥
अहमेनं हनिष्यामि महाराज ब्रवीमि ते ।
मिषतां पाण्डुपुत्राणां पञ्चालानां च पश्यताम् ॥ २२ ॥
ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम् ।
उत्क्रुश्य चाऽब्रवीद्वाक्यं कुरुराजमिदं पुनः ॥ २३ ॥
श्रुत्वा कृष्णौ मया ग्रस्तं सौभद्रमतिमानिनौ ।
गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः ॥ २४ ॥
तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः ।
एकाह्ना ससुहृद्वर्गाः क्लैब्याद्धास्यन्ति जीवितम् ॥ २५ ॥
तस्मादस्मिन्हते शत्रौ हताः सर्वेऽहितास्तव ।
शिवेन मां ध्याहि राजन्नेष हन्मि रिपूंस्तव ॥ २६ ॥
एवमुक्त्वाऽनदद्राजन्पुत्रो दुःशासनस्तव ।
सौभद्रमभ्ययात्क्रुद्धः शरवर्षैरवाकिरन् ॥ २७ ॥
तमतिक्रुद्धमायान्तं तव पुत्रमरिन्दमः ।
अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समार्पयत् ॥ २८ ॥
दुःशासनस्तु संक्रुद्धः प्रभिन्न इव कुञ्जरः ।
अयोधयत सौभद्रमभिमन्युश्च तं रणे ॥ २९ ॥
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम् ।
चरमाणावयुद्ध्येतां रथशिक्षाविशारदौ ॥ ३० ॥

---

शीघ्र ही मार डालो ॥१७।१९॥दुर्योधन के ये वचन सुनकर सब वीर योद्धा लोग क्रोधपूर्वक अभिमन्यु को मारने के विचार से शीघ्रता के साथ द्रोणाचार्य के सम्मुख ही अभिमन्यु की ओर दौड़े। उस समय दुःशासन ने दुर्योधन से गर्व के साथ कहा—हे राजेन्द्र ! राहु जैसे सूर्य को ग्रस लेता है वैसे ही मैं इस समय सम्पूर्ण पाञ्चालों और पाण्डवों के सम्मुख ही अभिमन्यु को मार डालूँगा। इसके पश्चात् अभिमानी अर्जुन और कृष्ण दोनों मेरे हाथ से अभिमन्यु के मृत्यु को प्राप्त हो जाने का समाचार पाकर अवश्य ही अपने प्राण दे देंगे॥२०।२४॥फिर कृष्ण और अर्जुन की मृत्यु की सूचना सुनकर पाण्डु के अन्य क्षेत्रज पुत्र और उनके बन्धु बान्धव, कायरों की तरह, शक्तिहीन और शोकाकुल होकर निःसन्देह एक ही दिन में मृत्यु को प्राप्त हो जायँगे। हे महाराज ! इस प्रकार एक अभिमन्यु के नष्ट होने से ही आपके सब शत्रुओं का नाश हो जायगा। अतएव आप मेरे मङ्गल और विजय की कामना कीजिए। मैं अकेला ही आपके शत्रुओं का संहार किये डालता हूँ। हे महाराज ! आपके पुत्र दुःशासन ने यों कहकर ऊँचे स्वर से सिंहनाद किया। वे अत्यन्त कुपित होकर अभिमन्यु के सम्मुख पहुँचकर उन पर बाणवर्षा करने लगे॥२५।२७॥महारथी अभिमन्यु ने भी उनको छब्बीस बाण मारे। महापराक्रमी दुःशासन क्रुद्ध होकर मदमत्त

अथ पणवमृदङ्गदुन्दुभीनां क्रकचमहानकभेरिझर्झराणाम् ।
निनदमतिभृशं नराः प्रचक्रुर्लवणजलोद्भवसिंहनादमिश्रम् ॥ ३१ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि दुःशासनयुद्धे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

गजराज की भाँति अभिमन्यु के साथ घोर संग्राम करने लगे। इसके उपरान्त रथ-शिक्षा में निपुण दोनों वीर दाहने-बाँये विचित्र मण्डलाकार गतियों से रथ घुमाते हुए एक दूसरे पर प्रहार करने लगे। उस समय सैनिक लोग चारों ओर पणव, मृदङ्ग, दुन्दुभि, क्रकच, महानक, भेरी, झर्झर और शङ्ख बजाते हुए घोर सिंहनाद करने लगे॥२८।३१॥

—०—

द्रोणपर्व का उनतालीसवाँ अध्याय समाप्त हुआ ॥ ३९ ॥

अथ चत्वारिंशोऽध्यायः ॥ ४० ॥

सञ्जय उवाच — शरविक्षतगात्रस्तु प्रत्यमित्रमवस्थितम् ।
अभिमन्युः स्मयन्धीमान्दुःशासनमथाऽब्रवीत् ॥ १ ॥
दिष्ट्या पश्यामि संग्रामे मानिनं शूरमागतम् ।
निष्ठुरं त्यक्तधर्माणमाक्रोशनपरायणम् ॥ २ ॥
यत्सभायां त्वया राज्ञो धृतराष्ट्रस्य शृण्वतः ।
कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः ॥ ३ ॥
जयोन्मत्तेन भीमश्च बह्वबद्धं प्रभाषितः ।
अक्षकूटं समाश्रित्य सौबलस्याऽऽत्मनो बलम् ॥ ४ ॥
तत्त्वयेदमनुप्राप्तं तस्य कोपान्महात्मनः ।
परवित्तापहारस्य क्रोधस्याऽप्रशमस्य च ॥ ५ ॥
लोभस्य ज्ञाननाशस्य द्रोहस्याऽत्याहितस्य च ।
पितॄणां मम राज्यस्य हरणस्योग्रधन्विनाम् ॥ ६ ॥
तत्त्वयेदमनुप्राप्तं प्रकोपाद्वै महात्मनाम् ।
स तस्योग्रमधर्मस्य फलं प्राप्नुहि दुर्मते ॥ ७ ॥
शासितास्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः ।
अद्याऽहमनृणस्तस्य कोपस्य भविता रणे ॥ ८ ॥

चालीसवाँ अध्याय ॥ ४० ॥

सञ्जय कहते हैं कि हे राजेन्द्र ! यद्यपि वीर अभिमन्यु के सब अङ्ग कट-फट गये थे तथापि वे धैर्य के साथ अपने शत्रु दुःशासन से कहने लगे—हे निष्फल क्रोध करनेवाले अधर्मी वीराभिमानी पुरुष ! बड़ी बात जो आज समर-भूमि में यह है कि तुम मेरी आँखों के आगे आ गये ॥१।२॥ तुमने जो मेरी सभा में महाराज धृतराष्ट्र के सन्मुख कटुवचन कहकर धर्मराज को कुपित किया था और शकुनि-कल्पित कपट-द्यूत में अपने बाहुबल के मद से मत्त होकर महावीर भीमसेन को जो कुवाक्य कहे थे, उसका परिणाम आज तुमको मिलेगा। रे दुर्बुद्धि कौरव ! आज अभी बहुत ही शीघ्र तुमको पराई सम्पत्ति हड़प कर

अमर्पितायाः कृष्णायाः कांक्षितस्य च मे पितुः ।
अद्य कौरव्य भीमस्य भवितास्म्यनृणो युधि ॥ ९ ॥
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ।
एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम् ॥ १० ॥
सन्दधे परवीरघ्नः कालाग्न्यनिलवर्चसम् ।
तस्योरस्तूर्णमासाद्य जत्रुदेशे विभिद्य तम् ॥ ११ ॥
जगाम सह पुङ्खेन वल्मीकमिव पन्नगः ।
अथैनं पञ्चविंशत्या पुनरेव समार्पयत् ॥ १२ ॥
शरैरग्निसमस्पर्शैराकर्णसमचोदितैः ।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ॥ १३ ॥
दुःशासनो महाराज कश्मलं चाऽविशन्महत् ।
सारथिस्त्वरमाणस्तु दुःशासनमचेतनम् ॥ १४ ॥
रणमध्यादपोवाह सौभद्रशरपीडितम् ।
पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य तम् ॥ १५ ॥
पञ्चालाः केकयाश्चैव सिंहनादमथाऽनदन् ।
वादित्राणि च सर्वाणि नानालिङ्गानि सर्वशः ॥ १६ ॥
प्रावादयन्त संहृष्टाः पाण्डूनां तत्र सैनिकाः ।
अपश्यन्स्मयमानाश्च सौभद्रस्य विचेष्टितम् ॥ १७ ॥
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् ।
धर्ममारुतशक्राणामश्विनोः प्रतिमास्तथा ॥ १८ ॥

जाने को, क्रोध, अशान्ति, लोभ, अज्ञान, द्रोह, अति साहस का और मेरे उग्रधनुर्धर पिता और चाचा के राज्यहरण का उग्र प्रतिफल प्राप्त होगा॥३।७॥मैं समर में सब सेना के सन्मुख ही तुमको अपने बाणों से मारकर अमर्षणशील द्रौपदी और भीमसेन के ऋण से मुक्त हो जाऊँगा; अपने पिता की इच्छा पूर्ण करूँगा और तुम्हें वीर पाण्डवों को कुपित करने का और सम्पूर्ण अधर्म का फल भोगना पड़ेगा। यदि तुम युद्ध छोड़कर मेरे सन्मुख से भाग न गये तो आज किसी प्रकार जीते नहीं बच सकते। हे महाराज! अभिमन्यु ने इस प्रकार भर्त्सना करके दुःशासन को अग्नि के समान तेजःपुञ्ज और वायु के सदृश शीघ्रगामी एक दारुण बाण मारा। अभिमन्यु के धनुष से छूटा हुआ वह बाण दुःशासन के जत्रुस्थान को भेदकर पुङ्ख सहित पृथ्वी के भीतर वैसे ही प्रवेश हो गया जैसे सर्प बिल के भीतर प्रवेश हो जाता है॥८।१२॥फिर वीर अभिमन्यु ने धनुष को कान तक खींचकर अत्यन्त तीक्ष्ण पचीस बाण दुःशासन को मारे। वीर दुःशासन अभिमन्यु के बाणों से अत्यन्त घायल और व्यथित होकर मूर्च्छित हो रथ पर गिर पड़े। उस समय सारथी उन्हें अचेत देखकर उनका रथ समरभूमि से शीघ्र ही हटा ले गया॥१२।१५॥यह देखकर पाण्डवगण, द्रौपदी के पाँचों पुत्र, पाञ्चालगण, कैकेयगण और राजा विराट सभी अभिमन्यु की प्रशंसा

धारयन्तो ध्वजाग्रेषु द्रौपदेया महारथाः ।
सात्यकिश्चेकितानश्च धृष्टद्युम्नशिखण्डिनौ ॥ १९ ॥
केकया धृष्टकेतुश्च मत्स्याः पञ्चालसृञ्जयाः ।
पाण्डवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः ॥ २० ॥
अभ्यद्रवन्त त्वरिता द्रोणानीकं विभित्सवः ।
ततोऽभवन्महायुद्धं त्वदीयानां परैः सह ॥ २१ ॥
जयमाकांक्षमाणानां शूराणामनिवर्तिनाम् ।
तथा तु वर्तमाने वै संग्रामेऽतिभयङ्करे ॥ २२ ॥
दुर्योधनो महाराज राधेयमिदमब्रवीत् ।
पश्य दुःशासनं वीरमभिमन्युवशङ्गतम् ॥ २३ ॥
प्रतपन्तमिवाऽऽदित्यं निघ्नन्तं शात्रवान्रणे ।
अथ चैते सुसंरब्धाः सिंहा इव बलोत्कटाः ॥ २४ ॥
सौभद्रमुद्यतास्त्रातुमभ्यधावन्त पाण्डवाः ।
ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ॥ २५ ॥
अभ्यवर्षत संक्रुद्धः पुत्रस्य हितकृत्तव ।
तस्य चाऽनुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः ॥ २६ ॥
अवज्ञापूर्वकं शूरः सौभद्रस्य रणाजिरे ।
अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ॥ २७ ॥
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः ।
तं तथा नाऽशकत्कश्चिद् द्रोणाद्वारयितुं रथी ॥ २८ ॥

---

और घोर सिंहनाद करने लगे। पाण्डवपक्ष के सैनिक सन्तुष्ट होकर युद्धभूमि में अनेक प्रकार के बाजे बजाने लगे और प्रधान शत्रु दुःशासन को हरानेवाले कुमार अभिमन्यु का पराक्रम देखकर बड़े ही चकित हुए। धर्म, वायु, इन्द्र और अश्विनीकुमारों की मूर्तियों के चिह्न से अलङ्कृत ध्वजाओंवाले रथों पर बैठे हुए द्रौपदी के पाँचों पुत्र, पराक्रमी सात्यकि, चेकितान, धृष्टद्युम्न, शिखण्डी, केकयराजकुमार, धृष्टकेतु, मत्स्य देश के योद्धा, पाञ्चाल देश के सैनिक और सृञ्जय-गण युधिष्ठिर आदि पाण्डवों के साथ द्रोणाचार्य की सेना को छिन्न-भिन्न करने के लिए बड़े वेग के साथ समरभूमि में आगे बढ़े। इस समय समान से कभी न हटनेवाले और विजय की इच्छा रखनेवाले दोनों पक्षों के वीर तुमुल युद्ध करने लगे॥१५।२२॥इस प्रकार भयानक समर उपस्थित होने पर राजा दुर्यो-धन ने वीरवर कर्ण से कहा—हे अङ्गराज! देखो, वह सूर्य के समान तेजस्वी प्रतापी वीर दुःशासन रणभूमि में शत्रु-सेना का संहार करके अन्त को अभिमन्यु के वश हो रहे हैं और पाण्डवगण महाराज सिंह की तरह क्रुद्ध होकर अभिमन्यु की रक्षा करने के लिए वेग से युद्धभूमि में चले आ रहे हैं॥२३।२५॥हे राजेन्द्र! तब दुर्योधन के परम हितैषी वीर कर्ण ने कुपित होकर अत्यन्त तीक्ष्ण बाणों से अभि-मन्यु को घायल किया और उनके अनुगामी [illegible]

आरुजन्तं रथव्रातान्वज्रहस्तात्मजात्मजम् ।
ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुष्मताम् ॥ २९ ॥
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ।
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् ॥ ३० ॥
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् ।
स तथा पीड्यमानस्तु राधेयेनाऽस्त्रवृष्टिभिः ॥ ३१ ॥
समरेऽमरसङ्काशः सौभद्रो न व्यशीर्यत ।
ततः शिलाशितैस्तीक्ष्णैर्भल्लैरानतपर्वभिः ॥ ३२ ॥
छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत् ।
धनुर्मण्डलनिर्मुक्तैः शरैराशीविषोपमैः ॥ ३३ ॥
सच्छत्रध्वजयन्तारं साऽश्वमाशु स्मयन्निव ।
कर्णोऽपि चाऽस्य चिक्षेप बाणान्सन्नतपर्वणः ॥ ३४ ॥
असम्भ्रान्तश्च तान्सर्वानगृह्णात्फाल्गुनात्मजः ।
ततो मुहूर्तात्कर्णस्य बाणेनैकेन वीर्यवान् ॥ ३५ ॥
स ध्वजं कार्मुकं वीरश्छित्त्वा भूमावपातयत् ।
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ॥ ३६ ॥
सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ।
तत उच्चुक्रुशुः पार्थास्तेषां चानुऽचरा जनाः ।
वादित्राणि च सञ्जघ्नुः सौभद्रं चाऽपि तुष्टुवुः ॥ ३७ ॥

*इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि कर्णदुःशासनपराभवे चत्वारिंशोऽध्यायः ॥ ४० ॥*

वीरों को भी वे तीक्ष्ण बाणों से पीड़ित करने लगे। आचार्य के सम्मुख जाने की इच्छा रखनेवाले महावीर अभिमन्यु ने स्फूर्ति के साथ कर्ण को तिहत्तर तीक्ष्ण बाण मारे और फिर कौरवपक्ष के श्रेष्ठ रथियों को भी वे शस्त्रप्रहार से व्यथित करने लगे। किन्तु कौरव-सेना का कोई भी योद्धा उस समय महावीर अभिमन्यु को द्रोणाचार्य के सम्मुख जाने से रोक नहीं सका॥२५।२९॥उस समय सब योद्धाओं की अपेक्षा अभिमानी, विजयाभिलाषी, परशुराम के शिष्य, महावीर कर्ण सैंकड़ों श्रेष्ठ बाणों और शस्त्रों से अभिमन्यु को पीड़ित करने लगे; किन्तु महापराक्रमी देवतुल्य अभिमन्यु उससे तनिक भी व्यथित नहीं हुए। वे शिला पर पैने किये गये आनतपर्व बहुत से भल्ल बाणों से वीरों के धनुष काटकर बलपूर्वक कर्ण के ऊपर निरन्तर सैंकड़ों बाण छोड़ने लगे। अभिमन्यु के धनुष से छूटे हुए उन सर्प-सदृश बाणों ने कर्ण के छत्र, ध्वजा, सारथी और घोड़ों को नष्ट कर दिया॥३०। ३४॥तब महावीर कर्ण ने अभिमन्यु को बाण मारे। उन्होंने अनायास ही उन बाणों के प्रहार को सह लिया और क्षण भर में देखते ही देखते एक ही बाण से कर्ण की ध्वजा और धनुष आदि काटकर पृथ्वी पर गिरा दिये। उस समय कर्ण के भाई, अपने भाई की दशा देखकर, सुदृढ़ धनुष लेकर अभिमन्यु पर आक्रमण करने को दौड़े। कर्ण की दुर्दशा देखकर अनु

चरों सहित पाण्डवगण ज़ोर से सिंहनाद करने,बाजे | बजाने और अभिमन्यु की प्रशंसा करनेलगे॥३४।३७॥

द्रोणपर्व का चालीसवाँ अध्याय समाप्त हुआ ॥ ४० ॥

अथ एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

सञ्जय उवाच—सोऽतिगर्जन्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः ।
तयोर्महात्मनोस्तूर्णं रथान्तरमवापतत् ॥ १ ॥
सोऽविध्यद्दशभिर्बाणैरभिमन्युं दुरासदम् ।
सच्छत्रध्वजयन्तारं साऽश्वमाशु स्मयन्निव ॥ २ ॥
पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वाऽर्पितं शरैः कार्ष्णिं त्वदीया हृषिताऽभवन् ॥ ३ ॥
तस्याऽभिमन्युरायम्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास तद्रथात्प्रापतद्भुवि ॥ ४ ॥
कर्णिकारमिवाऽऽधूतं वातेनाऽऽपतितं नगात् ।
भ्रातरं निहतं दृष्ट्वा राजन्कर्णो व्यथां ययौ ॥ ५ ॥
विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः ।
अन्यानपि महेष्वासांस्तूर्णमेवाऽभिदुद्रुवे ॥ ६ ॥
ततस्तद्विततं सैन्यं हस्त्यश्वरथपत्तिमत् ।
क्रुद्धोऽभिमन्युरभिनत्तिग्मतेजा महारथः ॥ ७ ॥
कर्णस्तु बहुभिर्बाणैरर्द्यमानोऽभिमन्युना ।
अपायाज्जवनैरश्वैस्ततोऽनीकमभज्यत ॥ ८ ॥
शलभैरिव चाऽऽकाशे धाराभिरिव चाऽऽवृते ।
अभिमन्योः शरै राजन्न प्राज्ञायत किञ्चन ॥ ९ ॥

इकतालीसवाँ अध्याय ॥ ४१ ॥

सञ्जय कहते हैं हे राजेन्द्र ! कर्ण के भाई ने बार-बार गरजकर और धनुष की डोरी खींचकर स्फूर्ति के साथ अभिमन्यु और कर्ण के रथों के मध्य में आकर दस बाण छोड़े, जिनसे अभिमन्यु का सारथी और घोड़े घायल हो गये और छत्र तथा ध्वजा जर्जर हो गई । महावीर अभिमन्यु को, अपने पिता और पितामह के समान अलौकिक कार्य करके, अन्त में कर्ण के भाई के बाणों से पीड़ित होते देखकर कौरव-गण अत्यन्त सन्तुष्ट हुए॥१।३॥अब महावीर अभिमन्यु ने दर्प के साथ एक बाण मारकर कर्ण के भाई का सिर काटकर गिरा दिया । अभिमन्यु के बाण से निहत भाई को, वायुवेग के द्वारा जड़ से उखड़कर पर्वत से गिरनेवाले कर्णिकार वृक्ष की तरह, रथ से पृथ्वी पर गिरते देखकर वीर कर्ण बहुत ही व्यथित हुए॥४।६॥कर्ण को इस प्रकार रण से विमुख करके वीर अभिमन्यु कङ्कपत्रशोभित असंख्य बाणों की वर्षा करते हुए अन्य वीरों की ओर चले और क्रोध के साथ उस विस्तृत चतुरङ्गिणी कौरव-सेना को छिन्न-भिन्न करने लगे । अभिमन्यु के बाणों से विद्ध और व्यथित होकर वीर कर्ण बड़े वेग से रणभूमि से हट गये।

तावकानां तु योधानां वध्यतां निशितैः शरैः ।
अन्यत्र सैन्धवाद्राजन्न स्म कश्चिदतिष्ठत ॥ १० ॥
सौभद्रस्तु ततः शङ्खं प्रध्माय पुरुषर्षभः ।
शीघ्रमभ्यपतत्सेनां भारतीं भरतर्षभ ॥ ११ ॥
स कक्षेऽग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्यं भारत सैन्यानामार्जुनिः प्रववर्तत ॥ १२ ॥
रथनागाश्वमनुजानर्दयन्निशितैः शरैः ।
सम्प्रविश्याऽकरोद्भूमिं कबन्धगणसंकुलाम् ॥ १३ ॥
सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः ।
स्वानेवाऽभिमुखान्घ्नन्तः प्राद्रवञ्जीवितार्थिनः ॥ १४ ॥
ते घोरा रौद्रकर्माणो विपाठा बहवः शिताः ।
निघ्नन्तो रथनागाश्वाञ्जग्मुराशु वसुन्धराम् ॥ १५ ॥
सायुधाः सांगुलित्राणाः सगदाः साङ्गदा रणे ।
दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः ॥ १६ ॥
शराश्चापानि खड्गाश्च शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि भूमावासन्सहस्रशः ॥ १७ ॥
सोपस्करैरधिष्ठानैरीषादण्डैश्च बन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्बहुधा पातितैर्युगैः ॥ १८ ॥
शक्तिचापासिभिश्चैव पतितैश्च महाध्वजैः ।
चर्मचापशरैश्चैव व्यवकीर्णैः समन्ततः ॥ १९ ॥

यह देखकर सब सेना विशृङ्खल होकर प्राण लेकर इधर-उधर भागने लगी॥६।८॥अभिमन्यु के, जलधारा और टीड़ीदल के समान, असंख्य बाणों से आकाश-मण्डल व्याप्त हो गया। बाणों के अतिरिक्त और कुछ भी नहीं देख पड़ता था। कौरवपक्ष की सेना अभिमन्यु के तीक्ष्ण बाणों से जर्जर होकर भाग खड़ी हुई। केवल पराक्रमी योद्धा सिन्धुराज जयद्रथ अपने स्थान से नहीं हटे॥९।१०॥तब महावीर अभिमन्यु शङ्ख बजाते हुए कौरव-सेना में प्रवेश होकर सूखी घास को जलानेवाली प्रचण्ड अग्नि के समान बाणों की अग्नि से शत्रु-सेना को भस्म करने लगे। उन्होंने क्षण भर में असंख्य रथियों, हाथियों, घोड़ों, हाथी-घोड़ों के सवारों और पैदल योद्धाओं को छिन्न भिन्न करके पृथ्वी को कबन्धों और लाशों से व्याप्त कर दिया॥११।१३॥ कौरवपक्ष के सैनिक लोग अभिमन्यु के बाण-प्रहार से अत्यन्त व्याकुल और पीड़ित होकर प्राणरक्षा के लिए बड़े वेग से चारों ओर भागे और ऐसे व्याकुल हुए कि अपने ही दल के लोगों को मारने लगे। अभिमन्यु के चलाये हुए निम्न विपाठ नाम के बाण रथों, हाथियों और घोड़ों को नष्ट करके पृथ्वीतल में गिरने लगे। शस्त्र, अंगुलित्राण, गदा और अङ्गद आदि सुवर्ण के अलङ्कारों से अलङ्कृत सहस्रों कटी हुई भुजाएँ, असंख्य बाण, धनुष, खड्ग, मनुष्यों के शरीर और माला तथा कुण्डल आदि से शोभित सिर पृथ्वी पर बिछ

निहतैः क्षत्रियैरश्वैर्वारणैश्च विशाम्पते ।
अगम्यरूपा पृथिवी क्षणेनाऽऽसीत्सुदारुणा ॥ २० ॥
वध्यतां राजपुत्राणां क्रन्दतामितरेतरम् ।
प्रादुरासीन्महाशब्दो भीरूणां भयवर्धनः ॥ २१ ॥
स शब्दो भरतश्रेष्ठ दिशः सर्वा व्यनादयत् ।
सौभद्रश्चाऽऽद्रवत्सेनां घ्नन्वराश्वरथद्विपान् ॥ २२ ॥
कक्षमग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारत सैन्यानामार्जुनिः प्रत्यदृश्यत ॥ २३ ॥
विचरन्तं दिशः सर्वाः प्रदिशश्चाऽपि भारत ।
तं तदा नाऽनुपश्यामः सैन्ये च रजसाऽऽवृते ॥ २४ ॥
आददानं गजाश्वानां नृणां चाऽऽयूंपि भारत ।
क्षणेन भूयः पश्यामः सूर्यं मध्यन्दिने यथा ॥ २५ ॥
अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान् ।
स वासवसमः संख्ये वासवस्याऽऽत्मजात्मजः ॥
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत ॥ २६ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि अभिमन्युपराक्रमे एकचत्वारिंशोऽध्याय. ॥ ४१ ॥

गये ॥१४।१७॥ढेर के ढेर रथों के टूटकर गिरे हुए दिव्याभरणभूषित आसन, ईशादण्ड, अक्ष, चक्र, युग, शक्ति, धनुष, ध्वजा, ढाल, तलवार, बाण, असंख्य मृत क्षत्रियों की लाशें, मरे हुए हाथी और घोड़े गिरने के कारण वह रणभूमि क्षण भर में अगम्य और बड़ी भयङ्कर सी हो उठी॥१८।२०॥मारे जाते हुए और घायल राजपुत्रों तथा क्षत्रियों के आर्तनाद की ऐसी घोर प्रतिध्वनि उठी कि उसे सुनकर कायरों के कलेजे काँप उठे। उस समय महावीर अभिमन्यु अस-ख्य शत्रुसेना, रथ, घोड़े और हाथी आदि का संहार करके कौरव सेना के भीतर प्रवेश होकर अग्नि जैसे सूखे हुए जङ्गल को जलाती है वैसे ही शत्रुओं को नष्ट करते हुए इधर-उधर परिभ्रमण करने लगे॥२१। २३॥सेना के इधर-उधर भागने से ऐसी धूल उड़ी कि उसके मारे हम लोग असंख्य हाथियों, घोड़ों और मनुष्यों के मध्य में उन प्राणनाशक पराक्रमी अभिमन्यु को देख नहीं पाते थे। किन्तु क्षण भर के पश्चात् ही महावीर अभिमन्यु मध्याह्नकाल के सूर्य के समान, अपने प्रताप से, शत्रुओं को तपाते हुए उस असंख्य सेना के मध्य प्रकट होकर बहुत ही शोभयमान हुए॥२४।२६॥

द्रोणपर्व का इकतालीसवाँ अध्याय समाप्त हुआ ॥ ४१ ॥

अथ द्विचत्वारिंशोऽध्याय ॥ ४२ ॥

धृतराष्ट्र उवाच - बालमत्यन्तसुखिनं स्वबाहुबलदर्पितम् ।
युद्धेषु कुशलं वीरं कुलपुत्रं तनुत्यजम् ॥ १ ॥
गाहमानमनीकानि सदश्वैश्च त्रिहायनैः ।
अपि यौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्बली ॥ २ ॥

सञ्जय उवाच—युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ॥ ३ ॥
धृष्टकेतुश्च संरब्धो मत्स्याश्चाऽभ्यपतन्रणे ।
तेनैव तु पथा यान्तः पितरो मातुलैः सह ॥ ४ ॥
अभ्यद्रवन्परीप्सन्तो व्यूढानीकाः प्रहारिणः ।
तान्दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाऽभवन् ॥ ५ ॥
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी संस्तंभयिषुराद्रवत् ॥ ६ ॥
सैन्धवस्य महाराज पुत्रो राजा जयद्रथः ।
स पुत्रगृद्धिनः पार्थान्सहसैन्यानवारयत् ॥ ७ ॥
उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन् ।
वार्धक्षत्रिरुपासेधत्प्रवणादिव कुञ्जरः ॥ ८ ॥
धृतराष्ट्र उवाच—अतिभारमहं मन्ये सैन्धवे सञ्जयाऽऽहितम् ।
यदेकः पाण्डवान्क्रुद्धान्पुत्रप्रेप्सूनवारयत् ॥ ९ ॥
अत्यद्भुतमहं मन्ये बलं शौर्यं च सैन्धवे ।
तस्य प्रब्रूहि मे वीर्यं कर्म चाऽग्र्यं महात्मनः ॥ १० ॥
किं दत्तं हुतमिष्टं वा किं सुतप्तमथो ततः ।
सिन्धुराजो हि येनैकः पाण्डवान्समवारयत् ॥ ११ ॥
सञ्जय उवाच—द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः ।
मानात्स तप्तवान्राजा वरार्थी सुमहत्तपः ॥ १२ ॥

बयालीसवाँ अध्याय ॥ ४२ ॥

राजा धृतराष्ट्र ने पूछा हे सञ्जय ! अत्यन्त सुखी, बाहुबल का अहङ्कार रखनेवाले, रणनिपुण अभिमन्यु ने तीन तीन वर्ष के बहुमूल्य घोड़ों से शोभित रथ पर बैठकर प्राणपण से युद्ध करने के लिए जब समरसागर में प्रवेश किया तब पाण्डवसेना का कौन-कौन वीर उनके साथ गया?॥१।२॥सञ्जय ने कहा—हे महाराज ! युधिष्ठिर, भीमसेन, नकुल, सहदेव, शिखण्डी, मत्स्यदेश के वीर, सात्यकि, विराट, द्रुपद, कैकेय और धृतकेतु आदि अभिमन्यु के आत्मीयस्वजन लोग उनकी रक्षा करने के लिए उनके साथ साथ युद्ध के मैदान में चले। कौरव-सेना के योद्धा लोग पाण्डव-पक्ष के वीरों को युद्धभूमि में आते देखकर वहाँ से भाग गये॥३।५॥ तब उग्र धनुष धारण करनेवाले महातेजस्वी आपके दामाद जयद्रथ, कौरव सेना को स्थिर और युद्ध के लिए उत्साहित करने की इच्छा से, दिव्य अस्त्र का प्रयोग करते हुए पुत्रवत्सल पाण्डवों को रोककर मत्त गजराज की भाँति युद्धभूमि में परिभ्रमण करने लगे। जयद्रथ को जीतकर व्यूह के भीतर प्रवेश होना पाण्डवों और उनके पक्ष के वीरों के लिए अशक्य हो गया॥५।८॥धृतराष्ट्र ने कहा—हे सञ्जय ! महाबाहु जयद्रथ ने अकेले ही, मेरे पुत्रों के हित की इच्छा से, क्रोधी बली पाण्डवों को व्यूह के

इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्य सः ।
क्षुत्पिपासातपसहः कृशो धमनिसन्ततः ॥ १३ ॥
देवमाराधयच्छर्वं गृणन्ब्रह्म सनातनम् ।
भक्तानुकम्पी भगवांस्तस्य चक्रे ततो दयाम् ॥ १४ ॥
स्वप्नान्तेऽप्यथ चैवाऽऽह हरः सिन्धुपतेः सुतम् ।
वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि ॥ १५ ॥
एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथः ।
उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् ॥ १६ ॥
पाण्डवेयानहं संख्ये भीमवीर्यपराक्रमान् ।
वारयेयं रथेनैकः समस्तानिति भारत ॥ १७ ॥
एवमुक्तस्तु देवेशो जयद्रथमथाऽब्रवीत् ।
ददामि ते वरं सौम्य विना पार्थं धनञ्जयम् ॥ १८ ॥
वारयिष्यसि संग्रामे चतुरः पाण्डुनन्दनान् ।
एवमस्त्विति देवेशमुक्त्वाऽबुध्यत पार्थिवः ॥ १९ ॥
स तेन वरदानेन दिव्येनाऽस्त्रबलेन च ।
एकः संवारयामास पाण्डवानामनीकिनीम् ॥ २० ॥
तस्य ज्यातलघोषेण क्षत्रियान्भयमाविशत् ।
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत् ॥ २१ ॥
दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमाहितम् ।
उत्क्रुश्याऽभ्यद्रवन्राजन्येन यौधिष्ठिरं बलम् ॥ २२ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि जयद्रथयुद्धे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

बाहर ही रोककर बड़ा भारी कार्य किया। मुझे जयद्रथ का बल-वीर्य बहुत ही अद्भुत जान पड़ता है। तुम उनके युद्ध के वृत्तान्त का वर्णन विस्तरपूर्वक करो। सिन्धुराज जयद्रथ ने कौन सा दान, हवन, यज्ञ या तप किया था, जिसके प्रभाव से वे अकेले ही क्रोधान्ध पाण्डवों को युद्ध में परास्त कर सके ॥१।११॥ सञ्जय ने कहा—हे राजेन्द्र ! जयद्रथ ने जब द्रौपदी को हर ले जाने की कुचेष्टा की थी तब भीमसेन ने उन्हें परास्त किया था। उस अपमान से कुपित होकर जयद्रथ ने इन्द्रियों को विषयों से रोक करके, भूख-प्यास धूप-वर्षा आदि के कष्ट सहकर, घोर तपस्या और वेदपाठपूर्वक वर की प्राप्ति के लिए महादेव की आराधना की ॥१२। १४॥ भक्तवत्सल भवानीपति ने जयद्रथ पर दया करके उनसे स्वप्न में कहा—हे जयद्रथ ! मैं तुम पर प्रसन्न हूँ, तुम अपनी इच्छा के अनुसार वरदान माँग लो। तब जयद्रथ ने प्रणाम करके हाथ जोड़कर कहा—हे महादेव ! मैं आपके वरदान के प्रभाव से अकेला ही रथ पर बैठकर महाबलशाली पाँचों पाण्डवों को परास्त कर सकूँ ॥१५।१७॥ शङ्कर ने कहा—हे सिन्धुराज ! मैं वर देता हूँ कि तुम अर्जुन के अतिरिक्त सब पाण्डवों को [एक दिन] युद्ध में परास्त कर सकोगे। हे राजेन्द्र ! महादेव के ये वचन सुनकर "बहुत अच्छा" कहकर

जयद्रथ जाग पड़े। वीर जयद्रथ ने शङ्कर के उसी वरदान के प्रभाव से ही और दिव्य अस्त्रों के बल से ही उस दिन अकेले ही पाण्डवों को परास्त किया [और व्यूह के भीतर नहीं जाने दिया]॥१८।२०॥ हे महाराज! उस समय जयद्रथ के ज्या-निर्घोष और तलध्वनि को सुनकर शत्रुपक्ष के क्षत्रिय भयविह्वल और कौरवपक्ष के वीर प्रसन्न तथा उत्साहित हो उठे। कौरवपक्ष के वीरगण व्यूह की रक्षा का भार जयद्रथ को सौंपकर, साहस के साथ धनुष चढ़ाकर, राजा युधिष्ठिर की सेना के सम्मुख चले॥२१।२२॥

द्रोणपर्व का बयालीसवाँ अध्याय समाप्त हुआ ॥ ४२ ॥

अथ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

सञ्जय उवाच—यन्मां पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम्। 
शृणु तत्सर्वमाख्यास्ये यथा पाण्डूनयोधयत् ॥ १ ॥
तमूहुर्वाजिनो वश्याः सैन्धवाः साधुवाहिनः। 
विकुर्वाणा बृहन्तोऽश्वाः श्वसनोपमरंहसः ॥ २ ॥
गन्धर्वनगराकारं विधिवत्कल्पितं रथम्। 
तस्याऽभ्यशोभयत्केतुर्वाराहो राजतो महान् ॥ ३ ॥
श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च। 
स बभौ राजलिङ्गैस्तैस्तारापतिरिवाऽम्बरे ॥ ४ ॥
मुक्तावज्रमणिस्वर्णैर्भूषितं तमयस्मयम्। 
वरूथं विबभौ तस्य ज्योतिर्भिः खमिवाऽऽवृतम् ॥ ५ ॥
स विस्फार्य महच्चापं किरन्निषुगणान्बहून्। 
तत्खण्डं पूरयामास यद्व्यदारयदार्जुनिः ॥ ६ ॥
स सात्यकिं त्रिभिर्बाणैरष्टभिश्च वृकोदरम्। 
धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ॥ ७ ॥
द्रुपदं पञ्चभिस्तीक्ष्णैः सप्तभिश्च शिखण्डिनम्। 
केकयान्पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ८ ॥

---

तैतालीसवाँ अध्याय ॥ ४३ ॥

सञ्जय ने कहा — हे राजेन्द्र! आप मुझसे सिन्धुराज जयद्रथ के पराक्रम के बारे में पूछ रहे हैं, इसलिए जिस प्रकार जयद्रथ ने पाण्डवों से युद्ध किया और उन्हें आगे बढ़ने से रोका वह सब वृत्तान्त मैं कहता हूँ; सुनिए। गन्धर्वनगर के सदृश, विविध अलङ्कारों से अलंकृत, स्फूर्तिशाली और सारथी के आज्ञाधीन सिन्धु देश के बड़े डील-डौलवाले घोड़ों से युक्त, रथ पर चढ़कर वीर जयद्रथ मोर्चे के समीप पहुँचे। उनके रथ के ऊपरी भाग में चाँदी का बना हुआ वराहचिह्न ध्वजा के ऊपर शोभायमान था॥१।३॥वे श्वेत छत्र, पताका और चामर आदि राजकीय चिह्नों से आकाशमण्डल में स्थित चन्द्रमा के समान शोभा को प्राप्त हुए। हीरे, मोती, मणि, स्वर्ण आदि से भूषित लोहमय उनके रथ का वरूथ ( रथवेष्टन ) ज्योतिष्कमण्डली से आवृत आकाश के समान जान पड़ता था। इसके पश्चात् वीर जयद्रथ ने धनुष चढ़ाकर बहुत से बाण बरसाये और अभिमन्यु ने व्यूह के जिस स्थान को अपने शस्त्रों की वर्षा से रहित करके

युधिष्ठिरं तु सप्तत्या ततः शेषानपानुदत् ।
इषुजालेन महता तदद्भुतमिवाऽभवत् ॥ ९ ॥
अथाऽस्य शितपीतेन भल्लेनाऽऽदिश्य कार्मुकम् ।
चिच्छेद प्रहसन्राजा धर्मपुत्रः प्रतापवान् ॥ १० ॥
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध दशभिः पार्थं तांश्चैवाऽन्यांस्त्रिभिस्त्रिभिः॥ ११ ॥
तत्तस्य लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिस्त्रिभिः ।
धनुर्ध्वजं च च्छत्रं च क्षितौ क्षिप्रमपातयत् ॥ १२ ॥
सोऽन्यदादाय बलवान्सज्जं कृत्वा च कार्मुकम् ।
भीमस्याऽपातयत्केतुं धनुरश्वांश्च मारिष ॥ १३ ॥
स हताश्वादवप्लुत्य च्छिन्नधन्वा रथोत्तमात् ।
सात्यकेराप्लुतो यानं गिर्यग्रमिव केसरी ॥ १४ ॥
ततस्त्वदीयाः संहृष्टाः साधु साध्विति वादिनः ।
सिन्धुराजस्य तत्कर्म प्रेक्ष्याऽश्रद्धेयमद्भुतम् ॥ १५ ॥
संक्रुद्धान्पाण्डवानेको यद्धाराऽस्त्रतेजसा ।
तत्तस्य कर्म भूतानि सर्वाण्येवाऽभ्यपूजयन् ॥ १६ ॥
सौभद्रेण हतैः पूर्वं सोत्तरायोधिभिर्द्विपैः ।
पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः ॥ १७ ॥
यतमानास्तु ते वीरा मत्स्यपञ्चालकेकयाः ।
पाण्डवाश्चाऽन्वपद्यन्त प्रतिशेकुर्न सैन्धवम् ॥ १८ ॥

राह कर ली थी उस स्थान को फिर सेना के द्वारा पूर्ण कर दिया॥४।६॥जयद्रथ ने सात्यकि को तीन, भीमसेन को आठ, धृष्टद्युम्न को साठ, विराट राजा को दस, राजा द्रुपद को पाँच, शिखण्डी को दस, युधिष्ठिर को सत्तर, कैकेयगण को पचीस बाण और द्रौपदी के पाँचों पुत्रों को तीन-तीन बाण मारकर अन्यान्य वीरों को असंख्य बाणों से पीड़ित करना आरम्भ किया। जयद्रथ की यह अद्भुत स्फूर्ति देख कर लोगों को बड़ा ही आश्चर्य हुआ॥७।९॥महाप्रतापी युधिष्ठिर ने हँसते-हँसते तीक्ष्ण भल्ल बाण से जयद्रथ का धनुष काट डाला। उन्होंने क्षण भर में दूसरा धनुष लेकर धर्मराज को दस बाण और अन्य वीरों को तीन-तीन बाण मारे। तब महावीर भीमसेन ने जयद्रथ की स्फूर्ति देखकर शीघ्रता के साथ तीन-तीन भल्ल बाणों से उनका धनुष, ध्वजा और छत्र आदि काट डाले॥१०।१२॥पराक्रमी सिन्धुराज ने उसी क्षण अन्य धनुष पर डोरी चढ़ाकर भीमसेन की ध्वजा, धनुष और घोड़ों को नष्ट कर दिया। महाबाहु भीमसेन उस बिना घोड़ों के रथ से उतरकर सात्यकि के रथ पर चले गये। उस समय ऐसा जान पड़ा कि सिंह पर्वत के ऊपर चढ़ रहा है। हे राजेन्द्र! आपके सैनिकगण जयद्रथ के इस कार्य को देखकर अत्यन्त आह्लाद के साथ ऊँचे स्वर से उनको शाबाशी देने लगे॥१३।१५॥वीर सिन्धुराज ने अकेले ही क्रोध-

यो यो हि यतते भेत्तुं द्रोणानीकं तत्राऽहितः ।
तं तमेव वरं प्राप्य सैन्धवः प्रत्यवारयत् ॥ १९ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि जयद्रथयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

विह्वल पाण्डवों को अपने बाहुबल और अस्त्र-शस्त्र के प्रभाव से रोक लिया, यह देखकर सब लोग उनकी प्रशंसा करने लगे। पहले महावीर अभिमन्यु ने अपने पक्ष के योद्धाओं को साथ ले, कौरव पक्ष के असंख्य हाथियों को मारकर, पाण्डवों को व्यूह के भीतर जाने का जो मार्ग दिखलाया था वह मार्ग जयद्रथ ने इस समय अपने कौशल और शिव के वरदान के प्रभाव से बन्द कर दिया। मत्स्य, पाञ्चाल, कैकेय और पाण्डवगण बड़े यत्न से युद्ध करते-करते जयद्रथ के समीप पहुँचे; किन्तु जयद्रथ के प्रभाव और पराक्रम को किसी प्रकार न सह सकने के कारण कुछ नहीं कर सके। उस समय पाण्डवपक्ष के वीरों ने द्रोणाचार्य की सेना के व्यूह को तोड़ने की जितनी चेष्टाएँ कीं, उन्हें जयद्रथ ने अनायास ही विफल कर दिया॥१६।१९॥

द्रोणपर्व का तेंतालीसवाँ अध्याय समाप्त हुआ ॥ ४३ ॥

अथ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

सञ्जय उवाच—सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु ।
सुघोरमभवद्युद्धं त्वदीयानां परैः सह ॥ १ ॥
प्रविश्याऽथाऽऽर्जुनिः सेनां सत्यसन्धो दुरासदः ।
व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ २ ॥
तं तथा शरवर्षेण क्षोभयन्तमरिन्दमम् ।
यथा प्रधानाः सौभद्रमभ्ययू रथसत्तमाः ॥ ३ ॥
तेषां तस्य च सम्मर्दो दारुणः समपद्यत ।
सृजतां शरवर्षाणि प्रसक्तममितौजसाम् ॥ ४ ॥
रथव्रजेन संरुद्धस्तैरमित्रैस्तथाऽऽर्जुनिः ।
वृषसेनस्य यन्तारं हत्वा चिच्छेद कार्मुकम् ॥ ५ ॥
तस्य विव्याध बलवाञ्शरैरश्वानजिह्मगैः ।
वातायमानैरथ तैरश्वैरपहृतो रणात् ॥ ६ ॥

चवालीसवाँ अध्याय ॥ ४४ ॥

सञ्जय ने कहा—हे राजेन्द्र! जयद्रथ ने जय प्राप्त करने की इच्छा रखनेवाले पाण्डवों को जब इस प्रकार बाहर ही रोक दिया तब दोनों पक्ष के वीर भयानक संग्राम करने लगे। महातेजस्वी अभिमन्यु शत्रुसेना के भीतर प्रवेश करके वैसे ही शत्रुसेना को मथने लगे जैसे कोई बड़ा भारी मच्छ समुद्र के जल को मथता है। उस समय कौरवपक्ष के वीरगण प्रधानता के अनुसार अभिमन्यु पर आक्रमण करने के लिए उनकी ओर चले॥१।३॥अभिमन्यु के साथ कौरवों का भयानक युद्ध होने लगा। कौरव निरन्तर बाणवर्षा करने लगे। उन्होंने रथों के मध्य में अभिमन्यु को घेर लिया। अभिमन्यु ने कुपित होकर कई बाण कर्णनन्दन वृषसेन को मारे, उनके सारथी को मार डाला, धनुष काट डाला और उनके रथ के घोड़ों को भी घायल कर डाला। वायुवेगगामी घोड़े सहसा अचेत वृषसेन को युद्धस्थल से लेकर भाग

तेनाऽन्तरेणाऽभिमन्योर्यन्ताऽपासारयद्रथम् ।
रथव्रजास्ततो हृष्टाः साधुसाध्विति चुक्रुशुः ॥ ७ ॥
तं सिंहमिव संक्रुद्धं प्रमथ्नन्तं शरैररीन् ।
आरादायान्तमभ्येत्य वसातीयोऽभ्ययाद् द्रुतम् ॥ ८ ॥
सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत् ।
अब्रवीच्च न मे जीवञ्जीवतो युधि मोक्ष्यसे ॥ ९ ॥
तमयस्मयवर्माणमिषुणा दूरपातिना ।
विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ ॥ १० ॥
वसातीयं हतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः ।
परिवव्रुस्तदा राजंस्तव पौत्रं जिघांसवः ॥ ११ ॥
विस्फारयन्तश्चापानि नानारूपाण्यनेकशः ।
तद्युद्धमभवद्रौद्रं सौभद्रस्याऽरिभिः सह ॥ १२ ॥
तेषां शरान्सेष्वसनाञ्शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि क्रुद्धश्चिच्छेद फाल्गुनिः ॥ १३ ॥
सखड्गाः सांगुलित्राणाः सपट्टिशपरश्वधाः ।
अपश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ १४ ॥
स्रग्भिराभरणैर्वस्त्रैः पातितैश्च महाभुजैः ।
वर्मभिश्चर्मभिर्हारैर्मुकुटैश्छत्रचामरैः ॥ १५ ॥
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः ॥ १६ ॥

खड़े हुए॥४।६॥इसी मध्य में अभिमन्यु के रथ को
लेकर उनका सारथी भी अन्यत्र चला गया। महारथी
वीर लोग अभिमन्यु का पराक्रम देखकर प्रसन्नता-
पूर्वक 'साधु-साधु' कहकर बड़ा कोलाहल करने लगे।
कुपित सिंह के समान झपटकर बाणों से शत्रुसेना
का विनाश करते हुए अभिमन्यु को आगे बढ़ते देख
शीघ्रता के साथ वीर वसातीय उनके सम्मुख पहुँचे।
वसातीय ने स्फूर्ति के साथ सुवर्णपुङ्खयुक्त तीक्ष्ण साठ
बाण अभिमन्यु को मारकर कहा — हे वीर कुमार !
मेरे उपस्थित रहते तुम कदापि समर में जीते-जी छुट-
कारा नहीं प्राप्त कर सकते॥७।९॥तब अभिमन्यु ने
अपने अत्यन्त तीक्ष्ण बाण से लोह-कवचधारी वीर

वसातीय का वक्षःस्थल चीर डाला।वसातीय मरकर रथ
से पृथ्वी पर गिर पड़े। उनकी मृत्यु देखकर कौरवपक्ष के
वीरगण अपने-अपने अनेकानेक प्रकार के धनुष चढ़ा-
चढ़ाकर दौड़े। उन्होंने अभिमन्यु को, मार डालने के
विचार से, चारों ओर से घेर लिया।उस समय युद्ध बहुत
ही भयानक हो उठा॥१०।१२॥महावीर अभिमन्यु ने
क्रोध से विह्वल होकर उनके धनुष, बाण आदि अस्त्र-
शस्त्र,कलेवर और माल्यमण्डित तथा कुण्डलों से अलंकृत
मस्तक काटना आरम्भ कर दिया। इधर-उधर चारों
ओर खड्ग, अंगुलित्राण, पट्टिश और परश्वध आदि
से युक्त और सुवर्ण के अलङ्कारों से अलंकृत कटे हुए
हाथ पड़े हुए थे। उस समय रणभूमि माला, आभू-

अनुकर्षैः पताकाभिस्तथा सारथिवाजिभिः ।
रथैश्च भग्नैर्नागैश्च हतैः कीर्णाऽभवन्मही ॥ १७ ॥
निहतैः क्षत्रियैः शूरैर्नानाजनपदेश्वरैः ।
जयगृद्धैर्वृता भूमिर्दारुणा समपद्यत ॥ १८ ॥
दिशो विचरतस्तस्य सर्वाश्च प्रदिशस्तथा ।
रणेऽभिमन्योः क्रुद्धस्य रूपमन्तरधीयत ॥ १९ ॥
काञ्चनं यद्यदस्याऽऽसीद्वर्म चाऽऽभरणानि च ।
धनुषश्च शराणां च तदपश्याम केवलम् ॥ २० ॥
तं तदा नाऽशकत्कश्चिच्चक्षुर्भ्यामभिवीक्षितुम् ।
आददानं शरैर्योधान्मध्ये सूर्यमिव स्थितम् ॥ २१ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि अभिमन्युपराक्रमे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

पण, वस्त्र, ध्वजादण्ड, ढाल, तलवार, हार, मुकुट, छत्र, चामर, आसन, ईशादण्ड, रथों के जुएँ, टूटे हुए पहिये, युग, अनुकर्ष, पताका, घोड़े, सारथि, टूटे हुए रथ तथा मरे हुए हाथियों-घोड़ों से परिपूर्ण हो उठी॥१३।१७॥समरभूमि उस समय विजयाभिलाषी महाबली पराक्रमी अनेक देशों के राजाओं की लाशों से परिपूर्ण और इसी से भयङ्कर दिखाई पड़ने लगी। अभिमन्यु क्रुद्ध होकर शत्रुसेना को विदीर्ण करते हुए इधर-उधर परिभ्रमण करने लगे। उस समय अभिमन्यु को कोई देख नहीं सकता था; क्योंकि वे स्फूर्ति के साथ एक स्थान से दूसरे स्थान जा रहे थे। हे महाराज! हम लोग केवल अभिमन्यु का सुवर्ण-मण्डित कवच, आभूषण, मण्डलाकार धनुष और बाण ही देख पाते थे। सूर्य जैसे किरणों से सब लोकों को ढक लेते हैं वैसे ही तेजस्वी अभिमन्यु अपने बाणों से वीरों को व्याप्त करते हुए देख पड़ते थे। सेना के मध्य में स्थित, सूर्य के समान तप रहे, अभिमन्यु को उस समय कोई स्थिर दृष्टि से देख भी नहीं सकता था॥१८।२१॥

द्रोणपर्व का चवालीसवाँ अध्याय समाप्त हुआ ॥ ४४ ॥

अथ पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

सञ्जय उवाच—आददानस्तु शूराणामायूंष्यभवदार्जुनिः ।
अन्तकः सर्वभूतानां प्राणान्काल इवाऽऽगते ॥ १ ॥
स शक्र इव विक्रान्तः शक्रसूनोः सुतो बली ।
अभिमन्युस्तदाऽनीकं लोडयन्समदृश्यत ॥ २ ॥
प्रविश्यैव तु राजेन्द्र क्षत्रियेन्द्रान्तकोपमः ।
सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणः ॥ ३ ॥

पैंतालीसवाँ अध्याय ॥ ४५ ॥

सञ्जय ने कहा—हे महाराज! जैसे प्रलयकाल आ जाने पर काल सब प्राणियों के जीवन का संहार करता है वैसे ही इन्द्र-सदृश पराक्रमी अभिमन्यु बड़े-बड़े योद्धाओं को मारने लगे। उस समय शत्रुसेना को विदलित करते हुए अभिमन्यु की अपूर्व शोभा हुई। व्याघ्र जैसे झपटकर मृग को पकड़ लेवैसे ही

सत्यश्रवसि चाऽऽक्षिते त्वरमाणा महारथाः ।
प्रगृह्य विपुलं शस्त्रमभिमन्युमुपाद्रवन् ॥ ४ ॥
अहं पूर्वमहं पूर्वमिति क्षत्रियपुङ्गवाः ।
स्पर्धमाना समाजग्मुर्जिघांसन्तोऽर्जुनात्मजम् ॥ ५ ॥
क्षत्रियाणामनीकानि प्रद्रुतान्यभिधावताम् ।
जग्राह तिमिरासाद्य क्षुद्रमत्स्यानिवाऽर्णवे ॥ ६ ॥
ये केचन गतास्तस्य समीपमपलायिनः ।
न ते प्रतिन्यवर्त्तन्त समुद्रादिव सिन्धवः ॥ ७ ॥
महाग्राहगृहीतेव वातवेगभयार्दिता ।
समकम्पत सा सेना विभ्रष्टा नौरिवाऽर्णवे ॥ ८ ॥
अथ रुक्मरथो नाम मद्रेश्वरसुतो बली ।
त्रस्तामाश्वासयन्सेनामत्रस्तो वाक्यमब्रवीत् ॥ ९ ॥
अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते ।
अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः ॥ १० ॥
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान् ।
सुकल्पितेनोह्यमानः स्यन्दनेन विराजता ॥ ११ ॥
सोऽभिमन्युं त्रिभिर्बाणैर्विध्वा वक्षस्यथाऽनदत् ।
त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः ॥ १२ ॥
स तस्येष्वसनं छित्वा फाल्गुनिः सव्यदक्षिणौ ।
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ १३ ॥

अभिमन्यु ने शत्रुसेना के व्यूह में प्रवेश करके सत्यश्रवा को पकड़ लिया और पृथ्वी पर उनको खींचना आरम्भ किया॥१।३॥तब कौरवपक्ष के सब योद्धा अनेक प्रकार के अस्त्र-शस्त्र लेकर बड़े वेग से अभिमन्यु के समीप पहुँचे और "मैं पहले उसे मारूँगा, मैं पहले वार करूँगा" कहकर वे अभिमन्यु को मारने के लिए उद्यत हुए। समुद्र के भीतर तिमि नाम का मत्स्य जैसे छोटी मछलियों को निगल लेता है वैसे ही कुमार अभिमन्यु उन क्षत्रियों और सुभटों को मार-मारकर गिराने लगे॥४।६॥जैसे सब नदियाँ समुद्र में जाकर समा जाती हैं वैसे ही युद्ध से मुख न मोड़नेवाले अपराजित अभिमन्यु के समीप पहुँचकर कोई भी जीवित नहीं लौटता था। उस समय कौरवपक्ष के सैनिक लोग उसी प्रकार अत्यन्त भयविह्वल होकर काँपने लगे जिस प्रकार महाग्राह से पकड़ा गया मनुष्य काँपता है और तूफान के भयङ्कर वेग से क्षोभ को प्राप्त समुद्र के मध्य में डूबती हुई नाव डगमगाती है ॥७।८॥अब पराक्रमी निर्भय मद्रराज शल्य के पुत्र वीर रुक्मरथ ने भागती हुई सेना को धैर्य देकर उत्तेजित करते हुए कहा—हे वीर क्षत्रियो! सैनिक लोगो! भयभीत होओ नहीं। क्यों भागते हो? मेरे जीते जी अभिमन्यु तुम्हारा कुछ नहीं कर सकते। मैं निःसन्देह इन्हें जीते-जी ही पकड़ लूँगा। सुसज्जित सुवर्णमण्डित रथ पर बैठे हुए रुक्मरथ बड़े वेग से अभिमन्यु के

दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम् ।
जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना ॥ १४ ॥
संग्रामदुर्मदा राजन्राजपुत्राः प्रहारिणः ।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः ॥ १५ ॥
तालमात्राणि चापानि विकर्षन्तो महाबलाः ।
आर्जुनिं शरवर्षेण समन्तात्पर्यवारयन् ॥ १६ ॥
शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः ।
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् ॥ १७ ॥
छाद्यमानं शरव्रातैर्हृष्टो दुर्योधनोऽभवत् ।
वैवस्वतस्य भवनं गतं ह्येनममन्यत ॥ १८ ॥
सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैः सुतेजनैः ।
अदृश्यमार्जुनिं चक्रुर्निमेषात्ते नृपात्मजाः ॥ १९ ॥
ससूताश्वध्वजं तस्य स्यन्दनं तं च मारिष ।
आचितं समपश्याम श्वाविधं शललैरिव ॥ २० ॥
स गाढविद्धः क्रुद्धश्च तोत्रैर्गज इवाऽर्दितः ।
गान्धर्वमस्त्रमायच्छद्रथमायां च भारत ॥ २१ ॥
अर्जुनेन तपस्तप्त्वा गन्धर्वेभ्यो यदाहृतम् ।
तुम्बुरुप्रमुखेभ्यो वै तेनाऽमोहयताऽहितान् ॥ २२ ॥
एकधा शतधा राजन्दृश्यते स्म सहस्रधा ।
अलातचक्रवत्संख्ये क्षिप्रमस्त्राणि दर्शयन् ॥ २३ ॥

सम्मुख पहुँचे । उन्होंने अभिमन्यु के हृदय में और दाहनी तथा बाईं भुजा में तीन-तीन बाण मारकर घोर सिंहनाद किया॥९।१२॥अभिमन्यु ने उसी समय उनका धनुष, दोनों हाथ और सुन्दर नयन-नाक तथा भृकुटि से शोभित सिर बाणों से काटकर पृथ्वी पर गिरा दिया । रण-दुर्मद शल्य-पुत्र के प्रिय राजकुमारगण सुवर्णखचित ध्वजा से शोभित रथों पर बैठे हुए थे । उन्होंने जब रुक्मरथ की मृत्यु देखी तब कुपित होकर, ताल-प्रमाण सुदृढ धनुष तान-तानकर, चारों ओर से अकेले अभिमन्यु को घेर लिया। शस्त्र-विद्या में सुशिक्षित, तरुण, अत्यन्त असहनशील वीरों ने घेरकर अपने बाणों से अभिमन्यु को छा लिया॥१३।

१६॥यह देखकर राजा दुर्योधन बहुत ही प्रसन्न हुए और उन्होंने समझ लिया कि अब अभिमन्यु जीते नहीं बच सकते । राजपुत्रों ने अनेक प्रकार के चिह्नों से युक्त सुवर्णपुङ्ख-शोभित बाणों से क्षण भर में अभिमन्यु को छिपा सा दिया । हमें उनका रथ, ध्वजदण्ड और सारथी, सब टीड़ीदल से घिरे हुए खेत की तरह देख पड़ते थे॥१७।२०॥उस समय अंकुश की चोट खाये हुए हाथी की भाँति अत्यन्त घायल और इसी से क्रुद्ध होकर अभिमन्यु ने गान्धर्व अस्त्र का प्रयोग करके माया प्रकट की । महावीर अर्जुन ने घोर तप करके तुम्बुरु आदि गन्धर्वों से वह अद्भुत दिव्य अस्त्र प्राप्त किया था ।उस अस्त्र का प्रयोग करते ही शत्रुसेना मोहित

रथचर्यास्त्रमायाभिर्मोहयित्वा परन्तपः ।
बिभेद शतधा राजञ्शरीराणि महीक्षिताम् ॥ २४ ॥
प्राणाः प्राणभृतां संख्ये प्रेपिता निशितैः शरैः ।
राजन्प्रापुरमुं लोकं शरीराण्यवनिं ययुः ॥ २५ ॥
धनूंष्यश्वान्नियन्तृंश्च ध्वजान्बाहूंश्च साङ्गदान् ।
शिरांसि च शितैर्बाणैस्तेषां चिच्छेद फाल्गुनिः ॥ २६ ॥
चूतारामो यथा भग्नः पञ्चवर्षः फलोपगः ।
राजपुत्रशतं तद्वत्सौभद्रेण निपातितम् ॥ २७ ॥
क्रुद्धाशीविषसङ्काशान्सुकुमारान्सुखोचितान् ।
एकेन निहतान्दृष्ट्वा भीतो दुर्योधनोऽभवत् ॥ २८ ॥
रथिनः कुञ्जरानश्वान्पदातींश्चापि मज्जतः ।
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः ॥ २९ ॥
तयोः क्षणमिवाऽऽपूर्णः संग्रामः समपद्यत ।
अथाऽभवत्ते विमुखः पुत्रः शरशताहतः ॥ ३० ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि दुर्योधनपराजये पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

हो गई। अभिमन्यु ने स्फूर्त्ति के साथ गन्धर्व अस्त्र छोड़कर ऐसा अद्भुत कौशल दिखलाया कि बड़े बड़े योद्धा चकित रह गये। वे अलातचक्र की भांति कभी एक, कभी सौ और कभी सहस्र रूप धारण किये हुए से देख पड़ते थे॥२१।२३॥फिर उन्होंने रथसञ्चालन-कला और अस्त्र-माया के द्वारा राजाओं को मोहाभिभूत करके उनके शरीरों के टुकड़े टुकड़े करना प्रारम्भ किया। सान पर रक्खे गये पैने बाणों के प्रहार से वीरों के प्राण निकलकर परलोक सिधारते और मृत शरीर पृथ्वी पर गिरते जाते थे। इसके पश्चात् अभिमन्यु ने तीक्ष्ण धारवाले बाणों से कुछ राजकुमारों के धनुष, रथ के घोड़े, सारथी, ध्वजा, अङ्गदादि आभूषणों से शोभित बाहु और सिर काटना प्रारम्भ कर दिया॥२४।२६॥जैसे पाँच वर्ष के पुराने फलयुक्त आम के पेड़ टूट-टूटकर गिरते हैं वैसे ही एक सौ राजकुमारों को अभिमन्यु ने बाणों से मार गिराया। उस समय एकमात्र अभिमन्यु के पराक्रम से क्रुद्ध सर्प सदृश, सुखभोग के योग्य, एक सौ जवान और शूर राजकुमारों की मृत्यु होते देखकर राजा दुर्योधन बहुत ही भयभीत हो गये। अभिमन्यु को रथियों, हाथियों, घोड़ों और पैदल सेना का संहार करते देखकर, क्रोधान्ध होकर, स्वयं दुर्योधन शीघ्रता के साथ उनके सम्मुख पहुँचे। उन दोनों वीरों का असम्पूर्ण अद्भुत युद्ध कुछ समय तक बहुत ही भयङ्कर होता रहा। इतने में ही वीर अभिमन्यु के बाणों से अत्यन्त पीड़ित और व्यथित होकर राजा दुर्योधन वहाँसे हट गये॥२७।३०॥

द्रोणपर्व का पैंतालीसवाँ अध्याय समाप्त हुआ ॥ ४५ ॥

अथ षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

धृतराष्ट्र उवाच—यथा वदसि मे सूत एकस्य बहुभिः सह ।
संग्रामं तुमुलं घोरं जयं चैव महात्मनः ॥ १ ॥

अश्रद्धेयमिवाऽऽश्चर्यं सौभद्रस्याऽथ विक्रमम् ।
किन्तु नाऽस्त्यद्भुतं तेषां येषां धर्मो व्यपाश्रयः ॥ २ ॥
दुर्योधने च विमुखे राजपुत्रशते हते ।
सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः ॥ ३ ॥
सञ्जय उवाच—संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षणाः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ४ ॥
हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्सम्बन्धिबान्धवान् ।
उत्सृज्योत्सृज्य सञ्जग्मुस्त्वरयन्तो हयद्विपान् ॥ ५ ॥
तान्प्रभग्नांस्तथा दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः ।
कृपो दुर्योधनः कर्णः कृतवर्माऽथ सौबलः ॥ ६ ॥
अभ्यधावन्सुसंक्रुद्धाः सौभद्रमपराजितम् ।
ते तु पौत्रेण ते राजन्प्रायशो विमुखीकृताः ॥ ७ ॥
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः ।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात् ॥ ८ ॥
तमन्वगेवाऽस्य पिता पुत्रगृद्धी न्यवर्त्तत ।
अनुदुर्योधनं चाऽन्ये न्यवर्त्तन्त महारथाः ॥ ९ ॥
तं तेऽभिषिषिचुर्बाणैर्मेघा गिरिमिवाऽम्बुभिः ।
स तु तान्प्रममाथैको विष्वग्वातो यथाऽम्बुदान् ॥ १० ॥

धृतराष्ट्र ने कहा—हे सञ्जय ! तुम बहुतों के साथ एक के संग्राम करने और बराबर विजयी होने की बात बारम्बार कह रहे हो । मुझे तो इस समय अभिमन्यु का ऐसा पराक्रम और बाहुबल विश्वास के अयोग्य और अत्यन्त अद्भुत प्रतीत हो रहा है । किन्तु वास्तव में यह है कि जिनका एकमात्र अवलम्बन धर्म ही है, उनका ऐसा अद्भुत पराक्रम होना कुछ असम्भव नहीं है । चाहे जो हो, अब यह बताओ कि उन एक सौ राजकुमारों की मृत्यु और दुर्योधन के विमुख होने पर मेरी सेना की क्या अवस्था हुई ? उसने किस प्रकार अभिमन्यु का सामना किया॥१।३॥सञ्जय ने कहा – हे राजेन्द्र ! आपके पक्ष के महारथियों के मुख सूख गये, दृष्टि चञ्चल हो उठी, रोंगटे खड़े हो गये और बराबर पसीना बह चला । उस समय उनके मन में विजयी होने का उत्साह किञ्चित्मात्र भी नहीं रहा । सब लोग भागने का निश्चय करके मरे हुए भाई, पिता, पुत्र, मित्र, सुहृद्, सम्बन्धी, भाई बन्धु आदि को छोड़ छोड़कर अपने हाथी घोड़े आदि को शीघ्रता से हाँककर इधर-उधर भागने लगे । उधर द्रोणाचार्य, अश्वत्थामा, बृहद्बल, कृपाचार्य, दुर्योधन, कर्ण, कृतवर्मा और शकुनि अपनी सेना को छिन्न-भिन्न देखकर, अत्यन्त क्रुद्ध होकर, अभिमन्यु पर आक्रमण करने के लिए आगे बढ़े । किन्तु वीर अभिमन्यु ने इन सभी वीरों को एक-एक करके युद्ध से विमुख सा कर दिया॥४।७॥तब तेजस्वी,राजकुमार लक्ष्मण बालस्वभाव और अभिमान के कारण निर्भय चित्त से अभिमन्यु के सन्मुख पहुँचे। पुत्र-स्नेहके कारण उनकी सहायता और रक्षा के लिए राजा दुर्योधन भी उनके पीछे पहुँचे । अन्यान्य महारथी वीर योद्धा भी राजा दुर्योधन के साथ चले । मेघ-

पौत्रं तव च दुर्धर्षं लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्मुकम् ॥ ११ ॥
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम् ।
आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपम् ॥ १२ ॥
लक्ष्मणेन तु सङ्गम्य सौभद्रः परवीरहा ।
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चाऽर्पयत् ॥ १३ ॥
संक्रुद्धो वै महाराज दण्डाहतइवोरगः ।
पौत्रस्तव महाराज तव पौत्रमभाषत ॥ १४ ॥
सुदृष्टः क्रियतां लोको ह्यमुं लोकं गमिष्यसि ।
पश्यतां बान्धवानां त्वां नयामि यमसादनम् ॥ १५ ॥
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा ।
उद्बवर्ह महाबाहुर्निर्मुक्तोरगसन्निभम् ॥ १६ ॥
स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम् ॥ १७ ॥
लक्ष्मणं निहतं दृष्ट्वा हाहेत्युच्चुक्रुशुर्जनाः ।
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ॥ १८ ॥
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः ।
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ॥ १९ ॥
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ।
तांस्तु विध्वा शितैर्बाणैर्विमुखीकृत्य चाऽऽर्जुनिः ॥ २० ॥

---

मण्डल जैसे पर्वत पर जल बरसाता है वैसे ही वे सब वीर अभिमन्यु के ऊपर बाण बरसाने लगे। वायु जैसे मेघों को तितर-बितर कर देती है वैसे ही अभिमन्यु भी उस विशाल सेना को और उन वीरों को उन्म थित करने लगे॥८।१०॥इसके उपरान्त जैसे मतवाला हाथी अन्य हाथियों से जाकर भिड़ता है वैसे ही वीर अभिमन्यु भी — अपने पिता के साथ उपस्थित, धनुष ताने हुए, अत्यन्त दुर्द्धर्ष, कुबेर के पुत्र के समान सुन्दर और प्रियदर्शन लक्ष्मण के समीप पहुँचे। लक्ष्मण ने अभिमन्यु के वक्ष स्थल और दोनों भुजाओं में अनेक तीक्ष्ण बाण मारे। दण्ड की चोट खाकर कुपित विषैले सर्प के समान अत्यन्त क्रुद्ध वीर अभिमन्यु ने आपके पोते लक्ष्मण से कहा—हे लक्ष्मण! मैं तुमको अभी यमपुरी भेजता हूँ। इसलिए तुम अच्छी तरह इस लोक को एक बार देख लो। मैं तुमको तुम्हारे भाई-बन्धुओं के सम्मुख ही काल के गाल में पहुँचाता हूँ॥११।१५॥हे महाराज! इतना कहकर वीर अभिमन्यु ने उसी समय केंचुल छोड़े हुए सर्प के समान चमकीला और भयानक भल्ल बाण निकालकर उससे लक्ष्मण का, सुन्दर नासिका भ्रुकुटी केश और कुण्डलों से शोभित, सिर काट डाला॥१६।१७॥लक्ष्मण की मृत्यु देखकर सब वीरगण हाहाकार करने लगे। क्रोध और शोक से अधीर होकर राजा दुर्योधन ऊँचे स्वर से पुकारकर सब राजाओं से कहने लगे—?

वेगेनाऽभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् ।
आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ॥ २१ ॥
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान् ।
तत्प्रसक्तमिवाऽत्यर्थं युद्धमासीद्विशाम्पते ॥ २२ ॥
ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः ।
यथा वायुर्नित्यगतिर्जलदाञ्शतशोऽम्बरे ॥ २३ ॥
ततः क्राथः शरव्रातैरार्जुनिं समवाकिरत् ।
अथेतरे सन्निवृत्ताः पुनर्द्रोणमुखा रथाः ॥ २४ ॥
परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः ।
तान्निवार्याऽऽर्जुनिर्बाणैः क्राथपुत्रमथाऽर्दयत् ॥ २५ ॥
शरौघेणाऽप्रमेयेण त्वरमाणो जिघांसया ।
सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः ॥ २६ ॥
सच्छत्रध्वजयन्तारं रथं चाऽश्वान्न्यपातयत् ।
कुलशीलश्रुतिबलैः कीर्त्या चाऽस्त्रबलेन च ।
युक्ते तस्मिन्हते वीराः प्रायशो विमुखाऽभवन् ॥ २७ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि लक्ष्मणवधे षट्चत्वारिंशोऽध्याय ॥ ४६ ॥

क्षत्रियो ! तुम लोग मिलकर शीघ्र ही इस दुष्ट बालक अभिमन्यु को मार डालो । तब कुपित होकर द्रोणाचार्य, कृपाचार्य, कर्ण, अश्वत्थामा, बृहद्बल और कृतवर्मा, इन छ महारथियों ने अभिमन्यु को चारों ओर से घेर लिया । अभिमन्यु ने तीक्ष्ण बाणों से इन छहों वीरों को घायल करके हटा दिया । फिर उन्होंने बड़े वेग से सिन्धुराज जयद्रथ की सेना के भीतर प्रवेश किया॥१८।२१॥कलिङ्गदेश के योद्धा, निषादगण और पराक्रमी क्राथनन्दन उन सबने हाथियों का दल आगे करके अभिमन्यु की राह रोक दी । तब दोनों ओर से अत्यन्त भीषण संग्राम होने लगा । महाबाहु अभिमन्यु ने बहुत ही दुर्भेद्य दुर्द्धर्ष हाथियों की सेना को छिन्न-भिन्न करना आरम्भ कर दिया । उस समय ऐसा जान पड़ने लगा मानों प्रचण्ड आँधी आकाश-मण्डल में बड़े वेग से मेघों को तितर बितर कर रही है । क्राथनन्दन ने बाणवर्षा से अभिमन्यु को रोकने का बड़ा यत्न किया । इसी समय द्रोणाचार्य आदि छहों महारथी फिर जाकर दिव्य अस्त्रों का प्रयोग करते हुए अभिमन्यु से युद्ध करने लगे॥२१।२५॥अभिमन्यु ने अपने बाणों के असह्य प्रहारों से उक्त छहों वीरों को विमुख सा करके क्राथनन्दन को बहुत ही पीड़ित किया और फिर अनेक प्रकार के बाणों से उनका छत्र और ध्वजा काट डाली, सारथी और घोड़ों को मार डाला तथा धनुष, बाण और बाजूबंद समेत उनकी भुजाएँ काट डालीं । इसके उपरान्त श्रेष्ठ कुल, शील, ज्ञान, वीर्य और कीर्ति से युक्त, अस्त्रबलसम्पन्न क्राथनन्दन को मार गिराया । यह देखकर प्राय अन्य सब वीरगण भयविह्वल होकर समर से हट गये॥२५।२७॥

द्रोणपर्व का छियालीसवाँ अध्याय समाप्त हुआ ॥ ४६ ॥

अथ सप्तचत्वारिंशोऽध्याय ॥ ४७ ॥

धृतराष्ट्र उवाच—तथा प्रविष्टं तरुणं सौभद्रमपराजितम् ।

कुलानुरूपं कुर्वाणं संग्रामेष्वपराजितम् ॥ १ ॥
आजानेयैः सुबलिभिर्यान्तमश्वैस्त्रिहायनैः ।
प्लवमानमिवाऽऽकाशे के शूराः समवारयन् ॥ २ ॥
सञ्जय उवाच—अभिमन्युः प्रविश्यैतांस्तावकान्निशितैः शरैः ।
अकरोत्पार्थिवान्सर्वान्विमुखान्पाण्डुनन्दनः ॥ ३ ॥
तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ४ ॥
दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् ।
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ५ ॥
सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः ।
तालमात्राणि चापानि विकर्षन्तो महाबलाः ॥ ६ ॥
तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान् ।
व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ७ ॥
द्रोणं पञ्चाशताऽविध्यद्विंशत्या च बृहद्बलम् ।
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ॥ ८ ॥
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः ।
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ९ ॥
स कर्णं कर्णिना कर्णे पीतेन च शितेन च ।
फाल्गुनिर्द्विपतां मध्ये विव्याध परमेषुणा ॥ १० ॥

सैंतालीसवाँ अध्याय ॥ ४७ ॥

राजा धृतराष्ट्र ने कहा—हे सञ्जय ! अपने कुल के अनुरूप अद्भुत कार्य करनेवाले, व्यूह के भीतर प्रवेश हुए-हुए, नवयुवक, अपराजित, संग्राम से कभी भी विमुख न होनेवाले अभिमन्यु को तीन वर्ष के, बलशाली, श्रेष्ठ जाति और देश के घोड़ों से युक्त रथ पर बैठ कर जैसे आकाशमण्डल में सूर्य भ्रमण करते हैं वैसे ही रणभूमि में भ्रमण करते देखकर किन-किन रथियों ने उनका सामना किया ॥ १।२॥ सञ्जय ने कहा—हे महाराज ! अभिमन्यु ने व्यूह के भीतर जा करके आपके पक्ष के राजाओं और सैनिकों को जब तीक्ष्ण बाण मारकर रण से हटा दिया तब कुपित होकर द्रोणाचार्य, कृपाचार्य, कर्ण, अश्वत्थामा, बृहद्बल और कृतवर्मा इन छः महारथियों ने अभिमन्यु को चारों ओर से घेर लिया । सिन्धुराज जयद्रथ को द्वार-रक्षा का भार सौंपा गया था, इसी लिए अवशिष्ट सैनिक लोग धर्मराज युधिष्ठिर की सेना को रोकने के लिए उधर चले॥३।५॥ अन्यान्य वीर भी ताल के प्रमाण बड़े-बड़े धनुष चढ़ाकर अभिमन्यु के ऊपर निरन्तर पैने बाण छोड़ने लगे । अभिमन्यु ने उन रणविद्या-विशारद और सब विद्याओं में निपुण वीरों को अपने रणकौशल से आश्चर्य में डाल दिया और बाणवर्षा करके विकल कर दिया । उन्होंने द्रोणाचार्य को पचास, बृहद्बल को बीस, कृतवर्मा को अस्सी, कृपाचार्य को साठ और अश्वत्थामा को कानों तक खींचकर सुवर्ण-

पातयित्वा कृपस्याऽश्वांस्तथोभौ पार्ष्णिसारथी ।
अथैनं दशभिर्बाणैः प्रत्यविध्यस्तनान्तरे ॥ ११ ॥
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्द्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ १२ ॥
तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
वरं वरममित्राणामारुजन्तमभीतवत् ॥ १३ ॥
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष ।
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः ॥ १४ ॥
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः ।
उग्रैर्नाऽकम्पयद्विध्वा मैनाकमिव पर्वतम् ॥ १५ ॥
स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः ।
प्रत्यविध्यन्महातेजा बलवानपकारिणम् ॥ १६ ॥
तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् ।
अश्वत्थामा तथाऽष्टौ च परीप्सन्पितरं रणे ॥ १७ ॥
कर्णो द्वाविंशतिं भल्लान्कृतवर्मा च विंशतिम् ।
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश ॥ १८ ॥
तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः ।
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः ॥ १९ ॥
तं कोसलानामधिपः कर्णिनाऽताडयद्धृदि ।
स तस्याऽश्वान्ध्वजं चापं सूतं चाऽपातयत्क्षितौ ॥ २० ॥

पुङ्खयुक्त वेगशाली दस बाण मारे॥६।९॥फिर शत्रुदल के मध्य में बड़ी स्फूर्ति के साथ पीले रङ्ग के, पैने, कर्णी नाम के कई एक विकट बाण वीर कर्ण के कान में मारे । इसके उपरान्त कृपाचार्य के पार्श्वरक्षक दोनों सारथियों को और घोड़ों को मारकर, उनके वक्षःस्थल में दारुण दस बाण मारकर, उन्हें विह्वल कर दिया॥१०।११॥फिर आपके पुत्र और अन्य वीरों के सम्मुख ही अभिमन्यु ने कौरवकुल की कीर्ति को बढ़ानेवाले वृन्दारक नाम के महावीर को मार डाला। अभिमन्यु को इस प्रकार निर्भय भाव से कौरवपक्ष के प्रधान-प्रधान वीरों का संहार करते देखकर अश्वत्थामा ने उनको पचीस क्षुद्रक नाम के तीक्ष्ण बाण मारे । अभिमन्यु ने भी आपके पुत्रों के सम्मुख ही शीघ्रता के साथ तीक्ष्ण बाणों से अश्वत्थामा को पीड़ित किया । उन्होंने सुतीक्ष्ण साठ बाणों से अभिमन्यु को घायल किया, पर वे मैनाक पर्वत के समान तनिक भी विचलित न हुए । अश्वत्थामा ने फिर सुवर्णपुङ्ख-युक्त तिहत्तर बाण अभिमन्यु को मारे॥१२।१६॥ पुत्रवत्सल आचार्य द्रोण ने एक सौ, पिता के हितैषी अश्वत्थामा ने आठ, कर्ण ने बाईस भल्ल बाण, कृत-वर्मा ने चौदह भल्ल बाण, बृहद्बल ने पचास भल्ल बाण और कृपाचार्य ने दस भल्ल बाण एक साथ अभि-मन्यु को मारे । अभिमन्यु ने भी उन सबको दस-दस बाण मारे॥१७।१९॥कोशलेश्वर बृहद्बल ने कर्णी

अथ कोसलराजस्तु विरथः खड्गचर्मभृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ २१ ॥
स कोसलानामधिपं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् ॥ २२ ॥
बभञ्ज च सहस्राणि दश राज्ञां महात्मनाम् ।
सृजतामशिवा वाचः खड्गकार्मुकधारिणाम् ॥ २३ ॥
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
व्यष्टम्भयन्महेष्वासो योधांस्तव शराम्बुभिः ॥ २४ ॥

इति श्री महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि बृहद्बलवधे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

बाण से अभिमन्यु को वक्षःस्थल में घायल किया । उन्होंने क्रुद्ध होकर स्फूर्ति के साथ उनकी ध्वजा, धनुष, सारथी और घोड़ों को नष्ट करके पृथ्वी पर गिरा दिया। रथ न रहने पर ढाल तलवार लेकर बृहद्बल ने अभिमन्यु का कुण्डलमण्डित सिर काटने का विचार किया । तब अभिमन्यु ने तीक्ष्ण बाण मारकर उनका हृदय फाड़ डाला । इससे वे प्राणहीन होकर पृथ्वी पर गिर पड़े । उस समय कटु वचन कहते हुए, खड्ग-धनुष धारण किये, दस सहस्र राजा युद्ध में पीठ दिखाकर भाग खड़े हुए । महावीर अभिमन्यु बृहद्बल को मारकर अपने पैने बाणों से शत्रुसेना को स्तम्भित करते हुए युद्ध के मैदान में भ्रमण करने लगे॥२०।२४॥

द्रोणपर्व का सैंतालीसवाँ अध्याय समाप्त हुआ ॥ ४७ ॥

अथ अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

सञ्जय उवाच—स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः ।
शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम् ॥ १ ॥
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः ।
शरैराचितसर्वाङ्गो बह्वशोभत भारत ॥ २ ॥
कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम् ।
कर्णोऽपि विबभौ शूरः शरैश्छिन्नोऽसृगाप्लुतः ॥ ३ ॥
तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ ।
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ॥ ४ ॥

अड़तालीसवाँ अध्याय ॥ ४८ ॥

*सञ्जय ने कहा—हे राजेन्द्र ! महावीर अभिमन्यु* ने कर्ण के कान में दुबारा तीक्ष्ण कर्णिक बाण मारकर पचास बाणों से उनको जर्जर कर दिया । महारथी कर्ण ने अभिमन्यु के प्रहार से विह्वल और क्रोधान्ध होकर उनको उतने ही बाण मारे । उन बाणों से घायल होकर अभिमन्यु अपूर्व शोभा को प्राप्त हुए । उन्होंने भी क्रोध करके कर्ण को अत्यन्त उग्र बाण मारे । अभिमन्यु के दारुण बाणों के प्रहार से कर्ण के अङ्ग कट-फट गये और उनसे रक्त की धारा बह चली, जिससे कर्ण की भी अपूर्व शोभा हुई । एक दूसरे के बाणों से घायल होकर, रक्त से भीगे हुए, दोनों वीर फूले हुए ढाक के पेड़ के समान

नमस्ते देवदेवेश सनातन विशातन　।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम　॥ १८ ॥
नारदस्त्वां समाचख्यौ पुराणमृषिसत्तमम्　।
वरदं शार्ङ्गिणं श्रेष्ठं तत्सत्यं कुरु माधव　॥ १९ ॥
इत्युक्तः पुण्डरीकाक्षो धर्मराजेन संसदि　।
तोयमेघस्वनो वाग्मी प्रत्युवाच युधिष्ठिरम्　॥ २० ॥
वासुदेव उवाच—सामरेष्वपि लोकेषु सर्वेषु न तथाविधः　।
शरासनधरः कश्चिद्यथा पार्थो धनञ्जयः　॥ २१ ॥
वीर्यवानस्त्रसम्पन्नः पराक्रान्तो महाबलः　।
युद्धशौण्डः सदाऽमर्षी तेजसा परमो नृणाम्　॥ २२ ॥
स युवा वृषभस्कन्धो दीर्घबाहुर्महाबलः　।
सिंहर्षभगतिः श्रीमान्द्विषतस्ते हनिष्यति　॥ २३ ॥
अहं च तत्करिष्यामि यथा कुन्तीसुतोऽर्जुनः　।
धार्त्तराष्ट्रस्य सैन्यानि धक्ष्यत्यग्निरिवेन्धनम्　॥ २४ ॥
अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम्　।
अपुनर्दर्शनं मार्गमिषुभिः क्षेप्स्यतेऽर्जुनः　॥ २५ ॥
तस्याऽद्य गृध्राः श्येनाश्च चण्डगोमायवस्तथा　।
भक्षयिष्यन्ति मांसानि ये चाऽन्ये पुरुषादकाः　॥ २६ ॥
यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे तथाऽप्यसौ　।
राजधानीं यमस्याऽद्य हतः प्राप्स्यति संकुले　॥ २७ ॥

हो। इस सङ्कट में हमारी रक्षा कीजिए। हे महाबाहु! हे शङ्ख-चक्र-गदाधर! हम लोग नौका हीन अथाह कौरव-सागर में डूब रहे हैं, आप नौकास्वरूप होकर उसमें हमें उबारिए। हे देवदेव! हे ईश! हे सनातन! हे संहार करनेवाले! हे विष्णु! हे जिष्णु! हे हरे! हे कृष्ण! हे वैकुण्ठ! हे पुरुषोत्तम! आपको प्रणाम है। देवर्षि नारद से मैं सुन चुका हूँ कि आप पुरातन नारायण ऋषि हैं, वर के देनेवाले हैं, शार्ङ्ग धनुष धारण करनेवाले विष्णु हैं और श्रेष्ठ हैं। सो आप नारद के कथन को सत्य कीजिए॥१५-१९॥ सभा के बीच युधिष्ठिर के यों कहने पर कमलनयन [illegible] गम्भीर स्वर से [illegible] कहने लगे — हे राजेन्द्र! देवताओं सहित तीनों लोकों में अर्जुन के समान धनुर्धर योद्धा दूसरा नहीं है। वे वीर्यवान्, अस्त्रज्ञ, पराक्रमी, महाबली, युद्धनिपुण, क्रोधी और तेजस्वी हैं। वृषभस्कन्ध, महाबाहु, महाबली, सिंह और साँड़ के समान चलनेवाले अर्जुन अवश्य आपके शत्रुओं को मारेंगे॥२०-२३॥ मैं वही उपाय करूँगा जिससे वीर-श्रेष्ठ अर्जुन दुर्योधन की सेना को उसी प्रकार से नष्ट करेंगे जिस प्रकार से अग्नि ईंधन के ढेर को भस्म कर देती है। अर्जुन आज अपने बाणों से उस क्षुद्र, पापी, अभिमन्यु की मृत्यु के मूल-कारण, जयद्रथ को उसी मार्ग से भेजेंगे जिससे कोई लौटकर नहीं आता। आज उसके मांस को गिद्ध, बाज, [illegible] और मा-

निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति ।
विशोको विज्वरो राजन्भव भूतिपुरस्कृतः ॥ २८ ॥

इति श्री महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि श्रीकृष्णवाक्ये त्र्यशीतितमोऽध्याय ॥ ८३ ॥

मास-भोजी अन्य पिशाच राक्षस आदि अवश्य भक्षण करेंगे॥२४।२६॥यदि आज इन्द्र आदि सब देवता भी मिलकर जयद्रथ की रक्षा करेंगे तो भी वह दुर्मति अवश्य मारा जायगा। आज दुष्ट जयद्रथ को मारकर अर्जुन आपसे मिलेंगे। आप शोक और सन्ताप त्यागकर शान्त हों॥२७।२८॥

द्रोणपर्व का तिरासीवाँ अध्याय समाप्त हुआ ॥ ८३ ॥

अथ चतुरशीतितमोऽध्याय ॥ ८४ ॥

सञ्जय उवाच—तथा तु वदतां तेषां प्रादुरासीद्धनञ्जयः ।
दिदृक्षुर्भरतश्रेष्ठं राजानं ससुहृद्गणम् ॥ १ ॥
तं निविष्टं शुभां कक्ष्यामभिवन्द्याऽग्रतः स्थितम् ।
तमुत्थायाऽर्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः ॥ २ ॥
मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना ।
आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ॥ ३ ॥
व्यक्तमर्जुन संग्रामे ध्रुवस्ते विजयो महान् ।
यादृग्रूपा च ते च्छाया प्रसन्नश्च जनार्दनः ॥ ४ ॥
तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम् ।
दृष्टवानस्मि भद्रं ते केशवस्य प्रसादजम् ॥ ५ ॥
ततस्तत्कथयामास यथादृष्टं धनञ्जयः ।
आश्वासनार्थं सुहृदां त्र्यम्बकेण समागमम् ॥ ६ ॥
ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः ।
नमस्कृत्य वृषाङ्काय साधु साध्वित्यथाऽब्रुवन् ॥ ७ ॥
अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना ।
त्वरमाणाः सुसन्नद्धा हृष्टा युद्धाय निर्ययुः ॥ ८ ॥

चौरासीवाँ अध्याय ॥ ८४ ॥

सञ्जय कहते हैं—हे महाराज ! इस प्रकार युधिष्ठिर से श्रीकृष्ण की बातचीत हो ही रही थी कि इसी समय सुहृदों सहित राजा युधिष्ठिर के दर्शन करने के लिए अर्जुन वहाँ पर आये। उस ड्योढ़ी में प्रवेश कर, प्रणाम करके, सम्मुख खड़े हुए अर्जुन को युधिष्ठिर ने आसन से उठकर प्रेमपूर्वक छाती से लगा लिया। फिर आशीर्वाद देकर, उनका मस्तक सूँघकर, हँसते हुए धर्मराज कहने लगे — हे भाई अर्जुन ! आज संग्राम में अवश्य तुम्हें भारी विजय प्राप्त होगी; क्योंकि तुम्हारे मुख की कान्ति वैसी ही उज्ज्वल है और श्रीकृष्ण भी तुम पर अत्यन्त ही प्रसन्न हैं॥१।४॥तब अर्जुन ने बहुत ही आश्चर्यजनक वृत्तान्त का वर्णन करते हुए कहा— हे राजेन्द्र ! आपका कल्याण हो; आज रात्रि को मैंने स्वप्न में श्रीकृष्ण की कृपा से एक बहुत ही अद्भुत

अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः ।
हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ॥ ९ ॥
रथेनैकेन दुर्धर्षौ युयुधानजनार्दनौ ।
जग्मतुः सहितौ वीरावर्जुनस्य निवेशनम् ॥ १० ॥
तत्र गत्वा हृषीकेशः कल्पयामास सूतवत् ।
रथं रथवरस्याऽऽजौ वानरर्षभलक्षणम् ॥ ११ ॥
स मेघसमनिर्घोषस्तप्तकाञ्चनसप्रभः ।
बभौ रथवरः क्लृप्तः शिशुर्दिवसकृद्यथा ॥ १२ ॥
ततः पुरुषशार्दूलः सज्जं सज्जपुरःसरः ।
कृताह्निकाय पार्थाय न्यवेदयत तं रथम् ॥ १३ ॥
तं तु लोकवरः पुंसां किरीटी हेमवर्मभृत् ।
चापबाणधरो वाहं प्रदक्षिणमवर्तत ॥ १४ ॥
तपोविद्यावयोवृद्धैः क्रियावद्भिर्जितेन्द्रियैः ।
स्तूयमानो जयाशीर्भिरारुरोह महारथम् ॥ १५ ॥
जैत्रैः सांग्रामिकैर्मन्त्रैः पूर्वमेव रथोत्तमम् ।
अभिमन्त्रितमर्चिष्मानुदयं भास्करो यथा ॥ १६ ॥
स रथे रथिनां श्रेष्ठः काञ्चने काञ्चनावृतः ।
विबभौ विमलोऽर्चिष्मान्मेराविव दिवाकरः ॥ १७ ॥
अन्वारुरुहतुः पार्थं युयुधानजनार्दनौ

---

दृश्य देखा है । [सञ्जय कहते हैं कि हे महाराज ! ] अब अपने सुहृदों के आश्वासन के लिए रात्रि का वह सब वृत्तान्त अर्जुन ने कह सुनाया, जिस प्रकार वे शिव से जाकर मिले थे और उनसे पाशुपत अस्त्र प्राप्त किया था । वह वृत्तान्त सुनकर सबको बड़ा आश्चर्य हुआ । सबने सिर झुकाकर शङ्कर को प्रणाम किया और अर्जुन को साधुवाद देकर हर्ष प्रकट किया॥५।७॥ इसके पश्चात् राजा युधिष्ठिर ने सब भाई बन्धुओं को युद्ध-यात्रा करने की आज्ञा दी । वे लोग शीघ्रतापूर्वक सुसज्जित होकर प्रसन्नता के साथ युद्ध करने के लिए चल दिये । महावीर सात्यकि, श्रीकृष्ण और अर्जुन—युधिष्ठिर को प्रणाम करके—हर्ष और उत्साह के साथ उस भवन से बाहर निकले । वीर सात्यकि और कृष्ण-चन्द्र जी एक ही रथ पर बैठकर अर्जुन के डेरे पर पहुँचे॥८।१०॥ वहाँ पहुँचकर शास्त्र के जाननेवाले श्रीकृष्ण ने अर्जुन के, वानरचिह्नयुक्त ध्वजा से अलङ्कृत, श्रेष्ठ रथ को तैयार किया । मेघ के समान गम्भीर शब्द करनेवाला, तपे हुए सुवर्ण की सी कान्ति से युक्त, सुसज्जित वह श्रेष्ठ रथ बालसूर्य के समान शोभा देने लगा । अर्जुन जब सब नित्य कृत्य कर चुके तब श्रीकृष्ण ने उनके समीप जाकर कहा——हे अर्जुन ! ध्वजा-पताका युक्त तुम्हारा रथ तैयार है॥१०।१३॥ अब महाबली अर्जुन ने सुवर्ण-कवच और किरीट पहना, धनुर्बाण लिया, रथ की प्रदक्षिणा की और तब वे उस पर सवार हुए । उस समय तप विद्या और अवस्था में वृद्ध, कर्मकाण्डी, सदाचारी, जितेन्द्रिय ब्राह्मण लोग

शर्यातेर्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ ।
अथ जग्राह गोविन्दो रश्मीन्रश्मिविदां वरः ॥ १८ ॥
मातलिर्वासवस्येव वृत्रं हन्तुं प्रयास्यतः ।
स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः ॥ १९ ॥
सहितो बुधशुक्राभ्यां तमो निघ्नन्यथा शशी ।
सैन्धवस्य वधं प्रेप्सुः प्रयातः शत्रुपूगहा ॥ २० ॥
सहाऽम्बुपतिमित्राभ्यां यथेन्द्रस्तारकामये ।
ततो वादित्रनिर्घोषैर्माङ्गल्यैश्च स्तवैः शुभैः ॥ २१ ॥
प्रयान्तमर्जुनं वीरं मागधाश्चैव तुष्टुवुः ।
सजयाशीः सपुण्याहः सूतमागधनिःस्वनः ॥ २२ ॥
युक्तो वादित्रघोषेण तेषां रतिकरोऽभवत् ।
तमनु प्रयतो वायुः पुण्यगन्धवहः शुभः ॥ २३ ॥
ववौ संहर्षयन्पार्थं द्विषतश्चाऽपि शोषयन् ।
ततस्तस्मिन्क्षणे राजन्विविधानि शुभानि च ॥ २४ ॥
प्रादुरासन्निमित्तानि विजयाय बहूनि च ।
पाण्डवानां त्वदीयानां विपरीतानि मारिष ॥ २५ ॥
दृष्ट्वाऽर्जुनो निमित्तानि विजयाय प्रदक्षिणम् ।
युयुधानं महेष्वासमिदं वचनमब्रवीत् ॥ २६ ॥
युयुधानाऽद्य युद्धे मे दृश्यन्ते विजयो ध्रुवः ।
यथा हीमानि लिङ्गानि दृश्यन्ते शिनिपुङ्गव ॥ २७ ॥

---

स्तुतिपूर्वक जयसूचक आशीर्वाद देकर उनका अभिनन्दन करने लगे। श्रेष्ठ रथी अर्जुन उस विजयदायक और युद्धमन्त्रों से अभिमन्त्रित सुवर्णमय रथ पर बैठकर सुमेरु पर्वत के शिखर पर स्थित सूर्यनारायण के समान अपूर्व शोभा को प्राप्त हुए॥१३।१७॥ शर्याति के यज्ञ में आते हुए इन्द्र के साथ जैसे अश्विनीकुमार गये थे वैसे ही अर्जुन के साथ श्रीकृष्ण और सात्यकि भी रथ पर सवार हुए। वृत्रासुर के वध के लिए जाते समय मातलि ने जैसे इन्द्र के घोड़ों की रास पकड़ी थी वैसे ही सारथी के कार्य में चतुर महात्मा श्रीकृष्ण ने भी अर्जुन के घोड़ों की रास हाथ में ली। चन्द्रमा जैसे अँधेरे का नाश करने के लिए बुध और शुक्र के साथ जाते हैं, अथवा इन्द्र जैसे तारक असुर के संग्राम में वरुण और सूर्य के साथ गये थे, वैसे ही शत्रुनाशक वीर अर्जुन, जयद्रथ-वध के लिए सात्यकि और श्रीकृष्ण के साथ भी रथ पर बैठकर रणक्षेत्र को चले॥१७।२१॥ बाजे बजने लगे, मङ्गलगीतों और स्तुतियों का पाठ किया जाने लगा। मागधों और सूतों के स्तुतिपाठ का शब्द, जयशब्द, आशीर्वाद, पुण्याहपाठ आदि का शब्द, एकत्र होकर उन वीरों की प्रसन्नता और उत्साह को बढ़ाने लगा॥ उस समय पवित्र सुगन्धित अनुकूल वायु पाण्डवों को प्रसन्न और उनके शत्रुओं को शोकातुर शुष्क करने लगा। हे राजेन्द्र! उस समय पाण्डवों की विजय के सूचक, और कौरवों के लिए उसके विपरीत, विवि

सोऽहं तत्र गमिष्यामि यत्र सैन्धवको नृपः ।
यियासुर्यमलोकाय मम वीर्यं प्रतीक्षते ॥ २८ ॥
यथा परमकं कृत्यं सैन्धवस्य वधो मम ।
तथैव सुमहत्कृत्यं धर्मराजस्य रक्षणम् ॥ २९ ॥
स त्वमद्य महाबाहो राजानं परिपालय ।
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा ॥ ३० ॥
न पश्यामि च तं लोके यस्त्वां युद्धे पराजयेत् ।
वासुदेवसमं युद्धे स्वयमप्यमरेश्वरः ॥ ३१ ॥
त्वयि चाऽहं पराश्वस्तः प्रद्युम्ने वा महारथे ।
शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ ॥ ३२ ॥
मय्यपेक्षा न कर्त्तव्या कथञ्चिदपि सात्वत ।
राजन्येव परा गुप्तिः कार्या सर्वात्मना त्वया ॥ ३३ ॥
नहि यत्र महाबाहुर्वासुदेवो व्यवस्थितः ।
किञ्चिद्व्यापद्यते तत्र यत्राऽहमपि च ध्रुवम् ॥ ३४ ॥
एवमुक्तस्तु पार्थेन सात्यकिः परवीरहा ।
तथेत्युक्त्वाऽगमत्तत्र यत्र राजा युधिष्ठिरः ॥ ३५ ॥

इति श्री महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि अर्जुनवाक्ये चतुरशीतितमोऽध्यायः ॥ ८४ ॥ समाप्तं प्रतिज्ञापर्व ।

सगुन दिखाई पड़ने लगे॥२१।२५॥अपने दक्षिण ओर विजयसूचक सगुन देखकर अर्जुन ने महाधनुर्द्धर सात्यकि से कहा—हे युयुधान ! मुझे इस समय जो शकुन देख पड़ते हैं, उनसे स्पष्ट जान पड़ता है कि आज के युद्ध में मेरी विजय अवश्य होगी । अब मैं वहाँ जाता हूँ जहाँ सिन्धुराज यमलोक को जाने के लिए मेरे पराक्रम की प्रतीक्षा कर रहा है॥२६।२८किन्तु जयद्रथ का वध करना जैसे मेरा आवश्यक कर्तव्य है, वैसे ही धर्मराज की रक्षा करना भी है । इसलिए आज तुम धर्मराज की रक्षा करो; यह कार्य मैं तुमको सौंपता हूँ । इसमें सन्देह नहीं है कि मेरे ही समान तुम भी उनकी रक्षा कर सकोगे । तुम श्रीकृष्ण के समान पराक्रमी हो, साक्षात् इन्द्र भी तुमको युद्ध में परास्त नहीं कर सकते॥२९।३१॥महारथी प्रद्युम्न या तुम यदि महाराज युधिष्ठिर की रक्षा का काम अपने ऊपर ले लो तो फिर मैं निश्चिन्त होकर जयद्रथ को मार दूँगा । मेरे लिए तुम कुछ चिन्ता न करना । मेरे रक्षक श्रीकृष्ण हैं । तुम सब प्रकार से धर्मराज की ही रक्षा करना । जहाँ मेरे साथ महाबाहु श्रीकृष्ण हैं वहाँ किसी प्रकार की विपत्ति नहीं आ सकती । अर्जुन के यों कहने पर शत्रुदमन यादवश्रेष्ठ सात्यकि युधिष्ठिर के समीप चले गये॥३२।३५॥

द्रोणपर्व का चौरासीवाँ अध्याय समाप्त हुआ ॥ ८४ ॥

अथ पञ्चाशीतितमोऽध्याय ॥ ८५ ॥

धृतराष्ट्र उवाच - श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः ।
अभिमन्यौ हते तत्र के वाऽयुध्यन्त मामकाः ॥ १ ॥

जानन्तस्तस्य कर्माणि कुरवः सव्यसाचिनः ।
कथं तत्किल्विषं कृत्वा निर्भया ब्रूहि मामकाः ॥ २ ॥
पुत्रशोकाभिसन्तप्तं क्रुद्धं मृत्युमिवाऽन्तकम् ।
आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ॥ ३ ॥
कपिराजध्वजं संख्ये विधुन्वानं महद्धनुः ।
दृष्ट्वा पुत्रपरिद्यूनं किमकुर्वत मामकाः ॥ ४ ॥
किं नु सञ्जय संग्रामे वृत्तं दुर्योधनं प्रति ।
परिदेवो महानद्य श्रुतो मे नाऽभिनन्दनम् ॥ ५ ॥
बभूवुर्ये मनोग्राह्याः शब्दाः श्रुतिसुखावहाः ।
न श्रूयन्तेऽद्य सर्वे ते सैन्धवस्य निवेशने ॥ ६ ॥
स्तुवतां नाऽद्य श्रूयन्ते पुत्राणां शिविरे मम ।
सूतमागधसङ्घानां नर्त्तकानां च सर्वशः ॥ ७ ॥
शब्देन नादिताऽभीक्ष्णमभवद्यत्र मे श्रुतिः ।
दीनानामद्य तं शब्दं न शृणोमि समीरितम् ॥ ८ ॥
निवेशने सत्यधृतेः सोमदत्तस्य सञ्जय ।
आसीनोऽहं पुरा तात शब्दमश्रौषमुत्तमम् ॥ ९ ॥
तदद्य पुण्यहीनोऽहमार्त्तस्वरनिनादितम् ।
निवेशनं गतोत्साहं पुत्राणां मम लक्षये ॥ १० ॥

पचासीवाँ अध्याय ॥ ८५ ॥

धृतराष्ट्र ने कहा—हे सञ्जय ! प्रातःकाल होने पर अभिमन्यु-वध के दुःख और शोक से पीड़ित पाण्डवों ने क्या किया? उन्होंने किन-किन वीरों से युद्ध किया? अर्जुन के अद्भुत पराक्रम और कर्मों को जाननेवाले कौरव लोग, अभिमन्यु-वधरूप अपराध करके भी, कैसे निर्भय बने रहे? पुत्रशोक से पीड़ित कुपित अर्जुन को मृत्यु की तरह आते हुए उन्होंने कैसे देखा? युद्ध में पुत्र के मारे जाने से दुःखित अर्जुन को गाण्डीव धनुष कँपाते देखकर मेरे पुत्रों ने क्या किया?॥१।४॥ हे सञ्जय ! संग्राम में दुर्योधन की कैसी अवस्था थी? आज घोर विलाप सुनाई पड़ रहा है। हे सूत-पुत्र ! आज जयद्रथ के शिविर में पहले की भाँति अन्य महाशब्दों को दबाकर आकाश तक उठनेवाला वह तुरही, शङ्ख, दुन्दुभि, सूत, मागध, बन्दीजन और नृत्य करनेवालों का शब्द नहीं सुन पड़ता॥५।७॥ मेरे पुत्रों के डेरे में आज सूत मागधों की की हुई स्तुति का शब्द और नृत्य करनेवालों की छमाछम नहीं सुन पड़ती। बहुत से दीन-दुःखी याचकों का, अनेक प्रकार का, श्रुति मधुर शब्द आज मुझे नहीं सुनाई पड़ता। पहले मैं सत्यधृति सोमदत्त के भवन में बैठकर जिस सुमधुर शब्द को सुनता था, वह आज मुझको नहीं सुनाई पड़ता। मैं अभागा आज देख रहा हूँ कि मेरे पुत्रों और बान्धवों के घरों में घोर आर्तनाद सुनाई पड़ रहा है और वे घर उत्साहहीन जान पड़ते हैं॥८।१०॥ विविंशति, दुर्मुख, चित्रसेन, विकर्ण तथा मेरे अन्य पुत्रों का वह हर्ष और उत्साह से पूर्ण शब्द आज

विविंशतेर्दुर्मुखस्य चित्रसेनविकर्णयोः ।
अन्येषां च सुतानां मे न तथा श्रूयते ध्वनिः ॥ ११ ॥
ब्राह्मणाः क्षत्रिया वैश्या यं शिष्याः पर्युपासते ।
द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणम् ॥ १२ ॥
वितण्डालापसँल्लापैर्द्रुतवादित्रवादितैः ।
गीतैश्च विविधैरिष्टै रमते यो दिवानिशम् ॥ १३ ॥
उपास्यमानो बहुभिः कुरुपाण्डवसात्वतैः ।
सूत तस्य गृहे शब्दो नाऽद्य द्रौणेर्यथा पुरा ॥ १४ ॥
द्रोणपुत्रं महेष्वासं गायना नर्त्तकाश्च ये ।
अत्यर्थमुपतिष्ठन्ति तेषां न श्रूयते ध्वनिः ॥ १५ ॥
विन्दानुविन्दयोः सायं शिबिरे यो महाध्वनिः ॥ १६ ॥
श्रूयते सोऽद्य न तथा केकयानां च वेश्मसु ।
नित्यं प्रमुदितानां च तालगीतस्वनो महान् ॥ १७ ॥
नृत्यतां श्रूयते तात गणानां सोऽद्य न स्वनः ।
सप्ततन्तून्वितन्वाना याजका यमुपासते ॥ १८ ॥
सौमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः ।
ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः ॥ १९ ॥
द्रोणस्याऽऽसीदविरतो गृहे तं न शृणोम्यहम् ।
नानादेशसमुत्थानां गीतानां योऽभवत्स्वनः ॥ २० ॥

नहीं सुन पड़ता । महाधनुर्द्धर और मेरे पुत्रों के परम सहायक अश्वत्थामा के घर में सदा ब्राह्मण, क्षत्रिय और वैश्य शिष्य बने हुए रहते थे । वितण्डा ( अपना पक्ष स्थापित न करके दूसरे के पक्ष पर आक्षेप करना ) आलाप ( भाषण ), सलाप ( दो मनुष्यों की परस्पर बात-चीत ), द्रुतगति से बाजे बजाकर और मनोहर गीत गाकर लोग दिन रात उनकी सेवा किया करते थे । बहुत से कौरव, पाण्डव और यादव उनकी उपासना किया करते थे । उन अश्वत्थामा के भवन में भी आज पहले का सा मनोहर मधुर शब्द नहीं सुन पड़ता ॥११।१४॥वीर अश्वत्थामा के यहाँ जो नृत्यकरने गानेवाले सदा रहते थे उनका भी शब्द आज नहीं सुन पड़ता । विन्द और अनुविन्द के शिविर में तथा केकयराजकुमारों के भवन में सायङ्काल को नित्य जो महाध्वनि सुन पड़ती थी वह आज नहीं सुनपड़ती।उनके यहाँ नित्य आनन्दित मनुष्यों का कोलाहल और नृत्य-करने गानेवालों के ताल और गीत की ध्वनि जो सुन पड़ती थी, उसका आज कहीं पता नहीं । सोमदत्त के पुत्र श्रुतनिधि के घर में पहले यज्ञ करनेवाले याज्ञिक सदा उपस्थित रहते थे, किन्तु आज वहाँ उनका शब्द नहीं सुनाई पड़ता॥१५।१९॥महात्मा द्रोणाचार्य के भवन में नित्य जो वेद पाठ का शब्द, प्रत्यञ्चा की ध्वनि, तोमर-खड्ग आदि अस्त्रों की झनकार और रथों की घरघराहट सुन पड़ती थी, वह आज नहीं सुन पड़ती । वहाँ अनेक देशों से आये हुए लोग नाना प्रकार के गीत गाते और बाजे बजाते थे । आज वह

वादित्रनादितानां च सोऽद्य न श्रूयते महान् ।
यदाप्रभृत्युपप्लव्याच्छान्तिमिच्छञ्जनार्दनः ॥ २१ ॥
आगतः सर्वभूतानामनुकम्पार्थमच्युतः ।
ततोऽहमब्रुवं सूत मन्दं दुर्योधनं तदा ॥ २२ ॥
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ।
कालप्राप्तमहं मन्ये मा त्वं दुर्योधनाऽतिगाः ॥ २३ ॥
शर्म चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
हितार्थमभिजल्पन्तं न तवाऽस्ति रणे जयः ॥ २४ ॥
प्रत्याचष्ट स दाशार्हमृषभं सर्वधन्विनाम् ।
अनुनेयानि जल्पन्तमनयान्नाऽन्वपद्यत ॥ २५ ॥
ततो दुःशासनस्यैव कर्णस्य च मतं द्वयोः ।
अन्ववर्त्तत मां हित्वा कृष्टः कालेन दुर्मतिः ॥ २६ ॥
न ह्यहं द्यूतमिच्छामि विदुरो न प्रशंसति ।
सैन्धवो नेच्छति द्यूतं भीष्मो न द्यूतमिच्छति ॥ २७ ॥
शल्यो भूरिश्रवाश्चैव पुरुमित्रो जयस्तथा ।
अश्वत्थामा कृपो द्रोणो द्यूतं नेच्छन्ति सञ्जय ॥ २८ ॥
एतेषां मतमादाय यदि वर्त्तेत पुत्रकः ।
सज्ञातिमित्रः ससुहृच्चिरं जीवेदनामयः ॥ २९ ॥
श्लक्ष्णा मधुरसम्भाषा ज्ञातिबन्धुप्रियंवदाः ।
कुलीनाः संमताः प्राज्ञाः सुखं प्राप्स्यन्ति पाण्डवाः ३० ॥

शब्द भी नहीं सुन पड़ता है। हे सञ्जय! महात्मा श्रीकृष्ण जिस समय उपप्लव्य नगर से, शान्ति की इच्छा से, सब प्राणियों के कल्याण के निमित्त सन्धि का प्रस्ताव लेकर आये थे उस समय मैंने मन्दमति दुर्योधन से कहा था कि "हे दुर्योधन! इस समय श्रीकृष्ण के द्वारा पाण्डवों से सन्धि कर लो। मेरी मति से सन्धि करने का यही ठीक अवसर है, इस अवसर को हाथ से न जाने दो। मेरी बात को स्वीकार कर लो। शान्ति के लिए प्रार्थना करनेवाले श्रीकृष्ण का कहा न मानोगे, तो हित के लिए वे जो उपदेश कर रहे हैं उसे टाल दोगे, तो युद्ध में किसी प्रकार तुम्हें जय नहीं प्राप्त हो सकेगी"॥२१।२४॥ हे सञ्जय! सन्धि करने के निमित्त मैंने इस प्रकार बारम्बार दुर्योधन से अनुरोध किया। किन्तु उस दुर्मति ने काल-वश होकर मेरी बात टालकर, कर्ण और दुःशासन के कहने के अनुसार, श्रीकृष्ण को नाहीं कर दी। मैं, बुद्धिमान् विदुर, द्रोण, बाह्लीक, जयद्रथ, सोम-दत्त, पितामह भीष्म, अश्वत्थामा, शल्य, भूरिश्रवा, पुरुमित्र, जय, धर्मात्मा कृपाचार्य तथा अन्य हमारे बुद्धिमान् भाई बन्धु सभी ने जुए का विरोध किया था॥२५।२८॥ यदि इन सब हितैषियों की और मेरी सम्मति को मेरा पुत्र दुर्योधन मान लेता तो [ कभी यह कुरुक्षय न होता; ] वह बहुत समय तक जीवित रहकर राज्य भोगता। उसके इष्ट-मित्र भी

धर्मापेक्षी नरो नित्यं सर्वत्र लभते सुखम् ।
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ॥ ३१ ॥
अर्हास्ते पृथिवीं भोक्तुं समर्थाः साधनेऽपि च ।
तेषामपि समुद्रान्ता पितृपैतामही मही ॥ ३२ ॥
नियुज्यमानाः स्थास्यन्ति पाण्डवा धर्मवर्त्मनि ।
सन्ति मे ज्ञातयस्तात येषां श्रोष्यन्ति पाण्डवाः ॥ ३३ ॥
शल्यस्य सोमदत्तस्य भीष्मस्य च महात्मनः ।
द्रोणस्याऽथ विकर्णस्य बाह्लीकस्य कृपस्य च ॥ ३४ ॥
अन्येषां चैव वृद्धानां भरतानां महात्मनाम् ।
त्वदर्थं ब्रुवतां तात करिष्यन्ति वचो हि ते ॥ ३५ ॥
कं वा त्वं मन्यसे तेषां यस्त्वान्ब्रूयादतोऽन्यथा ।
कृष्णो न धर्मं सञ्जह्यात्सर्वे ते हि तदन्वयाः ॥ ३६ ॥
मयापि चोक्तास्ते वीरा वचनं धर्मसंहितम् ।
नाऽन्यथा प्रकरिष्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ३७ ॥
इत्यहं विलपन्सूत बहुशः पुत्रमुक्तवान् ।
न च मे श्रुतवान्मूढो मन्ये कालस्य पर्ययम् ॥ ३८ ॥

आनन्द करते । मैंने बारम्बार समझाकर दुर्योधन से कहा था कि हे पुत्र ! पाण्डव लोग सरलहृदय, मधुरभाषी, अपने जातिवालों और भाइयों से प्रिय वचन बोलनेवाले, कुलीन, मिलकर चलनेवाले और बड़े प्राज्ञ हैं; उन्हें सुख प्राप्त होगा । जो पुरुष धर्म पर दृष्टि रखता है वह इस लोक में सर्वत्र सुख भोगता है और मरने पर परलोक में भी उसको शान्ति और कल्याण प्राप्त होता है॥२९।३१॥हे पुत्र ! धर्मात्मा पाण्डव जो बात स्वीकार कर लेंगे उसे कदापि मिथ्या नहीं करेंगे। उन्हें भी यह राज्य प्राप्त होना चाहिए । यह समुद्र-पर्यन्त पृथ्वी, तुम्हारे ही समान, उनके भी पिता पितामह की है । इस पर तुम्हारा और उनका एक सा अधिकार है । [ यदि तुम्हें यह शङ्का हो कि राज्य प्राप्त होने पर शक्तिशाली होकर पाण्डव तुम्हारा राज्य छीन लेंगे, तो तुम्हारी यह शङ्का निर्मूल है । ] पाण्डव लोग धर्म को नहीं छोड़ सकते । मेरे सजातीय वृद्धजन ऐसे हैं कि जिनका कहा पाण्डव सुनेंगे और मानेंगे । शल्य, सोमदत्त, महात्मा भीष्म, द्रोण, विकर्ण, बाह्लीक, कृपाचार्य तथा भरतवंश के अन्य सब श्रेष्ठ पुरुष तुम्हारे हित के निमित्त पाण्डवों से जो कुछ कहेंगे उसे पाण्डव स्वीकार कर लेंगे । पूर्वोक्त पुरुषों में से तुम ऐसा किसे समझते हो, कि वह तुम्हारे हित के विरुद्ध कार्य करने के लिए पाण्डवों से अनुरोध करेगा ? ॥३२।३५॥ फिर श्रीकृष्ण तो कभी धर्म को छोड़ने के नहीं । पाण्डव-गण उन्हीं के अनुगामी हैं । [ तुम धर्मपूर्वक, श्रीकृष्ण के कहने से, पाण्डवों को उनका राज्य दे दो और यह शङ्का छोड़ दो कि राज्य प्राप्त करके बली पाण्डव अधिक शक्तिशाली हो जायँगे और मेरा भी राज्य छीन लेंगे ।] पाण्डव धर्मात्मा हैं, वे मेरी बात स्वीकार कर लेंगे — जो स्वीकार कर लेंगे उसके विरुद्ध कुछ नहीं करेंगे । हे सञ्जय ! मैंने विलाप करते-करते इस प्रकार दुर्योधन से बारम्बार कहा था; किन्तु वह मूढ़ तो काल के वश हो रहा था; इसी से उसने मेरी बात नहीं सुनी । अत-एव मुझे स्पष्ट जान पड़ रहा है कि इस घोर संग्राम

वृकोदरार्जुनौ यत्र वृष्णिवीरश्च सात्यकिः ।
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ॥ ३९ ॥
धृष्टद्युम्नश्च दुर्धर्षः शिखण्डी चाऽपराजितः ।
अश्मकाः केकयाश्चैव क्षत्रधर्मा च सौमकिः ॥ ४० ॥
चैद्यश्च चेकितानश्च पुत्रः काश्यस्य चाऽभिभूः ।
द्रौपदेया विराटश्च द्रुपदश्च महारथः ॥ ४१ ॥
यमौ च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः ।
क एताञातु युध्येत लोकेऽस्मिन्वै जिजीविषु. ॥ ४२ ॥
दिव्यमस्त्रं विकुर्वाणान्प्रसहेद्वा परान्मम ।
अन्यो दुर्योधनात्कर्णाच्छकुनेश्चापि सौबलात् ॥ ४३ ॥
दुःशासनचतुर्थानां नाऽन्यं पश्यामि पञ्चमम् ।
येषामभीषुहस्तः स्याद्विष्वक्सेनो रथे स्थितः ॥ ४४ ॥
सन्नद्धश्चाऽर्जुनो योद्धा तेषां नास्ति पराजयः ।
तेषामथ विलापानां नाऽयं दुर्योधनः स्मरेत् ॥ ४५ ॥
हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ वै ।
तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शनात् ॥ ४६ ॥
दृष्ट्वेमां फलनिर्वृत्तिं मन्ये शोचन्ति पुत्रकाः ।
सेनां दृष्ट्वाऽभिभूतां मे शैनेयेनाऽर्जुनेन च ॥ ४७ ॥
शून्यान्दृष्ट्वा रथोपस्थान्मन्ये शोचन्ति पुत्रका. ।
हिमात्यये यथा कक्षं शुष्कं वातेरितो महान् ॥ ४८ ॥

में हमारे पक्ष का कोई भी जीवित नहीं बच सकता ॥३६।३८॥ जिस पक्ष में भीमसेन, अर्जुन, यादव श्रेष्ठ वीर सात्यकि, दुर्द्धर्ष धृष्टद्युम्न, अपराजित शिखण्डी, पाञ्चालकुमार उत्तमौजा, दुर्जय युधामन्यु, अश्मक, केकय, सोमक के पुत्र क्षत्रधर्मा, चेदिराज, चेकितान, काश्य के पुत्र अभिभू, द्रौपदी के पाँचों पुत्र, राजा विराट, महारथी द्रुपद, पुरुषसिंह नकुल और सहदेव आदि योद्धा हैं और सम्मति देनेवाले सहायक साक्षात् कृष्णचन्द्र हैं, उस पक्ष के विरुद्ध —युद्ध में जाने की इच्छा रखने वाला—कौन पुरुष खड़ा हो सकता है ? दिव्य अस्त्रों का प्रयोग करनेवाले रणनिपुण पाण्डवपक्ष के वीरों के पराक्रम और प्रहार को अतिरिक्त दुर्योधन, कर्ण, दुःशासन और शकुनि के और कौन सह सकता है ? मुझे तो इस समय इन चार पुरुषों के अतिरिक्त पाँचवाँ ऐसा कोई अपने दल में नहीं देख पड़ता, जो कुपित पाण्डवों के बाणप्रहार को सह सके, या उनका सामना ही कर सके॥३९।४२॥ हे सञ्जय ! सच तो यह है कि साक्षात् कृष्णचन्द्र जिस पक्ष के सारथी और कहना माननेवाले सहायक हैं और सुसज्जित कवचधारी वीर अर्जुन योद्धा हैं, वह पक्ष कभी युद्ध में हार नहीं सकता। तुम कहते हो कि पुरुषसिंह भीष्म और द्रोण दोनों मारे जा चुके हैं। इस समय न जाने दुर्योधन मेरे पहले के विलाप और शिक्षा को स्मरण करके पश्चात्ताप कर रहा होगा॥४३।४६॥ भविष्यदर्शी नीतिज्ञ विदुर

अग्निर्दहेत्तथा सेनां मामिकां स धनञ्जयः ।
आचक्ष्व मम तत्सर्वं कुशलो ह्यसि सञ्जय ॥ ४९ ॥
यदुपायात सायाह्ने कृत्वा पार्थस्य किल्बिषम् ।
अभिमन्यौ हते तात कथमासीन्मनो हि वः ॥ ५० ॥
न जातु तस्य कर्माणि युधि गाण्डीवधन्वनः ।
अपकृत्य महत्तात सोढुं शक्ष्यन्ति मामकाः ॥ ५१ ॥
किन्नु दुर्योधनः कृत्यं कर्णः कृत्यं किमब्रवीत् ।
दुःशासनः सौबलश्च तेषामेवङ्गतेष्वपि ॥ ५२ ॥
सर्वेषां समवेतानां पुत्राणां मम सञ्जय ।
यद्वृत्तं तात संग्रामे मन्दस्याऽपनयैर्भृशम् ॥ ५३ ॥
लोभानुगस्य दुर्बुद्धेः क्रोधेन विकृतात्मनः ।
राज्यकामस्य मूढस्य रागोपहतचेतसः ।
दुर्नीतं वा सुनीतं वा तन्ममाऽऽचक्ष्व सञ्जय ॥ ५४ ॥

इति श्री महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि धृतराष्ट्रवाक्ये पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

ने पहले ही इस युद्ध के कुफल का अनुमान करके जो वचन कहे थे उन्हें इस समय सत्य होते देखकर न जाने मेरे पुत्र सोचते और पश्चात्ताप करते होंगे। मुझे जान पड़ता है कि इस समय सात्यकि और अर्जुन के बाणों से अपनी सेना को पीड़ित, परास्त और रथों के आसनों को वीरों से शून्य देखकर मेरे पुत्र शोकाकुल हो रहे होंगे। जैसे ग्रीष्म ऋतु में वायु की सहायता से प्रचण्ड महा दावानल सूखी घास के ढेर को भस्म करता है वैसे ही वीर अर्जुन अवश्य अपने अस्त्रों से मेरी सेना को भस्म कर रहे होंगे॥४८।४९॥ हे सञ्जय! जब सायङ्काल को अर्जुन के पुत्र अभिमन्यु का वध करके, अर्जुन का अपराध करके, मेरे पक्ष के लोग अपने शिविर में लौट आये थे तब तुम लोगों के मन की क्या अवस्था थी? तुम वर्णन करने में निपुण हो, इसलिए सब वृत्तान्त ठीक-ठीक कहो। हे तात! यह निश्चित बात है कि मेरे पुत्र और योद्धा लोग अद्भुतकर्मा अर्जुन का अपकार करके उनके पराक्रम और प्रहार को किसी प्रकार नहीं सह सकते। अभिमन्यु के मारे जाने से अर्जुन के कुपित होने पर दुर्योधन, कर्ण, दुःशासन और शकुनि ने क्या कहा और अपना क्या कर्तव्य विचारा? हे तात! लोभी, दुर्मति, क्रोध से विकृत-मस्तिष्क, राज्य की आकांक्षा करनेवाले, मूढ, मन्द, मत्सर पूर्ण दुर्योधन के अन्याय से युद्ध में जो कुछ परिणाम निकला, सो मुझसे कहो। दुर्योधन आदि ने उस समय अच्छी नीति को ग्रहण किया या दुर्नीति को ग्रहण किया था॥५०।५४॥

द्रोणपर्व का पचासीवाँ अध्याय समाप्त हुआ ॥ ८५ ॥

अथ षडशीतितमोऽध्याय ॥ ८६ ॥

सञ्जय उवाच—हन्त ते सम्प्रवक्ष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् ॥ १ ॥
गतोदके सेतुबन्धो यादृक्तादृगयं तव ।
विलापो निष्फलो राजन्मा शुचो भरतर्षभ ॥ २ ॥

अनतिक्रमणीयोऽयं कृतान्तस्याऽद्भुतो विधिः ।
मा शुचो भरतश्रेष्ठ दिष्टमेतत्पुरातनम् ॥ ३ ॥
यदि त्वं हि पुरा द्यूतात्कुन्तीपुत्रं युधिष्ठिरम् ।
निवर्त्तयेथाः पुत्रांश्च न त्वां व्यसनमाव्रजेत् ॥ ४ ॥
युद्धकाले पुनः प्राप्ते तदैव भवता यदि ।
निवर्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत् ॥ ५ ॥
दुर्योधनं चाऽविधेयं बध्नीतेति पुरा यदि ।
कुरूनचोदयिष्यस्त्वं न त्वां व्यसनमाव्रजेत् ॥ ६ ॥
न ते बुद्धिव्यभीचारमुपलप्स्यन्ति पाण्डवाः ।
पञ्चाला वृष्णयः सर्वे ये चाऽन्येऽपि नराधिपाः ॥ ७ ॥
स कृत्वा पितृकर्म त्वं पुत्रं संस्थाप्य सत्पथे ।
वर्तेथा यदि धर्मेण न त्वां व्यसनमाव्रजेत् ॥ ८ ॥
त्वं तु प्राज्ञतमो लोके हित्वा धर्मं सनातनम् ।
दुर्योधनस्य कर्णस्य शकुनेश्चाऽन्वगा मतम् ॥ ९ ॥
तत्ते विलपितं सर्वं मया राजन्निशामितम् ।
अर्थे निविशमानस्य विषमिश्रं यथा मधु ॥ १० ॥

---

छियासीवाँ अध्याय ॥ ८६ ॥

सञ्जय ने कहा—हे महाराज ! मैंने युद्ध की सब घटनाएँ प्रत्यक्ष देखी हैं। आप सावधान होकर सुनिए, मैं सब वृत्तान्त कहता हूँ। वास्तव में आपका ही इसमें सारा दोष है। हे भरतश्रेष्ठ ! जल की बाढ़ निकल जाने पर पुल बाँधने की चेष्टा के समान आपका यह विलाप इस समय निष्फल है। इसलिए अब आप शोक न कीजिए। हे राजेन्द्र ! काल का अद्भुत विधान किसी प्रकार टल नहीं सकता। इस होनी को दैव ने पहले ही निश्चित कर दिया था। इसलिए अब आप व्यर्थ शोक न कीजिए॥१।३॥हे कुरुकुल-श्रेष्ठ ! पहले ही यदि आप युधिष्ठिर को और अपने पुत्रों को द्यूतक्रीड़ा न करने देते तो कभी यह सङ्कट न उपस्थित होता; आपको यह दुःखदायक दृश्य न देखना पड़ता। फिर, युद्ध होने के पहले ही यदि आप कुपित कौरवों और पाण्डवों को समझा बुझाकर शान्त कर देते तो यह आपत्ति कदापि न आती। यदि आप पहले ही कहा न माननेवाले दुर्योधन को पकड़कर कारागार में डाल देते और कौरवों को विनाश के मुख में जाने से बचा लेते तो यह अनर्थ न होता। सब पाण्डव, पाञ्चाल, यादव और अन्य राजा लोग जानते हैं कि यह महा अनर्थ आपकी विषम बुद्धि के दोष से ही हुआ है॥४।७॥यदि आप पिता के योग्य कार्य करके दुर्योधन को [ समझाकर या दण्ड देकर ] सुमार्ग पर लगाते और धर्म के अनुसार कार्य करते अर्थात् पाण्डवों को ही उनके भाग्य का राज्य दे देते तो आपको कभी इस सङ्कट का सामना न करना पड़ता। आप बहुत ही चतुर कहलाते हैं; किन्तु आप सनातन धर्म का त्याग करके दुर्योधन, कर्ण और शकुनि के मत पर चले। हे राजेन्द्र ! मैं आपका यह सब विलाप सुन चुका। आप बड़े राज्यलोभी हैं, आपका यह विलाप विष मिले हुए मधु के समान है॥८।१०॥आप ऐसा समझते हैं कि इस अनर्थ में आपके पुत्र का ही

नाऽमन्यत तदा कृष्णो राजानं पाण्डवं पुरा ।
न भीष्मं नैव च द्रोणं यथा त्वां मन्यतेऽच्युतः ॥ ११ ॥
अजानात्स यदा तु त्वां राजधर्माद्धरश्च्युतम् ।
तदाप्रभृति कृष्णस्त्वां न तथा बहु मन्यते ॥ १२ ॥
परुपाण्युच्यमानांश्च यथा पार्थानुपेक्षसे ।
तस्याऽनुबन्धः प्राप्तस्त्वां पुत्राणां राज्यकामुक ॥ १३ ॥
पितृपैतामहं राज्यमपवृत्तं तदाऽनघ ।
अथ पार्थैर्जितां कृत्स्नां पृथिवीं प्रत्यपद्यथाः ॥ १४ ॥
पाण्डुना निर्जितं राज्यं कौरवाणां यशस्तथा ।
ततश्चाऽप्यधिकं भूयः पाण्डवैर्धर्मचारिभिः ॥ १५ ॥
तेषां तत्तादृशं कर्म त्वामासाद्य सुनिष्फलम् ।
यत्पित्र्याद्भ्रंशिता राज्यात्त्वयेहाऽऽमिपगृद्धिना ॥ १६ ॥
यत्पुनर्युद्धकाले त्वं पुत्रान्गर्हयसे नृप ।
बहुधा व्याहरन्दोषान्न तदद्योपपद्यते ॥ १७ ॥
न हि रक्षन्ति राजानो युद्ध्यन्तो जीवितं रणे ।
चमूं विगाह्य पार्थानां युध्यन्ते क्षत्रियर्षभाः ॥ १८ ॥
यां तु कृष्णार्जुनौ सेनां यां सात्यकिवृकोदरौ ।
रक्षेरन्को नु तां युद्ध्येच्चमूमन्यत्र कौरवैः ॥ १९ ॥

सारा दोप है, आपका नहीं ह सो मैने सुन लिया। श्रीकृष्ण पहले राजा युधिष्ठिर, भाष्म या द्रोण को उतना नहीं मानते थे जितना कि आपको। किन्तु जब से उनको यह प्रतीत हो गया कि आप ऊपर से तो धर्म की बातें कहते हैं किन्तु हृदय से राज्य के लोभी और अधर्मी पुत्र के पक्षपाती हैं तब से श्रीकृष्ण की दृष्टि से आप गिर गये हैं। हे महाराज! भरी सभा में आपके पुत्र आदि ने पाण्डवों को उचित अनुचित वचन कहे और आप उनकी अपेक्षा ही करते रहे, उसी का यह परिणाम आपको मिल रहा है॥११। १३॥हे भरतश्रेष्ठ! आपने यदि पिता पितमह के राज्य को इस प्रकार छीन लेने की चेष्टा न की होती, तो वीर पाण्डव सम्पूर्ण पृथ्वी जीतकर आपको अर्पण कर दते। कौरवों के राज्य और यश को पहले शत्रुओं ने छीन लिया था। पाण्डु न ही शत्रुओं को जीतकर उस यश और राज्य को प्राप्त किया था। धर्मात्मा पाण्डवों ने उस यश और राज्य को और भी अधिक बढ़ाया था। किन्तु अपने राज्य के लोभ में पड़कर पाण्डवों को उनके पैतृक राज्य से भ्रष्ट क्या किया, पाण्डु और पाण्डवों के उस कार्य को निष्फल कर डाला॥१४॥१६॥चाहे जो हो, इस समय युद्ध-काल में जो आप अपने पुत्रों की निन्दा करते हैं और अनेक प्रकार से उनके दोषों का वर्णन कर रहे हैं, सो यह सब व्यर्थ ही है। राजा लोग युद्ध ठानकर फिर रण मे जीवन की ममता नहीं रखते। इस समय आपके पक्ष के पराक्रमी वीर क्षत्रियश्रेष्ठ जीवन का मोह छोड़कर, पाण्डवों की सेना में प्रवेश करके, युद्ध कर रहे हैं। श्रीकृष्ण, अर्जुन, सात्यकि और भीमसेन जैसे वीरश्रेष्ठ

येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दनः ।
येषां च सात्यकिर्योद्धा येषां योद्धा वृकोदरः ॥ २० ॥
को हि तान्विषहेद्योद्धुं मर्त्यधर्मा धनुर्धरः ।
अन्यत्र कौरवेयेभ्यो ये वा तेषां पदानुगाः ॥ २१ ॥
यावत्तु शक्यते कर्त्तुमन्तरज्ञैर्जनाधिपैः ।
क्षत्रधर्मरतैः शूरैस्तावत्कुर्वन्ति कौरवाः ॥ २२ ॥
यथा तु पुरुषव्याघ्रैर्युद्धं परमसङ्कटम् ।
कुरूणां पाण्डवैः सार्धं तत्सर्वं शृणु तत्त्वतः ॥ २३ ॥

इति श्री महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि सञ्जयवाक्ये षडशीतितमोऽध्याय. ॥ ८६ ॥

अद्वितीय वीर जिस सेना के सरक्षक हैं, उससे अतिरिक्त वीर कौरवों के और कौन लोहा लेसकता है?॥१७।१९॥जिस दल के योद्धा अर्जुन, सात्यकि और भीमसेन हैं तथा जिस पक्ष के मन्त्री श्रीकृष्णचन्द्र हैं, उस पक्ष के पराक्रम को वीरश्रेष्ठ कौरवों और उनके साथी क्षत्रियो के अतिरिक्त और कौन मनुष्य सह सकता है? हे महाराज!प्रहार और आक्रमण के अवसर को जाननेवाले और क्षत्रिय धर्म में निरत शूर मनुष्य जितना कर सकते हैं उतना वीर कौरव कर रहे हैं। पुरुषसिंह पाण्डवों के साथ कौरवों का जैसा घोर संग्राम हुआ है उसका वर्णन मैं विस्तार पूर्वक कहता हूँ, आप ध्यान देकर सुनिए॥२०।२३॥

द्रोणपर्व का छियासीवाँ अध्याय समाप्त हुआ ॥ ८६ ॥

अथ सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

सञ्जय उवाच—तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः ।
स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितुं ततः ॥ १ ॥
शूराणां गर्जतां राजन्संक्रुद्धानाममर्षिणाम् ।
श्रूयन्ते स्म गिरश्चित्राः परस्परवधैषिणाम् ॥ २ ॥
विस्फार्य च धनूंष्यन्ये ज्याः परे परिमृज्य च ।
विनिःश्वसन्तः प्राक्रोशन्क्वेदानीं स धनञ्जयः ॥ ३ ॥
विकोशान्सुत्सरूनन्ये कृतधारान्समाहितान् ।
पीतानाकाशसङ्काशानसीन्केचिच्च चिक्षिपुः ॥ ४ ॥

सत्तासीवाँ अध्याय ॥ ८७ ॥

सञ्जय कहते हैं—हे महाराज! रात्रि व्यतीत होने पर शस्त्रधारियों में श्रेष्ठ द्रोणाचार्य अपनी सेनाओं को लेकर शकटव्यूह की रचना करने लगे। उस समय वहाँ गरजते हुए, क्रोधी, असहनशील, शूर और परस्पर वध करने के लिए उद्यत-योद्धाओं की विचित्र बोलियाँ सुन पड़ने लगीं। कोई धनुष चढ़ाकर, कोई धनुष की डोरी साफ़ करते और श्वास लेते हुए चिल्लाने लगे कि इस समय अर्जुन कहाँ हैं। कुछ लोग म्यान से निकली हुई, धारदार, जल के मारे आकाश की भाँति चमकीली, सुन्दर मूठवाली तलवारों के साथ फेंकने लगे॥१।३॥सहस्रों शिक्षित वीर लोग,संग्राम के लिए उद्यत होकर, चारों ओर तलवारों और धनुषों के पैंतरे

चरन्तस्त्वसिमार्गांश्च धनुर्मार्गांश्च शिक्षया ।
संग्राममनसः शूरा दृश्यन्ते स्म सहस्रशः ॥ ५ ॥
सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः ।
समुत्क्षिप्य गदाश्चाऽन्ये पर्यपृच्छन्त पाण्डवम् ॥ ६ ॥
अन्ये बलमदोन्मत्ताः परिघैर्बाहुशालिनः ।
चक्रुः सम्बाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः ॥ ७ ॥
नानाप्रहरणैश्चाऽन्ये विचित्रस्रगलंकृताः ।
संग्राममनसः शूरास्तत्र तत्र व्यवस्थिताः ॥ ८ ॥
क्वाऽर्जुनः क्व स गोविन्दः क्व च मानी वृकोदरः ।
क्व च ते सुहृदस्तेषामाह्वयन्ते रणे तदा ॥ ९ ॥
ततः शङ्खमुपाध्माय त्वरयन्वाजिनः स्वयम् ।
इतस्ततस्तान्रचयन्द्रोणश्चरति वेगितः ॥ १० ॥
तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनन्दिषु ।
भारद्वाजो महाराज जयद्रथमथाऽब्रवीत् ॥ ११ ॥
त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः ।
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥ १२ ॥
शतं चाऽश्वसहस्राणां रथानामयुतानि षट् ।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ १३ ॥
पदातीनां सहस्राणि दंशितान्येकविंशतिः ।
गव्यूतिषु त्रिमात्रासु मामनासाद्य तिष्ठत ॥ १४ ॥

दिखाते दिखाई पड़ने लगे। कुछ वीर चन्दन लगी हुई, घण्टा-भूषित और सुवर्ण हीरे आदि से अलङ्कृत गदाएँ उठाकर अर्जुन को पूछने लगे। कुछ बाहुबल-सम्पन्न योद्धा, उठे हुए इन्द्रध्वज-सदृश, परिघ उठाकर आकाश को अवकाश-हीन बनाने लगे॥४।७॥ विचित्र मालाएँ पहने हुए अन्य योद्धा लोग संग्राम के लिए प्रस्तुत होकर, अनेक प्रकार के शस्त्र हाथ में लेकर, अपने-अपने स्थान पर खड़े हो रणभूमि में पुकारने लगे कि अर्जुन कहाँ है? अभिमानी भीमसेन कहाँ है? गोविन्द कृष्ण कहाँ है? और उनके सब सुहृद पाञ्चाल आदि कहाँ हैं? उस समय अपना दिव्य शङ्ख बजाकर स्वयं रथ के घोड़ों को शीघ्रता से चलाते हुए आचार्य द्रोण इधर-उधर व्यूह में सेना स्थापित करते हुए वेग से जाते दिखाई पड़ रहे थे॥८।१०॥ युद्ध-प्रिय सब सेना जब उचित स्थान पर तैनात हो चुकी तब द्रोणाचार्य ने कहा—हे जयद्रथ! तुम, सोमदत्त के पुत्र, महारथी कर्ण अश्वत्थामा, शल्य, वृषसेन और कृपाचार्य, ये लोग एक लाख घोड़े, साठ सहस्र रथ, चौदह सहस्र मदमत्त गजराज और इक्कीस सहस्र कवचधारी पैदल सेना लेकर मुझसे छः कोस के अन्तर पर ठहरो। वहाँ पर इस प्रकार चतुराङ्गिणी सेना और छः महारथियों के मध्य में तुम रहोगे; तब इन्द्र सहित देवता भी तुम पर आक्रमण न कर सकेंगे, पाण्डवों की तो कोई बात ही नहीं है। अब तुम निर्भय होकर अपने

तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव ॥ १५ ॥
एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः ।
सम्प्रायात्सह गान्धारैर्वृतस्तैश्च महारथैः ॥ १६ ॥
वर्मिभिः सादिभिर्यत्तैः प्रासपाणिभिरास्थितैः ।
चामरापीडिनः सर्वे जाम्बूनदविभूषिताः ॥ १७ ॥
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः ।
ते चैकसप्तसाहस्रास्त्रिसाहस्राश्च सैन्धवाः ॥ १८ ॥
मत्तानां सुविरूढानां हस्त्यारोहैर्विशारदैः ।
नागानां भीमरूपाणां वर्मिणां रौद्रकर्मिणाम् ॥ १९ ॥
अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव ।
अग्रतः सर्वसैन्यानां युद्ध्यमानो व्यवस्थितः ॥ २० ॥
ततो दुःशासनश्चैव विकर्णश्च तवाऽऽत्मजौ ।
सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ ॥ २१ ॥
दीर्घो द्वादशगव्यूतिः पश्चार्धे पञ्चविस्तृतः ।
व्यूहस्तु चक्रशकटो भारद्वाजेन निर्मितः ॥ २२ ॥
नानानृपतिभिर्वीरैस्तत्र तत्र व्यवस्थितैः ।
रथाश्व राजपत्त्योघैर्द्रोणेन विहितः स्वयम् ॥ २३ ॥
पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः सुदुर्भिदः ।
सूचीपद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः ॥ २४ ॥

स्थान पर जाओ॥११।१५॥सञ्जय कहते हैं—हे महाराज! आचार्य के इस कथन से धैर्य धर करके सिन्धुपति जयद्रथ, उन महारथियों के साथ, निर्दिष्ट स्थान को गये। उनके साथ गान्धार देश के योद्धा, उनके शरीर-रक्षक होकर, चले। वे लोग कवच पहने, सावधान, घोड़ों पर सवार और हाथों में प्रास ( एक शस्त्र ) लिए हुए थे। हे राजेन्द्र! जयद्रथ रथ के सुशिक्षित घोड़े कलँगी और सुवर्ण के आभूषणों से सजे हुए थे। जयद्रथ के साथ भली भाँति अलङ्कृत, सिन्धु देश के तीन सहस्र और अन्य सात सहस्र घोड़े थे, जिन पर शस्त्रास्त्र योद्धा सवार थे॥१६।१८॥हे राजेन्द्र! आपके पुत्र दुर्मर्षण, डेढ़ सहस्र मस्त हाथियों की सेना लेकर, सब सैनिकों के आगे युद्ध करने के लिए खड़े हुए। उनके उन हाथियों का आकार भयानक और कर्म बड़े ही रौद्र थे। उन पर युद्ध-निपुण योद्धा सवार थे। आपके पुत्र दुःशासन और विकर्ण दोनों ही, जयद्रथ की रक्षा के निमित्त, आगे की सेना में स्थित हुए। महारथी द्रोणाचार्य ने स्वयं महावर्गी असंख्य वीर राजाओं को तथा रथ, घोड़े, हाथी और पैदल सेना को उचित स्थान पर तैनात करके एक दुर्गम व्यूह बनाया। उस व्यूह का अग्र भाग छकड़े के आकार का चौड़ा था और पिछला भाग चक्र अथवा कमल के आकार का था। वह व्यूह आगे चौबीस कोस लम्बा और पीछे दस कोस चौड़ा था॥१९।२३॥महाराज!

एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः ।
सूचीमुखे महेष्वासः कृतवर्मा व्यवस्थितः ॥ २५ ॥
अनन्तरं च काम्बोजो जलसन्धश्च मारिष ।
दुर्योधनश्च कर्णश्च तदनन्तरमेव च ॥ २६ ॥
ततः शतसहस्राणि योधानामनिवर्तिनाम् ।
व्यवस्थितानि सर्वाणि शकटे मुखरक्षिणाम् ॥ २७ ॥
तेषां च पृष्ठतो राजा बलेन महता वृतः ।
जयद्रथस्ततो राजा सूचीपार्श्वे व्यवस्थितः ॥ २८ ॥
शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः ।
अनु तस्याऽभवद्भोजो जुगोपैनं ततः स्वयम् ॥ २९ ॥
श्वेतवर्माऽम्बरोष्णीषो व्यूढोरस्को महाभुजः ।
धनुर्विस्फारयन्द्रोणस्तस्थौ क्रुद्ध इवाऽन्तकः ॥ ३० ॥
पताकिनं शोणहयं वेदिकृष्णाजिनध्वजम् ।
द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन् ॥ ३१ ॥
सिद्धचारणसङ्घानां विस्मयः सुमहानभूत् ।
द्रोणेन विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमम् ॥ ३२ ॥
स शैलसागरवनां नानाजनपदाकुलाम् ।
ग्रसेद्व्यूहः क्षितिं सर्वामिति भूतानि मेनिरे ॥ ३३ ॥
बहुरथमनुजाश्वपत्तिनागं प्रतिभयनिःस्वनमद्भुतानुरूपम् ।
अहितहृदयभेदनं महद्वै शकटमवेक्ष्य कृतं ननन्द राजा ॥ ३४ ॥

इति श्री महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि कौरवव्यूहनिर्माणे सप्ताशीतितमोऽध्याय ॥ ८७ ॥

द्रोणाचार्य ने पीछे के पद्मव्यूह के भीतर एक और विचित्र व्यूह बनाया । वह सूचीमुख व्यूह था । वह व्यूह बहुत ही गुप्त और दुर्भेद्य था । सूचीमुख के द्वार पर महाधनुर्द्धर कृतवर्मा उसकी रक्षा के लिए नियुक्त थे । उसके पश्चात् क्रमश काम्बोजराज, जलसन्ध और उनके पश्चात् महाराज दुर्योधन और कर्ण थे । युद्ध से कदापि न हटनेवाले एक लाख वीर योद्धा शकटव्यूह के अग्र भाग की रक्षा करने लगे॥२४।२७॥असंख्य सेना साथ में लिये हुए राजा दुर्योधन उन योद्धाओं के पीछे थे । राजा जयद्रथ सबके पीछे गूढ़ सूची व्यूह के पार्श्वभाग में थे । द्रोणाचार्य स्वयं शकटव्यूह के अग्रभाग में रहकर उसकी रक्षा करने लगे । श्वेत कवच, वस्त्र, पगड़ी आदि पहने, चौड़ी छातीवाले, महाबाहु द्रोणाचार्य क्रुद्ध काल की भाँति अपने रथ पर बैठे हुए बारम्बार धनुष की डोरी बजा रहे थे । वही उस सेना के रक्षक और सञ्चालक थे॥२८।३०॥वेदी तथा मृगछाला के चिह्नों से युक्त ध्वजा और लाल रङ्ग के घोड़ों से शोभित द्रोणाचार्य का रथ देखकर सब कौरवों को अपार हर्ष हुआ । क्षोभ को प्राप्त समुद्र के समान, द्रोणाचार्य के बनाये, उस व्यूह को देखकर सिद्धों और चारणों को बड़ा ही विस्मय हुआ । सब प्राणी अपने अन्तःकरण में कहने

लगे कि यह सैनिकों का विशाल व्यूह पर्वत-समुद्र वन-सहित सम्पूर्ण पृथ्वी को भी नष्ट कर सकता है। बहुत रथ, रथी, हाथी, घोड़े और पैदल सेना से परिपूर्ण, महा कोलाहल से भयङ्कर, अद्भुत, आप ही अपनी उपमा और शत्रुओं के हृदय को दहला देनेवाला वह शकटव्यूह देखकर राजा दुर्योधन को बड़ी प्रसन्नता हुई॥२१।२४॥

— ० —

द्रोणपर्व का सत्तासीवाँ अध्याय समाप्त हुआ ॥ ८७ ॥

अथ अष्टाशीतितमोऽध्याय. ॥ ८८ ॥

सञ्जय उवाच—ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष ।
ताड्यमानासु भेरीषु मृदङ्गेषु नदत्सु च ॥ १ ॥
अनीकानां च संह्लादे वादित्राणां च निःस्वने ।
प्रध्मापितेषु शङ्खेषु सन्नादे लोमहर्षणे ॥ २ ॥
अभिहारयत्सु शनकैर्भरतेषु युयुत्सुषु ।
रौद्रे मुहूर्त्ते सम्प्राप्ते सव्यसाची व्यदृश्यत ॥ ३ ॥
बलानां वायसानां च पुरस्तात्सव्यसाचिनः ।
बहुलानि सहस्राणि प्राक्रीडंस्तत्र भारत ॥ ४ ॥
मृगाश्च घोरसन्नादाः शिवाश्चाऽशिवदर्शनाः ।
दक्षिणेन प्रयातानामस्माकं प्राणदंस्तथा ॥ ५ ॥
सनिर्घाता ज्वलन्त्यश्च पेतुरुल्काः सहस्रशः ।
चचाल च मही कृत्स्ना भये घोरे समुत्थिते ॥ ६ ॥
विष्वग्वाताः सनिर्घाता रूक्षाः शर्करकर्षिणः ।
ववुरायाति कौन्तेये संग्रामे समुपस्थिते ॥ ७ ॥
नाकुलिश्च शतानीको धृष्टद्युम्नश्च पार्षतः ।
पाण्डवानामनीकानि प्राज्ञौ तौ व्यूहतुस्तदा ॥ ८ ॥

अट्ठासीवाँ अध्याय ॥ ८८ ॥

सञ्जय कहते हैं—हे महाराज! आपके पक्ष की सब सेना जब व्यूह में उचित स्थान पर स्थापित हो चुकी; चारों ओर भेरी मृदङ्ग ढङ्के आदि बजने लगे; सेना का कोलाहल और बाजों का शब्द आकाश-मण्डल तक गूँज उठा, लोमहर्षण शङ्ख नाद रणभूमि में व्याप्त हो गया; और हाथों में शस्त्र लेकर कौरव-गण युद्ध के लिए प्रस्तुत हुए, तब उस रौद्रमुहूर्त में सबके सन्मुख अर्जुन आये॥१।३॥उनकी सेना के आगे-आगे झुण्ड के झुण्ड सहस्रों कौए परिभ्रमण कर रहे थे; मांसाहारी रात्रि घनियाले पशु-पक्षी क्रीड़ा सी कर रहे थे। अशुभ रूपवाली गिदड़ियाँ हमारी सेना के चलते समय मार्ग में, उसके दक्षिण भाग में, घोर शब्द करने लगीं और मृगों के झुण्ड भी निकट शब्द करके अशुभ की सूचना देने लगे। उस भयानक जनसंहार के उपस्थित होने पर वज्रध्वनि के साथ आकाश से जलती हुई सहस्रों उल्काएँ गिरने लगीं। सम्पूर्ण पृथ्वी बारम्बार काँपने लगी॥४।६॥अर्जुन जिस समय संग्रामभूमि में आये उस समय कङ्कड़ियाँ उड़ाती हुई रूखी आँधी चलने लगी। इधर व्यूह-रचना में निपुण नकुल के पुत्र शतानीक और धृष्टद्युम्न दोनों

ततो रथसहस्रेण द्विरदानां शतेन च ।
त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः ॥ ९ ॥
अध्यर्धमात्रे धनुषां सहस्रे तनयस्तव ।
अग्रतः सर्वसैन्यानां स्थित्वा दुर्मर्षणोऽब्रवीत् ॥ १० ॥
अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्मदम् ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ ११ ॥
अद्य पश्यन्तु संग्रामे धनञ्जयममर्षणम् ।
विषक्तं मयि दुर्धर्षमश्मकूटमिवाऽश्मनि ॥ १२ ॥
तिष्ठध्वं रथिनो यूयं संग्राममभिकांक्षिणः ।
युध्यामि संहतानेतान्यशो मानं च वर्धयन् ॥ १३ ॥
एवं ब्रुवन्महाराज महात्मा स महामतिः ।
महेष्वासैर्वृतो राजन्महेष्वासो व्यवस्थितः ॥ १४ ॥
ततोऽन्तक इव क्रुद्धः सवज्र इव वासवः ।
दण्डपाणिरिवाऽसह्यो मृत्युः कालेन चोदितः ॥ १५ ॥
शूलपाणिरिवाऽक्षोभ्यो वरुणः पाशवानिव ।
युगान्ताग्निरिवाऽर्चिष्मान्प्रधक्ष्यन्वै पुनः प्रजाः ॥ १६ ॥
क्रोधामर्षबलोद्धूतो निवातकवचान्तकः ।
जयो जेता स्थितः सत्ये पारयिष्यन्महाव्रतम् ॥ १७ ॥
आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत् ।
शुभ्रमाल्याम्बरधरः स्वङ्गदश्चारुकुण्डलः ॥ १८ ॥

---

शूरवीर पाण्डवों की सेना के व्यूह की रचना करने लगे॥७।८॥हे राजेन्द्र ! उधर आपके पुत्र दुर्मर्षण ने भी एक सहस्र रथ, सौ हाथी, तीन सहस्र घोड़े और दस सहस्र पैदल साथ लेकर सब सेना से तीन सहस्र गज आगे खड़े होकर कहा— हे वीरो ! तटभूमि जैसे समुद्र के वेग को रोकती है वैसे ही आज मैं युद्ध में दुर्द्धर्ष वीर अर्जुन को आगे नहीं बढ़ने दूँगा । आज सब लोग अर्जुन को उसी प्रकार मुझसे टकरा कर रुकते देखेंगे जिस प्रकार चट्टान में पत्थर अटक जाता है । हे संग्राम की आकांक्षा रखनेवाले वीरो ! तुम सब लोग खड़े खड़े कौतुक देखना । मैं अकेला ही अब इन सब एकत्र होकर आनेवाले पाण्डवपक्ष के वीरों से युद्ध करूँगा और अपने यश और मान को बढ़ाऊँगा ॥९।१३॥हे महाराज ! महारथी वीरों के साथ इस प्रकार कहते हुए महाधनुर्द्धर वीर दुर्मर्षण अपने स्थान पर डटकर खड़े हुए । उधर वज्रधारी इन्द्र के तुल्य, दण्डपाणि यमराज के समान असह्य, काल से प्रेरित हुए-हुए मृत्यु के समान अनिवार्य, शङ्कर के समान अक्षोभ्य, पाशधारी वरुण के समान वीर अर्जुन प्रलयकाल के ज्वालामालायुक्त अग्नि के समान क्रोध और तेज से प्रज्वलित देख पड़ने लगे । ऐसा जान पड़ता था कि मानों वे सब जगत् को भस्म कर डालेंगे । क्रोध, अमर्ष और बल से प्रचण्ड, युद्धविजयी, निवातकवच दानवों का नाश करनेवाले अर्जुन उस समय अपनी

रथप्रवरमास्थाय नरो नारायणानुगः ।
विधुन्वन्गाण्डिवं संख्ये बभौ सूर्य इवोदितः ॥ १९ ॥
सोऽग्रानीकस्य महत इषुपाते धनञ्जयः ।
व्यवस्थाप्य रथं राजञ्शङ्खं दध्मौ प्रतापवान् ॥ २० ॥
अथ कृष्णोऽप्यसम्भ्रान्तः पार्थेन सह मारिष ।
प्राध्मापयत्पाञ्चजन्यं शङ्खप्रवरमोजसा ॥ २१ ॥
तयोः शङ्खप्रणादेन तव सैन्ये विशाम्पते ।
आसन्संहृष्टरोमाणः कम्पिता गतचेतसः ॥ २२ ॥
यथा त्रस्यन्ति भूतानि सर्वाण्यशनिनिःस्वनात् ।
तथा शङ्खप्रणादेन वित्रेसुस्तव सैनिकाः ॥ २३ ॥
प्रसुस्रुवुः शकृन्मूत्रं वाहनानि च सर्वशः ।
एवं सवाहनं सर्वमाविग्नमभवद्बलम् ॥ २४ ॥
सीदन्ति स्म नरा राजञ्शङ्खशब्देन मारिष ।
विसंज्ञाश्चाऽभवन्केचित्केचिद्राजन्वितत्रसुः ॥ २५ ॥
ततः कपिर्महानादं सह भूतैर्ध्वजालयैः ।
अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकान् ॥ २६ ॥
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चाऽऽनकैः सह ।
पुनरेवाऽभ्यहन्यन्त तव सैन्यप्रहर्षणाः ॥ २७ ॥

सत्य प्रतिज्ञा को पूर्ण करने के लिए उद्यत देख पड़े। नारायण के अवतार श्रीकृष्ण के साथ नर के अवतार अर्जुन अपने रथ पर, उदय हुए सूर्य के समान, शोभायमान हो रहे थे। वे कवच, मणिमय कुण्डल, सुवर्णमय किरीट-मुकुट, श्वेत माला और वस्त्र पहने हुए थे। उनके अङ्गों में अङ्गद आदि आभूषण जगमगा रहे थे। गाण्डीव धनुष को कम्पायमान करते हुए वीर अर्जुन ने सेना के अग्र भाग में आकर इतनी दूरी पर अपना रथ खड़ा कराया, जहाँ से शत्रुसेना के मध्यभाग में बाण मारा जा सकता था॥१४।२०॥ अब महाप्रतापी अर्जुन ने जोर से अपना शङ्ख बजाया। साथ ही महात्मा वासुदेव ने भी अपना श्रेष्ठ पाञ्चजन्य शङ्ख बड़े जोर से बजाया। उन दोनों वीरों के शङ्ख-नाद को सुनते ही आपकी सेना में हलचल मच गई। सैनिकों के रोंगटे खड़े हो गये, लोग काँप उठे और अचेत से हो गये। बिजली की कड़क सुनकर लोग जैसे भयभीत हो जाते हैं वैसे ही कौरव सेना के लोग उन शङ्खों का महानाद सुनकर भयभीत हो गये। हाथी-घोड़े आदि वाहन व्याकुलता और भय के मारे मल मूत्र त्याग करने लगे। हे महाराज! इस प्रकार वाहनों सहित आपकी सब सेना व्याकुल हो उठी॥२०।२४॥ उन शङ्खों का दारुण शब्द सुनकर कुछ लोग विह्वल हो उठे, कुछ भय के मारे अचेत हो गये और कुछ भाग खड़े हुए। हे भरतश्रेष्ठ! उस समय अर्जुन के रथ की ध्वजा पर स्थित वानर भी, ध्वजा पर स्थित अन्य भयानक प्राणियों के साथ, मुख फैलाकर घोर महानाद करता हुआ आपके सैनिकों को भयभीत कराने लगा। अब आपकी सेना में सैनिकों का

नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः ।
सिंहनादैः समुत्क्रुष्टैः समाधूतैर्महारथैः ॥ २८ ॥
तस्मिंस्तु तुमुले शब्दे भीरूणां भयवर्धने ।
अतीव हृष्टो दाशार्हमब्रवीत्पाकशासनिः ॥ २९ ॥

इति श्री महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि अर्जुनरणप्रवेशेऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

उत्साह और हर्ष बढ़ाने के लिए शङ्ख, भेरी, मृदङ्ग, नगाड़े आदि बाजे बजाये जाने लगे। अनेक प्रकार के बाजों के शब्द, खम ठोंकने के शब्द, गर्जन और सिंहनाद, चिल्लाने और पुकारने के शब्द और महारथी वीरों के रथ सञ्चालन के शब्द से रणभूमि परिपूर्ण हो उठी। हे राजेन्द्र! कायरों के हृदय में भय का सञ्चार करनेवाले उस तुमुल शब्द से अत्यन्त हर्षित होकर अर्जुन श्रीकृष्ण से यों कहनेलगे॥२५।२९॥

द्रोणपर्व का अट्ठासीवाँ अध्याय समाप्त हुआ ॥ ८८ ॥

अथ एकोननवतितमोऽध्यायः ॥ ८९ ॥

अर्जुन उवाच – चोदयाऽश्वान्हृषीकेश यत्र दुर्मर्षणः स्थितः ।
एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीम् ॥ १ ॥
सञ्जय उवाच—एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
अचोदयद्धयांस्तत्र यत्र दुर्मर्षणः स्थितः ॥ २ ॥
स सम्प्रहारस्तुमुलः सम्प्रवृत्तः सुदारुणः ।
एकस्य च बहूनां च रथनागनरक्षयः ॥ ३ ॥
ततः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
परानवाकिरत्पार्थः पर्वतानिव नीरदः ॥ ४ ॥
ते चापि रथिनः सर्वे त्वरिताः कृतहस्तवत् ।
अवाकिरन्बाणजालैस्तत्र कृष्णधनञ्जयौ ॥ ५ ॥
ततः क्रुद्धो महाबाहुर्वार्यमाणः परैर्युधि ।
शिरांसि रथिनां पार्थः कायेभ्योऽपाहरच्छरैः ॥ ६ ॥
उद्भ्रान्तनयनैर्वक्त्रैः सन्दष्टोष्ठपुटैः शुभैः ।
सकुण्डलशिरस्त्राणैर्वसुधा समकीर्यत ॥ ७ ॥

नवासीवाँ अध्याय ॥ ८९ ॥

अर्जुन ने कहा- हे श्रीकृष्ण! जिस स्थान पर यह दुर्मर्षण खड़ा हुआ है उसी स्थान पर मेरा रथ ले चलो। मैं इस गज-सेना को छिन्न-भिन्न करता हुआ शत्रुओं की सेना के भीतर प्रवेश होऊंगा॥१॥ सञ्जय कहते हैं - हे राजेन्द्र! अर्जुन के यों कहने पर कृष्णचन्द्र ने रथ को दुर्मर्षण के समीप ले जाने के लिए घोड़ों को हाँक दिया। इसके पश्चात् अर्जुन वीरों की सेना में अत्यन्त भयानक युद्ध करने लगे। उस संग्राम में असंख्य रथी, पैदल, हाथी और घोड़े मारे गये। पर्वत पर मेघ जैसे जलधारा बरसाते हैं वैसे ही अर्जुन भी शत्रु-सेना के ऊपर निरन्तर बाणों की वर्षा करने लगे॥२।४॥ जयद्रथ के रथी और

पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
विनिकीर्णानि योधानां वदनानि चकाशिरे ॥ ८ ॥
तपनीयतनुत्राणाः संसिक्ता रुधिरेण च ।
संसक्ता इव दृश्यन्ते मेघसङ्घाः सविद्युतः ॥ ९ ॥
शिरसां पततां राजञ्शब्दोऽभूद्वसुधातले ।
कालेन परिपक्वानां तालानां पततामिव ॥ १० ॥
ततः कवन्धं किञ्चित्तु धनुरालम्ब्य तिष्ठति ।
किञ्चित्खड्गं विनिकृष्य भुजेनोद्यम्य तिष्ठति ॥ ११ ॥
पतितानि न जानन्ति शिरांसि पुरुषर्षभाः ।
अमृष्यमाणाः संग्रामे कौन्तेयं जयगृद्धिनः ॥ १२ ॥
हयानामुत्तमाङ्गैश्च हस्तिहस्तैश्च मेदिनी ।
बाहुभिश्च शिरोभिश्च वीराणां समकीर्यत ॥ १३ ॥
अयं पार्थः कुतः पार्थ एष पार्थ इति प्रभो ।
तव सैन्येषु योधानां पार्थभूतमिवाऽभवत् ॥ १४ ॥
अन्योऽन्यमपि चाऽऽजघ्नुरात्मानमपि चाऽपरे ।
पार्थभूतममन्यन्त जगत्कालेन मोहिताः ॥ १५ ॥
निष्टनन्तः सरुधिरा विसंज्ञा गाढवेदनाः ।
शयाना बहवो वीराः कीर्त्तयन्तः स्वबान्धवान् ॥ १६ ॥

---

महारथी भी वासुदेव और अर्जुन के ऊपर तीक्ष्ण बाणों की वर्षा सी करने लगे। तब अर्जुन ने क्रोध करके अपने को रोकनेवाले शत्रु-पक्ष के रथी योद्धाओं के सिरों को बाण मारकर धड़ों से अलग करना आरम्भ कर दिया। होंठ चबा रहे, लाल-लाल नेत्र निकाले, कुण्डलों और शिरस्त्राणों से शोभित शूरों के कटे हुए सिर युद्धभूमि में बिछ गये। चारों ओर बिखरे हुए योद्धाओं के सिर दलित कमलों के वन के समान शोभायमान हुए। [रक्त से भीगे हुए सुनहरे कवच बिजली से शोभित मेघों के समान जान पड़ते थे।] पके हुए ताड़ के फल गिरने से जैसा घोर शब्द होता है वैसा ही घोर शब्द वीरों के सिर कट-कटकर गिरने से सुनाई पड़ रहा था॥८-१०॥वीरों के कबन्ध उठ खड़े हुए और कोई धनुष हाथ में लिए और कोई म्यान से तलवार निकाले प्रहार के लिए उद्यत देख पड़ने लगे। जय की आकांक्षा से युद्ध करनेवाले वीरगण अर्जुन को परास्त करने के उद्योग में इतने तन्मय थे कि उन पुरुषश्रेष्ठों के सिर कट-कटकर गिर पड़ते थे और उन्हें उनकी सूचना भी न होती थी। घोड़ों के सिर, हाथियों की सूँड़ें, वीर पुरुषों के सिर और हाथ कट कटकर पृथ्वी पर इतने गिरे कि उनसे रणभूमि बिछ गई॥११-१३॥हे महाराज! उस समय आपके सैनिकों को सारी रणभूमि अर्जुनमयी सी दिखाई पड़ने लगी। वे "यह अर्जुन है", "कहाँ अर्जुन है!", "यहाँ अर्जुन है" इस प्रकार के अनेक वचन कहते हुए परस्पर ही एक दूसरे को, अर्जुन जानकर, मारने लगे। किसी-किसी ने व्याकुल होकर आप ही अपने को शस्त्र मार लिया। इस प्रकार काल से मोहित कौरवपक्ष के योद्धा सर्वत्र अर्जुन को ही देखने लगे। रक्त से भीगे हुए, अनेक वीरगण समरशय्या में पड़े हुए थे। वे

सभिन्दिपालाः सप्रासाः सशक्त्यृष्टिपरश्वधाः । 
सनिर्व्यूहाः सनिस्त्रिंशाः सशरासनतोमराः ॥ १७ ॥ 
सबाणवर्माभरणाः सगदाः साङ्गदा रणे । 
महाभुजगसङ्काशा बाहवः परिघोपमाः ॥ १८ ॥ 
उद्वेष्टन्ति विचेष्टन्ति संवेष्टन्ति च सर्वशः । 
वेगं कुर्वन्ति संरब्धा निकृत्ताः परमेषुभिः ॥ १९ ॥ 
यो यः स्म समरे पार्थं प्रतिसञ्चरते नरः । 
तस्य तस्याऽन्तको बाणः शरीरमुपसर्पति ॥ २० ॥ 
नृत्यतो रथमार्गेषु धनुर्व्यायच्छतस्तथा । 
न कश्चित्तत्र पार्थस्य ददृशेऽन्तरमण्वपि ॥ २१ ॥ 
यत्तस्य घटमानस्य क्षिप्रं विक्षिपतः शरान् । 
लाघवात्पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ॥ २२ ॥ 
हस्तिनं हस्तियन्तारमश्वमाश्विकमेव च । 
अभिनत्फाल्गुनो बाणै रथिनं च ससारथिम् ॥ २३ ॥ 
आवर्त्तमानमावृत्तं युध्यमानं च पाण्डवः । 
प्रमुखे तिष्ठमानं च न किञ्चिन्न निहन्ति सः ॥ २४ ॥ 
यथोदयन्वै गगने सूर्यो हन्ति महत्तमः । 
तथाऽर्जुनो गजानीकमवधीत्कङ्कपत्रिभिः ॥ २५ ॥ 
हस्तिभिः पतितैर्भिन्नैस्तव सैन्यमदृश्यत । 
अन्तकाले यथा भूमिर्व्यवकीर्णा महीधरैः ॥ २६ ॥

दारुण वेदना से अत्यन्त पीड़ित होकर अपने-अपने बान्धवों को पुकारने और कराहने लगे॥१४।१६॥ भिन्दिपाल, प्रास, शक्ति, ऋष्टि, परशु, निर्व्यूह, खड्ग, धनुष, तोमर, बाण और गदा आदि शस्त्रों से शोभित, कवचयुक्त और अङ्गद आदि आभूषणों से अलङ्कृत वीरों के हाथ अर्जुन के बाणों से कट-कटकर पृथ्वी पर गिर रहे थे। वे महानाग और बेलन के समान हाथ उठते, गिरते और तड़पते हुए दिखाई पड़ रहे थे ॥१७।१९॥ जो-जो वीर पुरुष अर्जुन के सम्मुख जाकर उनसे भिड़ना था, उस-उसके शरीर में अर्जुन के काल-सदृश बाण प्रविष्ट हो जाते थे। रथ-मार्ग में नृत्य सा करनेवाले शीघ्रगामी और स्फूर्तिशाली अर्जुन इस प्रकार धनुष घुमा रहे थे कि उन पर प्रहार करने का तनिक भी अवकाश नहीं देख पड़ता था। अर्जुन अपने हाथों की स्फूर्ति दिखाते हुए इतने शीघ्र बाण निकालते, धनुष पर चढ़ाते, निशाना ताकते और बाण छोड़ते थे कि सब देखनेवालों के आश्चर्य की कमी नहीं थी॥२०।२२॥ वीर-वर अर्जुन अपने बाणों से एक साथ ही हाथी, महावत और योद्धा को, घोड़े और सवार को तथा रथी और सारथी को मार गिराते थे। पराक्रमी अर्जुन उस समय आते हुए, जाते हुए, युद्ध कर रहे और सम्मुख खड़े हुए, किसी भी शत्रु को नहीं छोड़ते थे; सभी को मार-मारकर गिरा रहे थे। उदय हो रहे सूर्यदेव जैसे अपनी किरणों से घोर अँधेरे को नष्ट

यथा मध्यन्दिने सूर्यो दुष्प्रेक्ष्यः प्राणिभिः सदा ।
तथा धनञ्जयः क्रुद्धो दुष्प्रेक्ष्यो युधि शत्रुभिः ॥ २७ ॥
तत्तथा तव पुत्रस्य सैन्यं युधि परन्तप ।
प्रभग्नं द्रुतमाविग्नमतीव शरपीडितम् ॥ २८ ॥
मारुतेनेव महता मेघानीकं व्यदीर्यत ।
प्रकाल्यमानं तत्सैन्यं नाऽशकत्प्रतिवीक्षितुम् ॥ २९ ॥
प्रतोदैश्चापकोटीभिर्हुङ्कारैः साधुवाहितैः ।
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च ॥ ३० ॥
चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः ।
सादिनो रथिनश्चैव पत्तयश्चाऽर्जुनार्दिताः ॥ ३१ ॥
पार्ष्ण्यंगुष्ठांकुशैर्नागं चोदयन्तस्तथा परे ।
शरैः सम्मोहिताश्चाऽन्ये तमेवाऽभिमुखा ययुः॥ ३२ ॥
तव योधा हतोत्साहा विभ्रान्तमनसस्तदा ॥ ३३ ॥

इति श्री महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि अर्जुनयुद्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥

करते हैं वैसे ही प्रतापी वीर अर्जुन ने कङ्कपत्रशोभित तीक्ष्ण बाणों से शत्रुपक्ष के हाथियों के दल को मारकर नष्ट-भ्रष्ट कर दिया। अर्जुन के बाणों से छिन्न-भिन्न हाथियों के झुण्ड के झुण्ड आपकी सेना के मध्य पड़े हुए थे। उनसे वह रणभूमि प्रलयकाल में पर्वतों से परिपूर्ण भूमि सी दिखाई पड़ने लगी॥२३। २६॥हे राजेन्द्र! उस समय क्रोध से विह्वल महावीर अर्जुन शत्रुओं के लिए दोपहर के सूर्य के समान अत्यन्त ही दुर्निरीक्ष्य हो उठे। कौरव-सेना के योद्धा लोग उनके बाणों से अत्यन्त ही पीड़ित और शङ्कित होकर, व्याकुल होकर, रणभूमि को छोड़कर भागने लगे। आँधी जैसे मेघमण्डल को छिन्न-भिन्न कर देती है वैसे ही महावीर अर्जुन भी कौरव-सेना को मारकर भगाने लगे। उनके बाणों की मार से भगाई जा रही आपके पुत्र की सेना अर्जुन की ओर देख भी नहीं सकती थी॥२७।२९॥रथी और घुड़सवार योद्धा लोग अर्जुन के बाणों से पीड़ित होकर कोड़े, धनुष-कोटि, हुङ्कार, कशा और पार्ष्णि के प्रहार आदि से, डाँटकर, पुचकारकर अपने घोड़ों को भगाते हुए भागने लगे। जो हाथियों पर सवार थे वे पार्ष्णि, पाँव के अँगूठे और अङ्कुश के प्रहार से हाथियों को चलाते हुए प्रबल वेग से भागने लगे। बहुत से लोग अर्जुन के बाणों की मार से ऐसे व्याकुल हो उठे कि वे मोहित होकर अर्जुन की ही ओर जाने लगे। हे राजेन्द्र! इस प्रकार आपके पक्ष के वीर लोग उत्साहहीन होकर व्याकुल हो उठे॥३०।३३॥

द्रोणपर्व का नवासीवाँ अध्याय समाप्त हुआ ॥ ८९ ॥

अथ नवतितमोऽध्यायः ॥ ९० ॥

धृतराष्ट्र उवाच—तस्मिन्प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना ।
के तु तत्र रणे वीराः प्रत्युदीयुर्धनञ्जयम् ॥ १ ॥
आहोस्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः ।
द्रोणमाश्रित्य तिष्ठन्ति प्राकारमकुतोभयम् ॥ २ ॥

सज्यं सज्यं धनुश्चाऽस्य चिच्छेद निशितैः शरैः।
एवमेकशतं छिन्नं धनुषां दृढधन्विना ॥ ३९ ॥
न चाऽन्तरं तयोर्दृष्टं सन्धाने छेदनेऽपि च ।
ततोऽस्य संयुगे द्रोणो दृष्ट्वा कर्माऽतिमानुषम् ॥ ४० ॥
युयुधानस्य राजेन्द्र मनसैतदचिन्तयत् ।
एतदस्त्रबलं रामे कार्त्तवीर्ये धनञ्जये ॥ ४१ ॥
भीष्मे च पुरुषव्याघ्रे यदिदं सात्वतां वरे ।
तं चाऽस्य मनसा द्रोणः पूजयामास विक्रमम् ॥ ४२ ॥
लाघवं वासवस्येव सम्प्रेक्ष्य द्विजसत्तमः ।
तुतोषाऽस्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः ॥ ४३ ॥
न तामालक्षयामासुर्लघुतां शीघ्रचारिणः ।
देवाश्च युयुधानस्य गन्धर्वाश्च विशाम्पते ॥ ४४ ॥
सिद्धचारणसङ्घाश्च विदुर्द्रोणस्य कर्म तत् ।
ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्दनः ॥ ४५ ॥
अस्त्रैरस्त्रविदां श्रेष्ठो योधयामास भारत ।
तस्याऽस्त्राण्यस्त्रमायाभिः प्रतिहत्य स सात्यकिः ॥ ४६ ॥
जघान निशितैर्बाणैस्तदद्भुतमिवाऽभवत् ।
तस्याऽतिमानुषं कर्म दृष्ट्वाऽन्यैरसमं रणे ॥ ४७ ॥

लगे। द्रोण और सात्यकि एक दूसरे पर प्रहार कर रहे थे। इसी मध्य में सात्यकि ने सुदृढ़ बाणों से द्रोणाचार्य के बाण निष्फल करके धनुष काट डाला। तदनन्तर द्रोण ने क्षण भर में दूसरा धनुष लेकर उस पर डोरी चढ़ाई किन्तु सात्यकि ने स्फूर्ति के साथ वह धनुष भी काट डाला। फिर द्रोणाचार्य ने और अन्य धनुष लेकर उस पर डोरी चढ़ाई। सात्यकि ने स्फूर्ति दिखाते हुए वह धनुष भी काट डाला। इस प्रकार जब जब आचार्य धनुष लेते थे तब-तब उसे सात्यकि काट डालते थे। हे महाराज! दृढ़धनुर्धारी सात्यकि ने द्रोणाचार्य के एक सौ धनुष काट डाले। इस कार्य में सात्यकि ने इतनी स्फूर्ति दिखाई कि यह किसी को विदित न हो सका कि उन्होंने कब आचार्य ने धनुष पर बाण चढ़ाया और कब द्रोणाचार्य का धनुष उन्होंने काट डाला ॥३९।४०॥ सात्यकि के उस अपूर्व कार्य को देख कर द्रोणाचार्य जी सोचने लगे कि परशुराम, कार्त्तवीर्य सहस्रबाहु अर्जुन, अर्जुन और भीष्मपितामह की भाँति अस्त्रबल सात्यकि में देख पड़ रहा है। इन्द्र के तुल्य सात्यकि का पराक्रम, अस्त्रबल और स्फूर्ति देखकर द्विजश्रेष्ठ द्रोणाचार्य मन ही मन में उनकी प्रशंसा करने लगे। अस्त्रज्ञ पुरुषों में श्रेष्ठ द्रोणाचार्य सात्यकि के इस कर्म से सन्तुष्ट हुए॥४०।४२॥ इन्द्र आदि देवता, गन्धर्व, सिद्ध, चारण सभी द्रोणाचार्य के अस्त्रबल और स्फूर्ति को तो जानते ही थे, परन्तु सात्यकि के अस्त्रबल और हस्तलाघव को नहीं जानते थे। इस समय उनके असाधारण कर्म को देखकर उन्हें भी सन्तोष और आश्चर्य हुआ॥४३।४५॥ इसके पश्चात् अस्त्रविद्याविशारद शत्रुमर्दन द्रोण ने और धनुष लेकर दिव्य अस्त्रों के द्वारा युद्ध करने लगे। सात्यकि भी बहुत से भयानक अस्त्रों के द्वारा उनके

युक्तं योगेन योगज्ञास्तावकाः समपूजयन् ।
यदस्त्रमस्यति द्रोणस्तदेवाऽस्यति सात्यकिः ॥ ४८ ॥
तमाचार्योऽथ सम्भ्रान्तोऽयोधयच्छत्रुतापनः ।
ततः क्रुद्धो महाराज धनुर्वेदस्य पारगः ॥ ४९ ॥
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् ।
तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य सः ॥ ५० ॥
दिव्यमस्त्रं महेष्वासो वारुणं समुदैरयत् ।
हाहाकारो महानासीद् दृष्ट्वा दिव्यास्त्रधारिणौ ॥ ५१ ॥
न विचेरुस्तदाऽऽकाशे भूतान्याकाशगान्यपि ।
अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते ॥ ५२ ॥
न यावदभ्यपद्येतां व्यावर्त्तदथ भास्करः ।
ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ॥ ५३ ॥
नकुलः सहदेवश्च पर्यरक्षन्त सात्यकिम् ।
धृष्टद्युम्नमुखैः सार्धं विराटश्च सकेकयः ॥ ५४ ॥
मत्स्याः शाल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ।
दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः ॥ ५५ ॥
द्रोणमभ्युपपद्यन्त सपत्नैः परिवारितम् ।
ततो युद्धमभूद्राजंस्तेषां तव च धन्विनाम् ॥ ५६ ॥

अस्त्रों को निष्फल करके उन पर तीक्ष्ण बाण बरसाने लगे। यह देखकर सबको बड़ा ही आश्चर्य हुआ। रणकौशल के ज्ञाता कौरवदल के वीरगण, सात्यकि के अलौकिक युद्धकौशल और अस्त्रबल को देखकर, उनकी प्रशंसा करने लगे। द्रोणाचार्य ने जो जो अस्त्र छोड़े, उनको और उन्हें व्यर्थ करनेवाले अस्त्रों का प्रयोग महावीर सात्यकि ने भी किया॥४५।४८॥ शत्रुतापन आचार्य धैर्य के साथ उनसे युद्ध करने लगे; किन्तु सात्यकि के अस्त्रकौशल से वे व्याकुल से हो-गये। तब धनुर्वेद के पारगामी आचार्य ने कुपित हो कर, सात्यकि को मारने के निमित्त, महाघोर शत्रुनाशन दिव्य आग्नेय अस्त्र का प्रयोग किया। यह देखकर सात्यकि ने असाधारण वरुणास्त्र का प्रयोग किया। दोनों वीरों को दिव्य अस्त्रों का प्रयोग करते देखकर चारों ओर हाहाकार होने लगा॥४९।५१॥ उस समय आकाश से आकाशचारी जीव भी हट गये। दोनों वीरों ने बाणों को जिस समय दिव्य अस्त्रों से अभि-मन्त्रित किया उस समय सूर्य मध्य आकाश से पश्चिम की ओर हट चुके थे, दोपहरी ढल चुकी थी। दोनों अस्त्र एक दूसरे के प्रभाव से व्यर्थ हो गये। उस समय राजा युधिष्ठिर, भीमसेन, नकुल और सहदेव सात्यकि की सहायता और रक्षा करने लगे। धृष्ट-द्युम्न आदि योद्धा, विराट, केकय, मत्स्य और शाल्व देश की सेनाएं द्रोणाचार्य के ऊपर वेग से आक्रमण करने लगीं। इधर आचार्य को शत्रुओं से घिरे देखकर दुःशासन को आगे किये हुए सहस्रों राजकुमार आचार्य की रक्षा के निमित्त उनके समीप आये॥५२।५५॥ हे राजेन्द्र! उस समय उन योद्धाओं के साथ आपके दल का घोर संग्राम होने लगा। धूल और बाणों का अंधेरा छा गया। कुछ न दिखाई

रजसा संवृते लोके शरजालसमावृते ।
सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ।
सैन्येन रजसा ध्वस्ते निर्मर्यादमवर्त्तत ॥ ५७ ॥

इति श्री महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि द्रोणसात्यकियुद्धे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

पड़ने के कारण सब लोग व्याकुल हो उठे। इस प्रकार धूल के मारे सब सेना के विह्वल होने पर मर्यादारहित संग्राम होने लगा॥५६।५७॥

— ० —

द्रोणपर्व का अट्ठानबेवाँ अध्याय समाप्त हुआ ॥ ९८ ॥

अथ एकोनशततमोऽध्यायः ॥ ९९ ॥

सञ्जय उवाच विवर्त्तमाने त्वादित्ये तत्राऽस्तशिखरं प्रति ।
रजसाऽऽकीर्यमाणे च मन्दीभूते दिवाकरे ॥ १ ॥
तिष्ठतां युध्यमानानां पुनरावर्त्ततामपि ।
भज्यतां जयतां चैव जगाम तदहः शनैः ॥ २ ॥
तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु ।
अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ३ ॥
रथमार्गप्रमाणं तु कौन्तेयो निशितैः शरैः ।
चकार तत्र पन्थानं ययौ येन जनार्दनः ॥ ४ ॥
यत्र यत्र रथो याति पाण्डवस्य महात्मनः ।
तत्र तत्रैव दीर्यन्ते सेनास्तव विशाम्पते ॥ ५ ॥
रथशिक्षां तु दाशार्हो दर्शयामास वीर्यवान् ।
उत्तमाधममध्यानि मण्डलानि विदर्शयन् ॥ ६ ॥
ते तु नामाङ्किताः पीताः कालज्वलनसन्निभाः ।
स्नायुनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ॥ ७ ॥

निन्यानबेवाँ अध्याय ॥ ९९ ॥

सञ्जय कहते हैं — हे राजेन्द्र ! सूर्यदेव अस्ताचल की ओर चले। किरणों की तेजी घट चली और धूल का अंधेरा अधिकाधिक बढ़ने लगा। कौरव सेना के योद्धा कभी सम्मुख डटकर युद्ध करते थे, कभी भागने और कभी लौटकर फिर सामना करते थे। इस प्रकार विजय प्राप्त करने का यत्न करते-करते धीरे-धीरे वह दिन व्यतीत हो चला। इस प्रकार जय की आकांक्षा से सब सैनिक भिड़कर युद्ध करने लगे। जयद्रथ के समीप जाने के निमित्त अर्जुन और श्रीकृष्ण बराबर आगे ही बढ़ते जा रहे थे ॥१-३॥ अर्जुन अपने तीक्ष्ण बाणों के द्वारा रथ के जाने भर की राह करते जाते थे और श्रीकृष्ण उसी राह से रथ लिए जा रहे थे। अर्जुन का रथ जहाँ-जहाँ जाता था वहाँ-वहाँ आपके पक्ष की सेना इधर-उधर होती चली जाती थी। उस समय पराक्रमी केशव उत्तम, मध्यम और अधम, विविध मण्डलों को दिखाते हुए, अपनी रथ हाँकने की कला का परिचय दे रहे थे॥४-६॥ अर्जुन के नाम से अङ्कित, काल और अग्नि के तुल्य, तांत से बंधे हुए, सुन्दर गाँठों से शोभित, मोटे,

वैणवाश्चाऽऽयसाश्चोग्रा ग्रसन्तो विविधानरीन् ।
रुधिरं पतगैः सार्धं प्राणिनां पपुराहवे ॥ ८ ॥
रथस्थितोऽग्रतः क्रोशं यानस्यत्यर्जुनः शरान् ।
रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ९ ॥
तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधु वाजिभिः ।
तदाऽगच्छद्धृषीकेशः कृत्स्नं विस्मापयञ्जगत् ॥ १० ॥
न तथा गच्छति रथस्तपनस्य विशाम्पते ।
नेन्द्रस्य न तु रुद्रस्य नापि वैश्रवणस्य च ॥ ११ ॥
नाऽन्यस्य समरे राजन्गतपूर्वस्तथा रथः ।
यथा ययावर्जुनस्य मनोभिप्रायशीघ्रगः ॥ १२ ॥
प्रविश्य तु रणे राजन्केशवः परवीरहा ।
सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ १३ ॥
ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः ।
कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासासमन्विताः ॥ १४ ॥
क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः ।
मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः ॥ १५ ॥
हतानां वाजिनागानां रथानां च नरैः सह ।
उपरिष्टादतिक्रान्ताः शैलाभानां सहस्रशः ॥ १६ ॥
एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप ।
सहसेनौ समार्छेतां पाण्डवं क्लान्तवाहनम् ॥ १७ ॥

दूर तक जानेवाले, बाँस और लोहे के बने अत्यन्त उग्र बाण विविध शत्रुओं के प्राण हरने और मांसाहारी पक्षियों के साथ उनका रक्त पीने लगे। कृष्णचन्द्र इस वेग से रथ हाँक रहे थे कि रथ पर बैठे हुए अर्जुन कोस भर आगे जिन बाणों को छोड़ते थे, वे बाण कोस भर आगे रथ निकल जाने पर शत्रुओं के प्राण हरते थे॥७।९॥ गरुड़ और वायु के समान वेगगामी सुशिक्षित घोड़ों को हाँककर कृष्णचन्द्र इस कौशल और शीघ्रता से रथ को लिये जा रहे थे कि सब लोगों को देखकर बड़ा आश्चर्य हो रहा था। जितने वेग से अर्जुन का रथ जा रहा था उतने वेग से कभी पहले इन्द्र, रुद्र और कुबेर का भी रथ नहीं चला॥१०।११॥ तात्पर्य यह है कि मन और मनोरथ के समान शीघ्र जानेवाला अर्जुन का रथ जिस प्रकार जा रहा था उस प्रकार कभी किसी का रथ नहीं गया। हे राजेन्द्र! शत्रुदलदलन केशव इस प्रकार रणभूमि में प्रवेश करके स्फूर्ति के साथ घोड़ों को शत्रुसेना के मध्य चलाने लगे। अर्जुन के घोड़े शत्रुसेना के रथों के मध्य में भूख-प्यास और थकन के मारे धीरे-धीरे चलने लगे। योद्धाओं के अनेक अस्त्र-शस्त्र लगने से उनके अङ्गों में बहुत से घाव हो चुके थे। उस व्यथा और थकन के मारे वे घोड़े भी [illegible] चाल से विचित्र मण्डलाकार गतियों से चलने लगे। वे घोड़े मृत पर्वताकार घोड़ों, हाथियों, मनुष्यों और टूटे फूटे रथों के ऊपर से रथ को खींचते चले जा रहे

तावर्जुनं चतुःषष्ट्या सप्तत्या च जनार्दनम् ।
शराणां च शतैरश्वानविध्येतां मुदान्वितौ ॥ १८ ॥
तावर्जुनो महाराज नवभिर्नतपर्वभिः ।
आजघान रणे क्रुद्धो मर्मज्ञो मर्मभेदिभिः ॥ १९ ॥
ततस्तौ तु शरौघेण बीभत्सुं सहकेशवम् ।
आच्छादयेतां संरब्धौ सिंहनादं च चक्रतुः ॥ २० ॥
तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहनः ।
चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्ज्वलौ ॥ २१ ॥
अथाऽन्ये धनुषी राजन्प्रगृह्य समरे तदा ।
पाण्डवं भृशसंक्रुद्धावर्दयामासतुः शरैः ॥ २२ ॥
तयोस्तु भृशसंक्रुद्धः शराभ्यां पाण्डुनन्दनः ।
धनुषी चिच्छिदे तूर्णं भूय एव धनञ्जयः ॥ २३ ॥
तथाऽन्यैर्विशिखैस्तूर्णं रुक्मपुङ्खैः शिलाशितैः ।
जघानाऽश्वांस्तथा सूतौ पार्ष्णी च सपदानुगौ ॥ २४ ॥
ज्येष्ठस्य च शिरः कायात्क्षुरप्रेण न्यकृन्तत ।
स पपात हतः पृथ्व्यां वातरुग्ण इव द्रुमः ॥ २५ ॥
विन्दं तु निहतं दृष्ट्वा ह्यनुविन्दः प्रतापवान् ।
हताश्वं रथमुत्सृज्य गदां गृह्य महाबलः ॥ २६ ॥
अभ्यवर्त्तत संग्रामे भ्रातुर्वधमनुस्मरन् ।
गदया रथिनां श्रेष्ठो नृत्यन्निव महारथः ॥ २७ ॥

---

॥१३।१६॥ हे राजेन्द्र ! तब अवन्तिदेश के विन्द और अनुविन्द ने अर्जुन के घोड़ों को थका हुआ देखकर अपनी सेना के साथ उनका सामना किया । उन्होंने अर्जुन को चौसठ, श्रीकृष्ण को सत्तर और घोड़ों को सौ बाणों से पीड़ित किया । तब महावीर अर्जुन ने अत्यन्त ही कुपित होकर उनको नौ नौ बाण मारे ॥१७।१९॥ महायशस्वी विन्द और अनुविन्द ने अर्जुन के बाणों से अत्यन्त क्रुद्ध होकर घोर सिंहनाद किया और अर्जुन तथा श्रीकृष्ण को बाणों से ढक दिया । महावीर अर्जुन ने दो भल्ल बाणों से फुर्ती के साथ उनके विचित्र धनुष और सुवर्णमयी ध्वजायें भी काट डालीं । महायशस्वी विन्द और अनुविन्द तुरन्त ही और अन्य धनुष लेकर क्रोधपूर्वक अर्जुन के ऊपर बाण बरसाने लगे ॥२०।२२॥ यह देखकर अर्जुन ने क्रोध करके फिर दो बाणों से उनके धनुष काट डाले । फिर उनके सारथी, पृष्ठरक्षक, सहायक पैदल सिपाही और घोड़े भी मार डाले और एक तीखे क्षुरप्र बाण से विन्द का सिर काट गिराया । अर्जुन के बाण से प्राणरहित होकर विन्द, आंधी से टूटे वृक्ष के समान पृथ्वी पर गिर पड़ा ॥२३।२५॥ बड़े भाई की मृत्यु देखकर महापराक्रमी अनुविन्द अत्यन्त क्रोध करके, वह बिना घोड़ों का रथ छोड़कर, गदा हाथ में लिये अर्जुन की ओर दौड़े । गदाधारी अनुविन्द ने श्रीकृष्ण के मस्तक में बड़े वेग से गदा मारी । अनुविन्द के गदा-

अनुविन्दस्तु गदया ललाटे मधुसूदनम् ।
स्पृष्ट्वा नाऽकम्पयत्क्रुद्धो मैनाकमिव पर्वतम् ॥ २८ ॥
तस्याऽर्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः ।
निचकर्त स सञ्छिन्नः पपाताऽद्रिचयो यथा ॥ २९ ॥
ततस्तौ निहतौ दृष्ट्वा तयो राजन्पदानुगाः ।
अभ्यद्रवन्त संक्रुद्धाः किरन्तः शतशः शरान् ॥ ३० ॥
तानर्जुनः शरैस्तूर्णं निहत्य भरतर्षभ ।
व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ३१ ॥
तयोः सेनामतिक्राम्य कृच्छ्रादिव धनञ्जयः ।
विबभौ जलदं हित्वा दिवाकर इवोदितः ॥ ३२ ॥
तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाऽभवन्पुनः ।
अभ्यवर्तन्त पार्थं च समन्ताद्भरतर्षभ ॥ ३२ ॥
श्रान्तं चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवम् ।
सिंहनादेन महता सर्वतः पर्यवारयन् ॥ ३४ ॥
तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन्पुरुषर्षभः ।
शनकैरिव दाशार्हमर्जुनो वाक्यमब्रवीत् ॥ ३५ ॥
शरार्दिताश्च ग्लानाश्च हया दूरे च सैन्धवः ।
किमिहाऽनन्तरं कार्यं ज्यायिष्ठं तव रोचते ॥ ३६ ॥
ब्रूहि कृष्ण यथातत्त्वं त्वं हि प्राज्ञतमः सदा ।
भवन्नेत्रा रणे शत्रून्विजेष्यन्तीह पाण्डवाः ॥ ३७ ॥

प्रहार से श्रीकृष्ण तनिक भी विचलित न हुए। वे मैनाक पर्वत की भाँति अचल-अटल खड़े ही रहे॥२६।२८॥ तब अर्जुन ने कुपित होकर छः बाणों से अनुविन्द के दोनों हाथ, दोनों पाँव, गर्दन और मस्तक काट डाला। इससे वे पर्वत की भाँति भरभराकर गिर पड़े। इस प्रकार महाबली विन्द और अनुविन्द के मारे जाने पर उनके सैकड़ों साथी योद्धा क्रोधपूर्वक बाण बरसाते हुए अर्जुन की ओर दौड़ पड़े। अर्जुन ने स्फूर्ति के साथ तीक्ष्ण बाणों से उन्हें भी मार डाला॥२९।३१॥ उस समय विन्द और अनुविन्द की सेना को कठिनाई से मार-कर, उनके मध्य से निकलकर, वे गर्मियों में वन को जलानेवाले दावानल और मेघमुक्त सूर्यदेव के समान शोभायमान हुए। उन्हें देखकर कौरवदल के लोग पहले भयभीत हुए; परन्तु फिर जयद्रथ को दूर पर स्थित और अर्जुन को थका हुआ देखकर प्रसन्न हो उठे। सबने चारों ओर से अर्जुन को घेर लिया। वे सिंहनाद करके अर्जुन पर घोर आक्रमण करने लगे ॥३२।३४॥ उन्हें क्रोध के मारे बाण बरसाते आते देख मुसकराते हुए अर्जुन ने धीरे से कहा—हे वासुदेव! बाणों के प्रहार से मेरे घोड़े जर्जर हो रहे हैं, थक भी गये हैं और जयद्रथ भी अभी दूर है। आप सबसे अधिक बुद्धिमान् हैं और हमारे नेता हैं। बताइए, इस समय क्या करना उचित है?॥३५।३७॥ पाण्डव लोग आपकी ही चतुराई से शत्रुओं को जीत सकेंगे।

मम त्वनन्तरं कृत्यं यद्वै तत्त्वं निबोध मे ।
हयान्विमुच्य हि सुखं विशल्यान्कुरु माधव ॥ ३८ ॥
एवमुक्तस्तु पार्थेन केशवः प्रत्युवाच तम् ।
ममाऽप्येतन्मतं पार्थ यदिदं ते प्रभाषितम् ॥ ३९ ॥
अर्जुन उवाच—अहमावारयिष्यामि सर्वसैन्यानि केशव ।
त्वमप्यत्र यथान्यायं कुरु कार्यमनन्तरम् ॥ ४० ॥
सञ्जय उवाच—सोऽवतीर्य रथोपस्थादसम्भ्रान्तो धनञ्जयः ।
गाण्डीवं धनुरादाय तस्थौ गिरिरिव ऽचलः ॥ ४१ ॥
तमभ्यधावन्क्रोशन्तः क्षत्रिया जयकांक्षिणः ।
इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनञ्जयम् ॥ ४२ ॥
तमेकं रथवंशेन महता पर्यवारयन् ।
विकर्षन्तश्च चापानि विसृजन्तश्च सायकान् ॥ ४३ ॥
शस्त्राणि च विचित्राणि क्रुद्धास्तत्र व्यदर्शयन् ।
छादयन्तः शरैः पार्थं मेघा इव दिवाकरम् ॥ ४४ ॥
अभ्यद्रवन्त वेगेन क्षत्रियाः क्षत्रियर्षभम् ।
नरसिंहं रथोदाराः सिंहं मत्ता इव द्विपाः ॥ ४५ ॥
तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत ।
यत्क्रुद्धो बहुलाः सेनाः सर्वतः समवारयत् ॥ ४६ ॥
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतो विभुः ।
इषुभिर्बहुभिस्तूर्णं सर्वानेव समावृणोत् ॥ ४७ ॥

मेरी सम्मति तो यह है कि आप यहीं घोड़ों को रथ से खोलकर उनके अंगों के सब शल्य दूर कीजिए और वे कुछ सुस्ता भी लें। अर्जुन के वचन सुनकर श्रीकृष्ण ने कहा—हे पार्थ! तुम्हारा कहना मुझे भी उचित ही है। अब अर्जुन ने कहा—हे मित्र! आप यहीं पर ठहरकर अपना कार्य कर लीजिए। मैं पहले ही सब शत्रुओं को रोके रहूँगा॥३७।४०॥ अब महावीर अर्जुन निःशङ्क भाव से अपनी अस्त्रविद्या दिखाने लगे। वे रथ से उतरकर, गाण्डीव धनुष हाथ में लेकर, पर्वत के समान अटल भाव से खड़े हो गये। उस समय विजय की अभिलाषा रखनेवाले क्षत्रियगण अर्जुन को पृथ्वी पर खड़े हुए देखकर, आक्रमण के योग्य यही अवसर जानकर, धनुष चढ़ाकर विचित्र अस्त्र-शस्त्र छोड़ते हुए, सिंह के सम्मुख हाथियों के झुण्ड के समान अर्जुन की ओर झपट पड़े। असंख्य रथों के मध्य में अर्जुन घिर गये। क्षत्रियों के बाणजाल के मध्य में अर्जुन मेघों में छिपे हुए सूर्य के समान जान पड़ने लगे। उस समय युद्धभूमि में शत्रुनाशन अर्जुन अपना अद्भुत बाहुबल दिखाने लगे॥४१।४४॥ उन्होंने अपने अस्त्र के प्रभाव से शत्रुपक्ष के सब अस्त्रों को निष्फल कर दिया। अर्जुन के बाणों से विद्ध होकर शत्रुपक्ष के सब योद्धा आगे बढ़ने में असमर्थ हो गये। बाणों के परस्पर रगड़ खाने से आकाश में अग्नि भी जल उठी। असंख्य बीभत्सु विजय की अभिलाषा

तत्राऽन्तरिक्षे बाणानां प्रगाढानां विशाम्पते ।
सङ्घर्षेण महार्चिष्मान्पावकः समजायत ॥ ४८ ॥
तत्र तत्र महेष्वासैः श्वसद्भिः शोणितोक्षितैः ।
हयैर्नागैश्च सम्भिन्नैर्नदद्भिश्चाऽरिकर्षणैः ॥ ४९ ॥
संरब्धैश्चाऽरिभिर्वीरैः प्रार्थयद्भिर्जयं मृधे ।
एकस्यैर्बहुभिः क्रुद्धैरूष्मेव समजायत ॥ ५० ॥
शरोर्मिणं ध्वजावर्त्तं नागनक्रं दुरत्ययम् ।
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिःस्वनम् ॥ ५१ ॥
असंख्येयमपारं च रथोर्मिणमतीव च ।
उष्णीषकमठं छत्रपताकाफेनमालिनम् ॥ ५२ ॥
रणसागरमक्षोभ्यं मातङ्गाङ्गशिलाचितम् ।
वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ॥ ५३ ॥

धृतराष्ट्र उवाच— अर्जुने धरणीं प्राप्ते हयहस्ते च केशवे ।
एतदन्तरमासाद्य कथं पार्थो न घातितः ॥ ५४ ॥

सञ्जय उवाच— सद्यः पार्थिव पार्थेन निरुद्धाः सर्वपार्थिवाः ।
रथस्था धरणीस्थेन वाक्यमच्छान्दसं यथा ॥ ५५ ॥
स पार्थः पार्थिवान्सर्वान्भूमिस्थोऽपि रथस्थितान् ।
एको निवारयामास लोभः सर्वगुणानिव ॥ ५६ ॥
ततो जनार्दनः संख्ये प्रियं पुरुषसत्तमम् ।
असम्भ्रान्तो महाबाहुरर्जुनं वाक्यमब्रवीत् ॥ ५७ ॥

---

से क्रोधपूर्वक बहुत से रुधिरचर्चित मस्त हाथियों और घोड़ों को साथ लेकर अकेले अर्जुन को हराने और मारने का पूर्ण उद्योग करने लगे॥४९।५०॥उनके रथों की कतार देखने से जान पड़ता था कि मानों अपार महासागर भरा पड़ा है। उस समुद्र में बाण तरङ्गों के समान, ध्वजाएँ भँवर के समान, हाथी मगरों के समान, पैदल मछलियों के समान, पगड़ियाँ कछुओं के समान तथा छत्र और पताकाएँ फेने के समान देख पड़ती थीं। महावीर अर्जुन तटभूमि के समान उस अक्षोभ्य और हाथीरूप चट्टानों से घिरे रथ-सागर को बाणों से रोके हुए थे॥५१।५३॥धृतराष्ट्र ने पूछा—अर्जुन जब रथ से उतर पड़े और श्रीकृष्ण ने घोड़ों को सँभाला तब, यह अवसर पाकर, अर्जुन को क्यों न मार डाला?॥५४॥सञ्जय ने कहा—पृथ्वी पर खड़े रहने पर भी अकेले अर्जुन ने रथों पर सवार राजाओं को बात की बात में इस प्रकार रोक दिया जिस प्रकार वेद-विरुद्ध वाक्य मनुष्य की प्रवृत्ति को रोक देता है या लोभ सब गुणों को रोक देता है॥५५।५६॥उस समय श्रीकृष्ण ने अर्जुन से कहा—हे पार्थ! तुम्हारे घोड़े प्यास के मारे व्याकुल हो रहे हैं। इस समय इन्हें जल पिलाने की आवश्यकता है। यहाँ पर घोड़ों को जल पिलाने के निमित्त कुआँ आदि कोई जलाशय भी नहीं है। इन्हें स्नान कराने की उतनी आवश्यकता नहीं॥५७।५८॥अर्जुन ने निश्चित

उद्पानमिहाऽश्वानां नाऽलमस्ति रणेऽर्जुन ।
परीप्सन्ते जलं चेमे पेयं न त्ववगाहनम् ॥ ५८ ॥
इदमस्तीत्यसम्भ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम् ।
अभिहत्याऽर्जुनश्चक्रे वाजिपानं सरः शुभम् ॥ ५९ ॥
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
सुविस्तीर्णं प्रसन्नाम्भः प्रफुल्लवरपङ्कजम् ॥ ६० ॥
कूर्ममत्स्यगणाकीर्णमगाधमृषिसेवितम् ।
आगच्छन्नारदमुनिर्दर्शनार्थं कृतं क्षणात् ॥ ६१ ॥
शरवंशशरस्थूणं शराच्छादनमद्भुतम् ।
शरवेश्माऽकरोत्पार्थस्त्वष्टेवाऽद्भुतकर्मकृत् ॥ ६२ ॥
ततः प्रहस्य गोविन्दः साधु साध्वित्यथाऽब्रवीत् ।
शरवेश्मनि पार्थेन कृते तस्मिन्महात्मना ॥ ६३ ॥

इति श्रीमहाभारते द्रोणपर्वणि जयद्रथवधपर्वणि विन्दानुविन्दवधे अर्जुनसरोनिर्माणे च एकोनशततमोऽध्यायः॥९९॥

---

भाग मे " यह जलाशय है " कहकर उसी समय अस्त्र के द्वारा पृथ्वी तल को फोड़ दिया । अस्त्र के प्रभाव से ही वहाँ पर एक ऐसा विस्तृत सरोवर बन गया जिसके तट पर हंस, कारण्डव, चकवे आदि पक्षी बैठे थे, जल स्वच्छ था और उसके भीतर मछली-कछुए आदि अनेक जीव-जन्तु कलोलें कर रहे थे । उस ऋषि-सेवित, निर्मल जलयुक्त, प्रफुल्लित कमल दलशोभित, तत्काल निर्मित सरोवर को देखने के लिए देवर्षि नारद आ गये॥५८।६१॥ विश्वकर्मा के समान विचित्र कार्य करनेवाले अर्जुन ने वहाँ पर बाणों का ही एक विचित्र घर बना दिया, जिसके बाँस ( ठाठ ), खम्भे, छप्पर आदि सब बाणों के ही थें । महात्मा कृष्णचन्द्र अर्जुन का यह अद्भुत कार्य देखकर हँसते हुए उन्हें बारम्बार साधुवाद देने लगे॥६२।६३॥

द्रोणपर्व का निनानवेवाँ अध्याय समाप्त हुआ ॥ ९९ ॥

अथ शततमोऽध्यायः ॥ १०० ॥

सञ्जय उवाच—सलिले जनिते तस्मिन्कौन्तेयेन महात्मना ।
निस्तारिते द्विपत्सैन्ये कृते च शरवेश्मनि ॥ १ ॥
वासुदेवो रथात्तूर्णमवतीर्य महाद्युतिः ।
मोचयामास तुरगान्वितुन्नान्कङ्कपत्रिभिः ॥ २ ॥
अदृष्टपूर्वं तद् दृष्ट्वा साधुवादो महानभूत् ।
सिद्धचारणसङ्घानां सैनिकानां च सर्वशः ॥ ३ ॥

---

सौवाँ अध्याय ॥ १०० ॥

सञ्जय कहते हैं—हे महाराज ! इस प्रकार वीर अर्जुन के प्रभाव से रणस्थल में जल निकल आया, बाणों का घर बन गया और शत्रुदल भी जहाँ के तहाँ रुक गये । तब महात्मा केशव ने रथ से उतरकर कङ्क-पत्र शोभित बाणों से घायल घोड़ों को रथ से खोल दिया । उस समय सिद्ध-चारणगण और सब सैनिक

पदातिनं तु कौन्तेयं युध्यमानं महारथाः ।
नाऽशक्नुवन्वारयितुं तदद्भुतमिवाऽभवत् ॥ ४ ॥
आपतत्सु रथौघेषु प्रभूतगजवाजिषु ।
नाऽसम्भ्रमत्तदा पार्थस्तदस्य पुरुषानति ॥ ५ ॥
व्यसृजन्त शरौघांस्ते पाण्डवं प्रति पार्थिवाः ।
न चाऽव्यथत धर्मात्मा वासविः परवीरहा ॥ ६ ॥
शतानि शरजालानि गदाप्रासांश्च वीर्यवान् ।
आगतानग्रसत्पार्थः सरितः सागरो यथा ॥ ७ ॥
अस्त्रवेगेन महता पार्थो बाहुबलेन च ।
सर्वेषां पार्थिवेन्द्राणामग्रसत्ताञ्शरोत्तमान् ॥ ८ ॥
तत्तु पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः ।
अपूजयन्महाराज कौरवा महदद्भुतम् ॥ ९ ॥
किमद्भुततमं लोके भविताऽप्यथ वा ह्यभूत् ।
यदश्वान्पार्थगोविन्दौ मोचयामासतू रणे ॥ १० ॥
भयं विपुलमस्मासु तावधत्तां नरोत्तमौ ।
तेजो विदधतुश्चोग्रं विस्रब्धौ रणमूर्धनि ॥ ११ ॥
अथ स्मयन्हृषीकेशः स्त्रीमध्य इव भारत ।
अर्जुनेन कृते संख्ये शरगर्भगृहे तथा ॥ १२ ॥
उपावर्त्तयदव्यग्रस्तानश्वान्पुष्करेक्षणः ।
मिषतां सर्वसैन्यानां त्वदीयानां विशाम्पते ॥ १३ ॥

पुरुष अर्जुन के उस अभूतपूर्व कार्य को देखकर बारम्बार उनकी प्रशंसा करने लगे॥१।३॥कौरवपक्ष के योद्धा लोग किसी प्रकार अर्जुन को परास्त नहीं कर पाते थे, यह देखकर सभी को बड़ा आश्चर्य हो रहा था। महारथी योद्धा और राजा लोग निरन्तर अर्जुन के ऊपर बाण बरसाने लगे, परन्तु वीर अर्जुन उनके प्रहार से तनिक भी विचलित नहीं हुए॥४।६॥उन असंख्य हाथियों, घोड़ों और रथों के आक्रमण से महावीर अर्जुन व्याकुल हुए नहीं; वे सबको परास्त करके, सबसे बढ़कर, अद्भुत कौशल के साथ संग्राम करने लगे। जैसे महासागर सब नदियों के वेग को सहज ही रोक लेता है, वैसे ही वीर अर्जुन भी वीरों के चलाये हुए असंख्य बाण, गदा, प्रास आदि शस्त्रों के वार को झेलते रहे॥७।८॥ कौरवगण उस समय अर्जुन और श्रीकृष्ण के अद्भुत पराक्रम की बहुत प्रशंसा करने लगे कि अर्जुन और श्रीकृष्ण ने जो युद्ध के मैदान में शत्रुदल के मध्य रथ के घोड़े खोल दिये, और उन्हें जल पिलाकर विश्राम करा दिया, यह उनके लिए कुछ बड़ी बात नहीं थी। दोनों वीरों ने अपना उग्र और अद्भुत तेज दिखाकर हम लोगों को बहुत ही भयाकुल कर दिया है॥९।११॥ हे महाराज! उस समय अश्वविद्या में निपुण कृष्णचन्द्र ने सारी शत्रुसेना के सम्मुख ही उस अर्जुन-रचित बाणों के घर में घोड़ों को ले जाकर उनकी थकान मिटाई, अपने हाथों से उनके शरीर के शल्य निकाले और

तेषां श्रमं च ग्लानिं च वमथुं वेपथुं व्रणान् ।
सर्वं व्यपानुदत्कृष्णः कुशलो ह्यश्वकर्मणि ॥ १४ ॥
शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान्हयान् ।
उपावर्त्य यथान्यायं पाययामास वारि सः ॥ १५ ॥
स ताँल्लब्धोदकान्स्नाताञ्जग्धान्नान्विगतक्लमान् ।
योजयामास संहृष्टः पुनरेव रथोत्तमे ॥ १६ ॥
स तं रथवरं शौरिः सर्वशस्त्रभृतां वरः ।
समास्थाय महातेजाः सार्जुनः प्रययौ द्रुतम् ॥ १७ ॥
रथं रथवरस्याऽऽजौ युक्तं लब्धोदकैर्हयैः ।
दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्विमनसोऽभवन् ॥ १८ ॥
विनिःश्वसन्तस्ते राजन्भग्नदंष्ट्रा इवोरगाः ।
धिगहो धिग्गतः पार्थः कृष्णश्चेत्यब्रुवन्पृथक् ॥ १९ ॥
तत्सैन्यं सर्वतो दृष्ट्वा लोमहर्षणमद्भुतम् ।
त्वरध्वमिति चाऽऽक्रन्दन्नैतदस्तीति चाऽब्रुवन् ॥ २० ॥
सर्वक्षत्रस्य मिषतो रथेनैकेन दंशिनौ ।
बालः क्रीडनकेनेव कदर्थीकृत्य नो बलम् ॥ २१ ॥
क्रोशतां यतमानानामसंसक्तौ परन्तपौ ।
दर्शयित्वाऽऽत्मनो वीर्यं प्रयातौ सर्वराजसु ॥ २२ ॥
तौ प्रयातौ पुनर्दृष्ट्वा तदाऽन्ये सैनिकाऽब्रुवन् ।
त्वरध्वं कुरवः सर्वे वधे कृष्णकिरीटिनोः ॥ २३ ॥

---

मालिश की, नहलाया, टहलाया और दाना-पानी खिलाया-पिलाया॥१२-१५॥ जब घोड़े नहाकर और खा-पीकर विश्राम कर चुके तब श्रीकृष्ण ने उन्हें फिर उसी बहुमूल्य रथ में जोत दिया। अर्जुन सहित श्रीकृष्ण उस रथ पर बैठकर शीघ्रता के साथ आगे बढ़े। कौरवपक्ष के वीरों ने जब देखा कि महावीर अर्जुन के घोड़े जल पीकर, थकान मिटाकर, फिर रथ को ले चले तब वे बहुत ही व्याकुल हो गये। जिनके दाँत तोड़ दिये गये हों उस सर्प के समान लम्बी साँसें लेते हुए कौरवपक्ष के योद्धा लोग अलग-अलग कहने लगे—हाय! श्रीकृष्ण और अर्जुन हमारे सामने से निकल गये और हम उनका कुछ नहीं कर सके! हमें धिक्कार है॥१६-१९॥ एक ही रथ पर चढ़े हुए, कवचधारी, शत्रुनाशन अर्जुन और श्रीकृष्ण क्रीड़ा सी करते हुए अनायास, शत्रुसेना का नाश करते चले जा रहे हैं। जैसे कोई बालक खिलौनों से खेले वैसे ही अनायास अपना पराक्रम दिखाकर और हमारे बल को तुच्छ करके वे चले जा रहे हैं हम सब चिल्ला रहे हैं। हम सब राजाओं ने यत्न किया था, पर उन्हें रोक नहीं सके॥२०-२२॥ हे कुरुकुल-तिलक! श्रीकृष्ण और अर्जुन को निकल गया देखकर अन्यान्य सैनिक चिल्लाकर कहने लगे—हे कौरवो! वह देखो, कृष्ण-अर्जुन सब योद्धाओं के सम्मुख ही रथ हाँककर जयद्रथ के समीप जा रहे हैं। इसलिए तुम लोग श्रीकृष्ण और अर्जुन को मारने का शीघ्र यत्न करो। हे महाराज!

रथयुक्तो हि दाशार्हो मिषतां सर्वधन्विनाम् ।
जयद्रथाय यात्येष कदर्थीकृत्य नो रणे ॥ २४ ॥
तत्र केचिन्मिथो राजन्समभाषन्त भूमिपाः ।
अदृष्टपूर्वं संग्रामे तद् दृष्ट्वा महदद्भुतम् ॥ २५ ॥
सर्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः ।
दुर्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी ॥ २६ ॥
विलयं समनुप्राप्ता तच्च राजा न बुध्यते ।
इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत ॥ २७ ॥
सिन्धुराजस्य यत्कृत्यं गतस्य यमसादनम् ।
तत्करोतु वृथादृष्टिर्धार्त्तराष्ट्रोऽनुपायवित् ॥ २८ ॥
ततः शीघ्रतरं प्रायात्पाण्डवः सैन्धवं प्रति ।
विवर्त्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः ॥ २९ ॥
तं प्रयान्तं महाबाहुं सर्वशस्त्रभृतां वरम् ।
नाऽशक्नुवन्वारयितुं योधाः क्रुद्धमिवाऽन्तकम् ॥ ३० ॥
विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः ।
यथा मृगगणान्सिंहः सैन्धवार्थे व्यलोडयत् ॥ ३१ ॥
गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत् ।
बलाकाभं तु दाशार्हः पाञ्चजन्यं व्यनादयत् ॥ ३२ ॥
कौन्तेयेनाऽग्रतः सृष्टा न्यपतन्पृष्ठतः शराः ।
तूर्णात्तूर्णतरं ह्यश्वाः प्रावहन्वातरंहसः ॥ ३३ ॥

उस समय कोई कोई राजा यह अद्भुत दृश्य देखकर कहने लगे—हाय! दुर्योधन के दोष से ही आज महाराज धृतराष्ट्र, उनका वंश, सारी सेना और सब क्षत्रिय नष्ट-भ्रष्ट हो रहे हैं तथा इस प्रकार सम्पूर्ण पृथ्वी उजड़ी जा रही है, किन्तु राजा दुर्योधन यह नहीं समझते॥२३।२७॥ किसी किसी ने कहा—सिन्धुराज जयद्रथ अब किसी प्रकार नहीं बच सकते। अदूरदर्शी दुर्योधन को उनके निमित्त जो कुछ अन्तिम कर्तव्य हो सो कर लेना चाहिए॥२७।२८॥ इसी समय महावीर अर्जुन बिना थके घोड़ों से युक्त रथ पर सवार होकर बड़े वेग से जयद्रथ की ओर जाने लगे। उन शस्त्रधारियों में श्रेष्ठ और क्रुद्ध काल के समान महावीर अर्जुन को कौरवपक्ष के वीरगण किसी प्रकार न रोक सके॥२९।३०॥ शत्रुदमन अर्जुन जयद्रथ के समीप पहुँचने के लिए, मृगों पर टूटकर उनका संहार करनेवाले सिंह की भाँति, कौरव-सेना को भगाने लगे। सैन्यसागर में प्रवेश होकर वासुदेव स्फूर्ति के साथ घोड़ों को हाँकने और पाञ्च-जन्य शङ्ख की ध्वनि करने लगे। अर्जुन के रथ के घोड़े उस समय इतनी शीघ्रता से चले जा रहे थे कि अर्जुन जिन बाणों को छोड़ते थे वे निशाने पर पीछे पहुँचते थे और रथ आगे बहुत दूर निकल जाता था॥३१।३३॥ उसी समय फिर अनेक राजाओं और महारथियों ने, जयद्रथ वध के लिए उद्युक्त, अर्जुन को चारों ओर से घेर लिया। इस प्रकार सब सैनिकों

